अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ३ ॥

॥ इति तृतीयोऽनुवाकः ॥

## चतुर्थोऽनुवाकः

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ४ ॥

॥ इति चतुर्थोऽनुवाकः ॥

## पञ्चमोऽनुवाकः

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ५ ॥

॥ इति पञ्चमोऽनुवाकः ॥

## षष्ठोऽनुवाकः

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ६ ॥

॥ इति षष्ठोऽनुवाकः ॥

## सप्तमोऽनुवाकः

अन्नं न निन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणँ प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभि र्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ७ ॥

॥ इति सप्तमोऽनुवाकः ॥

## अष्टमोऽनुवाकः

अन्नं न परिचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभि र्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ८ ॥

॥ इति अष्टमोऽनुवाकः ॥

## नवमोऽनुवाकः

अन्नं बहु कुर्वीत । तद् व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ९ ॥

॥ इति नवमोऽनुवाकः ॥

## दशमोऽनुवाकः

न कंचन वसतौ प्रत्याचक्षीत । तद् व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नँ राद्धम् । मुखतोऽस्मा अन्नँ राध्यते । एतद्वै मध्यतोऽन्नँ राद्धम् । मध्यतोऽस्मा अन्नँ राध्यते । एतद्वा अन्ततोऽन्नँ राद्धम् ।

अन्ततोऽस्मा अन्नँ राध्यते । य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीस्समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत मानवान् भवति । तन्नम इत्युपासीत । नम्यतेऽस्मै कामाः । तद् ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद् ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तस्सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतांज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसंचरन् । एतत्साम गायन्नास्ते । हा ३ वु हा ३ वु हा ३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादो २ ऽहमन्नादो २ ऽहमन्नादः । अहँ श्लोकक‍ृ दहँ श्लोकक‍ृ दहँ श्लोककृत् । अहमस्मि प्रथमजा ऋता ३ स्य । पूर्वं देवेभ्यो अमृतस्य ना २ भाइ । यो मा ददाति स इदेव मा वाः । अहमन्नमन्नमदन्तमा ३ द्मि । अहं विश्वं भुवनमभ्यभवाम् । सुवर्ण ज्योतीः । य एवं वेद । इत्युपनिषत् ॥ १० ॥

॥ इति दशमोऽनुवाकः ॥

॥ इति भृगुवल्ली समाप्ता ॥

॥ समाप्ता च सस्वरा तैत्तिरीयोपनिषत् ॥

* * *

# तै त्ति री यो प नि ष त्

[तैत्तिरीयारण्यके पञ्चमः प्रश्नः]

## शिक्षावल्ली

### प्रथमोऽनुवाकः

[उपक्रमशान्तिपाठः]

**शं नो मित्रश्शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद् वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ओं शान्तिः शान्तिः शान्तिः ।।**

**।। इति प्रथमोऽनुवाकः ।।**

## प्रतिपदार्थदीपिका

**[भारद्वाजरामानुजाचार्यविरचिता]**

**[मङ्गलाचरणम्]**

श्रीशेषशङ्खादियुतो योऽवतीर्णो हरिर्भुवि ।<br>
तं वन्दे रामनामानं रावणस्य कुलान्तकम् ।। १ ।।<br>
श्रीशं श्रियं शठरातिं भाष्यकारादिदेशिकान् ।<br>
पूर्वान्वन्दे गुरून् वात्स्यान्[1] श्रीनिवासावधीनहम् ।। २ ।।<br>
भाष्यकारं यतिपतिं श्रीशतत्वप्रकाशकम् ।<br>
नत्वा हृद्यां तैत्तिरीयश्रुतेर्व्याख्यां करोम्यहम् ।। ३ ।।

---

१. वात्स्यान् - श्रीवत्सगोत्रोद्भवान् ।

तैत्तिरीयोपनिषदन्तर्गतचित्तिनामक प्रथमाध्याये उपक्रमोपसंहारयोः चित्तिस्स्रुगित्याद्यनुवाकैः कर्मकाण्डस्य प्रतिपादितत्वात् मध्ये पुरुषसूक्ताद्यनुवाकैः श्रियःपतिरेव परं तत्त्वमिति तदुपासनैव मोक्षमार्गः इति मध्ये उक्तमपि प्रथमाध्यायस्य विशेषतः धर्मकाण्डप्रतिपादकत्वात् - उपक्रमोपसंहारयोः ब्रह्मकाण्डप्रतिपादना (कत्वा) भावात् पूर्वाचार्यैः यथा न व्याख्यातः तथा *सह नौ यशः* इत्यादिकर्मकाण्डप्रतिपादकशिक्षावल्लीनामकद्वितीयाऽध्यायोऽपि मया न व्याख्यातः । तथापि तदर्थज्ञानमप्यावश्यकमिति चेत् अस्मत्पूर्वाचार्यरङ्गरामानुजचार्यकृत-भाष्यमत्र तदर्थविद्भिर्लेख्यम् ।।

## तैत्तिरीयोपनिषद्भाष्यम् (मिताक्षरा)

**[कौशिकगोविन्दराजविरचितम्]**

**[गुरुवन्दनम्]**

वेदाय वेदवेद्याय वेदव्यासाय विष्णवे ।
मुनये लक्ष्मणार्याय करोमि सततं नमः ।।

**[प्रतिज्ञा]**

श्रीमल्लक्ष्मणयोगीन्द्रसूक्तिसूचितया दिशा ।
तैत्तिरीयोपनिषदां वृत्तिं कुर्वे मिताक्षराम् ।।

उक्तानि प्रथमे काण्डे दर्शपूर्णमासादीनि विश्वसृजामयनपर्यन्तानि कर्माणि । तदाराध्यतत्फलप्रद-परमात्मस्वरूप-तदुपासन-तत्फलानि निरूपयितुं द्वितीयमौपनिषदं काण्डमारभ्यते ।

उप ब्रह्मसमीपे निषीदन्ति इत्युपनिषदः परब्रह्मप्रतिपादिका विद्या तास्त्रय्यो भवन्ति - सांहित्यो याज्ञिक्यो वारुण्यश्चेति । अधिलोकादिपञ्चमहासंहिता भावनाप्रधानाः सांहित्यः शं नो मित्र इत्यारभ्य द्वादशानुवाकाः एतत्काण्डसमाननाम्न्यः काण्डदेवताश्च सांहित्य उपनिषद उच्यन्ते ।

सह नाववतु इत्याद्याः त्रयोनुवाकाः वारुण्य उपनिषदः वरुणनाम्ना ऋषिणा स्वपुत्रं प्रति प्रोक्ताः। देवता च तत्काण्डसमाननाम्न्यः ।।

अम्भस्य पारे इत्यारभ्य समस्तप्रश्नो याज्ञिक्य उपनिषदो यज्ञात्मनाऽभिहिता नारायणेन पूर्ववत्समाननाम्न्यो देवताः ।

तत्र प्रथमं ब्रह्माध्येष्यमाणो ब्रह्मचारी तद्विघ्नशान्तिं प्रार्थयते - **शं न्न** इत्यादि । मित्रावरुणौ देवताविशेषौ प्रसिद्धौ मित्रः **नः** अस्माकमाचार्यस्य ब्रह्मचारिणश्च **शं** सुखं भवतु

अविघ्नाध्ययनसम्पत्तिप्रदानेन अनुकूलो भवतु इत्यर्थः । वरुणोपि नः शं भवतु । अत्र मित्रो हरन्दनयन्वरुणो रात्रिमिति[१] तावुभौ तत्कार्ययोः अहोरात्रयोः सुखं प्रार्थयते । **अर्यमा** अपि नः शं भवतु । आदित्योऽयमर्यमा कर्मसाक्षी इन्द्रोऽपि नः शं भवतु । **इन्द्रः** - यागेश्वरः, **बृहस्पतिः** - ज्ञानेश्वरः नः शं भवतु । उरुः क्रमः क्रमणं यस्य असौ उरुक्रमः सर्वस्वामी विष्णुश्च नः शं भवतु । **नमो ब्रह्मणे** परस्मै सर्वानन्दकन्दाय येन विना तृणाग्रमपि न चलति । हे **वायो ! ते** - तुभ्यं नमः । वायुशब्देनात्र तदभिव्यक्तो वेदात्म-शब्द उच्यते, तस्य प्रत्यक्षत्वात् ते इति युष्मच्छब्दोपादानम् । तदेवाह - **त्वमेव** अस्माकं **प्रत्यक्षं** शब्द**ब्रह्मासि** । तस्मात् **त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि** - त्वम् अस्माकं शं भव इति शेषः । वाग्भिः तथ्यं ऋतं कर्मभिः तथ्यं सत्यम् उभयोरुपादानमुदारार्थं वाक्कर्मभ्यां मिथ्यात्वस्य अवश्यपरिहर्तव्यत्वात् । **ऋतं सत्यम्** इति क्रियाग्रहणं तदुच्यमानं ब्रह्म **मामवतु** रक्षतु, अध्ययनप्रमादेभ्य रक्षतु इत्यर्थः । **तत्** तथोच्यमानं ब्रह्म **वक्तारम्** - आचार्यम् **अवतु** - अध्ययनप्रमादेभ्योऽभिरक्षतु । आवश्यकत्वज्ञापनाय पुनराह - **अवतु माम्** । **अवतु वक्तारम्** । इति शान्तिः प्रत्यूहशमनमस्त्विति शेषः । दार्ढ्याय त्रिसूक्तिः ।।

## प्रकाशिका

**[श्री रङ्गरामानुजमुनिविरचिता]**

**[मङ्गलाचरणम्]**

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ।। १ ।।
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
तैत्तिरीयकवेदान्तविवृत्तिं करवाण्यहम् ।। २ ।।

परविद्यामारभमाणो विघ्नशान्त्यै देवताः प्रार्थयते - **शं नः** इति । सूर्यः वरुणः, अर्यमाख्यादित्यविशेषः, **इन्द्रः**, **बृहस्पतिः**, महता विक्रमाख्यपदविन्यासविशेषेण युक्तो विष्णुश्च सुखप्रदा भवन्तु इत्यर्थः ।

**नम** इति । **नमो ब्रह्मणे** वेदाय नम इत्यर्थः । वेदाक्षराभिव्यञ्जकवायुं प्रार्थयते - नमस्ते इत्यादिना । **प्रत्यक्षं ब्रह्मेति** - जगज्जीवनहेतुतया बृहत्वगुणशालित्वे वायुब्रह्मणोः

---

१. मित्रोहरजनयद्वरुणो इति स्यात् ।

अविशिष्टेऽपि (अविशेषेऽपि) वायोः प्रत्यक्षत्वं विशेष इति भावः । **ऋतम्** इति । **ऋतत्वम्** अपभ्रंशराहित्यलक्षणं शब्दसत्यत्वम् । **सत्यमिति** । सत्यत्वञ्च यथावस्थितार्थकथनरूपमर्थसत्यत्वं इति न पौनरुक्त्यम् । **तन्माम् अवतु** इति । अधीयमानं ब्रह्म अध्येतारं **मामवतु** । **तद्वक्तारम्** इति । अध्यापयितारं च विघ्नेभ्यो रक्षत्वित्यर्थः । तमेवार्थं भिन्नानुपूर्वकाभ्यां ताभ्यामेव पदाभ्याम् आदरातिशयात् प्रार्थयते - **अवतु माम्** । **अवतु वक्तारम्** इति । **शान्तिः शान्तिः शान्तिः** । विघ्नानाम् अस्तु इति शेषः ।।

## तैत्तिरीयोपनिषद्भाष्यम्

**[श्रीकूरनारायणमुनिविरचितम्]**

यस्य हि आनन्दपर्यन्ता युवत्वप्रमुखा गुणाः ।
अप्रमेयतयाम्नाताः तं श्रीशं संश्रयेमहि ।।
सांहितीष्वपि सन्धाता सर्वेशः प्रतिपाद्यते ।
वारितावरुणो योसौ वारुणो वारुणीष्वपि ।।

इह खलु संसारावर्तपरिवृत्तिपरिश्रान्तमानसैस्तदुत्तरणोपायबुभुत्सुभिः सर्वैश्चेतनैः सर्वपुरुषार्थसार्थवाहकाः नित्यनिर्दोषा वेदास्तावत् समाश्रयणीयाः । तत्रापि मुमुक्षुभिः विशेषतः त्रय्यन्तस्सेव्यः । तत्रापि तैत्तिरीयारण्यकमध्यपातिन्यः सांहित्यो वारुण्यो याज्ञिक्यस्संसारिणां शरणं, तासां नारायणस्वरूपरूपगुणविभूत्यादिषु तात्पर्यातिशयात् । आधिलौकिक्यादि पञ्चमहासंहितासु भावनानुसन्धानप्रधानः सांहित्यः *शन्नो मित्र* इत्यारभ्य द्वादशानुवाकाः । देवता च अनुसन्धाता सर्वेश्वर इति देवतानुक्रमण्यां स्मर्यते । तत उत्तरास्त्रयोनुवाकः । वारुण्य उपनिषदः, वरुणनाम्ना ऋषिणा प्रोक्तत्वात् । देवता च सर्ववरणशीलो वारुणस्स्मृतः । *अम्भस्य पारे* (महा.ना.१) इत्यारभ्य समस्तः प्रश्नो याज्ञिक्य उपनिषदः, यज्ञनामभगवता नारायणेन दृष्टत्वात् । देवता च स एव । तत्र तावत्सांहित्यो वारुण्यश्च व्याख्यायन्ते । सर्वासु परविद्यासु ब्रह्मोपासनस्य परप्राप्तिः फलत्वेनोपदिश्यते । यथा *ब्रह्मविदाप्नोति परम्* (तै.आन.१) इति । ननु - *आत्मा द्रष्टव्य* इति - आत्मा द्रष्टव्य[१] इत्यादि विध्यर्थत्वोत् इयं फलश्रुतिः अर्थवादो भवेत् । नैवं, प्रकरणाद्यभावे कथं अस्याः परार्थता । सर्ववेदान्तप्रत्ययन्यायेन[२] सर्वासां विद्यानामैक्यदर्शनात् परार्थत्वमिति चेन्न गुणोपसंहारपादे[३]

---

१. *आत्मा वा अरे द्रष्टव्यो श्रोतव्यो मन्तव्यो निदिध्यासितव्यः* (बृ.उ.६.५.६) इति श्रुतिपाठः ।

२. *सर्ववेदान्तप्रत्ययन्यायः* - सर्वशाखोक्तम् एकं उपासनम् इति, अनेकशाखासु प्रत्यभिज्ञायमानानां उपासनानां ऐक्यप्रतिपादको न्यायः ।

३. *गुणोपसंहारपादः* - ब्रह्मसूत्रस्य तृतीयाध्यायस्य तृतीयः पादः ।

विद्यानां भेदस्य प्रतिपादितत्वात् । (सर्वविद्यानाम् ऐक्यं न सम्भवेत्) विद्यानां कर्माङ्गत्वादिकं भाष्य एव निरस्तम् । न च कल्पसूत्रकारः कर्मांगत्वम् आसाम् उपदिशति । आसु परविद्यासु सर्वाश्रमिणां अनाश्रमिणश्च विधुरादेरधिकारित्वं सूत्रकारेण निर्णीतम् । तस्मात् स्वतन्त्रोयं परमपुरुषार्थरूपो मुमुक्षूणामेव अपूर्वार्थोऽत्र विधीयते । परस्य ब्रह्मणः समीपे वाचकतया निषीदन्तीत्युपनिषदः। परब्रह्मप्रतिपादकत्वात् तत्प्राप्ति - हेतुत्वाञ्च परविद्या एताः । तत्र तावत्प्रथमेन अनुवाकेन परविद्यामारभमाणः तत्प्रत्यूहशान्त्यर्थं (योगिसुमुखा) मित्रवरुणादिदेवताः प्रार्थयते । **शंनो मित्र** इत्यादिना । **नः** - अस्माकं, आचार्यस्य मम सब्रह्मचारिणां च । **मित्रः** - सर्वस्य मित्रभूतः । मेद्यति स्निह्यति इति **मित्रः** । (तथा सर्वस्य च अहं मित्रमस्मीति) प्रकाशादिदानेन सर्वोपकारकस्सूर्यः । **शम् - सुखं भवतु** - सुखहेतुर्भवतु इत्यर्थः। **शं वरुणश्च** तथा पाशैरावृणोतीति वरुणः । अविघ्नेनाध्ययनसम्पत्तिमुखेन विद्यालाभोऽत्र सुखम् । मित्रोऽहरजनयद्वरुणो रात्रि[1] मित्येतदुपलक्षितयोरहोरात्रयोः सुखमभ्यर्थयते । **अर्यमा** - आदित्यविशेषः । इयर्ति अस्ताचलं गच्छतीति अर्यमा। *ऋगतौ* (धा.पा.१९०८) इति धातुः । *असौ वादित्योर्यमा* (तै.सं.२-३-४-१) इति । कर्मणामीश्वरत्वं अत्र विवक्षितम् । एवमादयोपि सुखहेतवो भवन्तु । **इन्द्रः**- वर्षादिप्रदानेनाद्ध्येतृणां पोषकः । **बृहस्पतिः** - ज्ञानपोषकः । **विष्णुः** - व्यापनशीलः । विश्वं वेवेष्टि व्याप्नोतीति विष्णुः *विष्लृ व्याप्तौ* (धा.पा.१०९५) इति धातुः । सर्वकालं सर्वाणि भूतानि आत्मतया व्याप्य नियच्छन्परमशेषी । **उरुक्रमः** इति व्याप्तेः फलं दर्शयति । विश्वमाक्रम्य स्व वशे कुर्वीत्यर्थः । **ब्रह्मणे** - वेदात्मने । **नमः** । वाति गच्छतीति वायुः । *वा गतिगन्धनयोः* (धा.पा.१०५०) इति धातुस्मरणात् । हे वायो । तुभ्यं नमः । वेदान्तरं वेदाभिव्यक्तिहेतुर्वायुः नमस्क्रियते । सर्वे शब्दाः वाय्वधीनाभिव्यक्तयः । तस्माद् ब्रह्माभिव्यक्तिहेतुत्वात् **त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि** - त्वदधीनाभिव्यक्तिकत्वात् त्वामेव ब्रह्मवदिष्यामि । तस्मात् त्वमपि नः शंभव इति शेषः । **ऋतं वदिष्यामि - ऋतम्** - सुकृतस्य कर्मणः प्रतिपादकं, **सत्यं** - सत्यस्य परब्रह्मणः प्रतिपादकं च, वेदात्मानं त्वां वदिष्यामि । **तत्** - तथा उच्यमानं, आचार्यानुवर्तनादिशास्त्रोक्त - प्रकारेणाधीयमानम् । माम् ! **अवतु** - रक्षतु । **तद्वक्तारमवतु** - हृदयम् अनुप्रविश्य तिष्ठतु । अथवा वक्तृत्वं आचार्यत्वं, तत् मम करोतु । *तन्मामवतु तद्वक्तारमवतु* - इति वचनकाले यद्रक्षणं तत्प्रार्थितम् । इदानीं सर्वदा रक्ष्णं प्रार्थ्यते । **अवतु मां** - सर्वदा अवचनकालेपि । **अवतु वक्तारं** - सर्वदा

---

१. *मैत्रं वा अहर्वाणी रात्रीः* (तै.सं.२-१-७-३) इति श्रुतिः ।

वक्तृत्वं आचार्यत्वं वा मम करोतु । **शान्तिः शान्तिः शान्तिः** - सुखं प्रत्यूहशमनं वा । अस्त्विति शेषः । अभ्यास आदरातिशयार्थः, तापत्रयशान्त्यर्थो वा ।।

## आनन्दभाष्यम्

**[रामानन्दाचार्यविरचितम्]**

**[मङ्गलाचरणम्]**

यदानन्दांशमादाय भूतान्यानन्दवन्ति हि ।
परमानन्दरूपं तं श्रीरामं स्मृतिमानये ।। १ ।।
आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुं च मुक्तिदम् ।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्म समाश्रये ।। २ ।।
सूत्रवृत्तिकृतौ नत्वा व्यासबोधायनौ मुनी ।
श्रीमन्तं राघवानन्दाचार्यगुरुं नमाम्यहम् ।। ३ ।।
कुर्वे गुरुं नमस्कृत्य ज्ञानभक्तिदयानिधिम् ।
तैत्तिरीयोपनिषदो भाष्यमानन्दसंज्ञकम् ।। ४ ।।

निःश्रेयससाधनीभूतां परविद्यामुपदिदिक्षुराचार्यः तदध्ययनधारणादिषु प्रतिबन्धो न आपततु इत्यभिप्रायेण शरीरान्तर्गतप्राणाद्यभिमानिनीः देवताः प्रार्थयते - **शम्** इत्यादिना । **शम्** इति शब्दोऽव्ययः सुखवाची यथा तथा सुखकृद्वाच्यपि । **मित्रः**- प्राणवृत्तिरह्नश्चाभिमानी देवः सूर्यः, **नः** - अस्माकम् **शं भवतु** - सुखकृद्भवतु । यथा अस्माकम् अध्ययनाध्यापनपराणां विघ्नोपजनितो विच्छेदोऽध्ययनादिषु न भवेत् तथा चरतु इति भावः । वरुणो रात्रेः अपानवृत्तेश्चाभिमानी देवः, शं सुखकरो भवतु । भावार्थः पूर्ववत् । **अर्यमा** - द्वादशादित्येष्वेक एतन्नामादित्यविशेषः चक्षुरभिमानी देवः, **नः** अस्माकम्, **शं भवतु** सुखकृदस्तु । **इन्द्रः** - बलाभिमानी देवः, **बृहस्पतिः** - वाग्बुद्ध्यभिमानी देवश्च, नः शं भवतु प्रग्वदर्थः । **उरुक्रमः** - **उरुः** - महान्, **क्रमः** - पादविन्यासो यस्य तादृशो **विष्णुः** - पादाभिमानी देवः, **नः शं भवतु** - सुखकरो भवतु । शरीरसाध्यक्रियासु शरीरान्तर्वर्तिन्यो देवताः प्रसादनीया इति तात्पर्येण इयं प्रार्थनेति ध्येयम् ।

उपसर्गप्रशमनाय मित्रादिदेवताः संप्रार्थ्य सम्प्रति शब्दब्रह्माध्येष्यमाणं तदभिव्यञ्जकं वायुञ्चाध्यारोपितब्रह्मभावं प्रार्थयते - **नम** इति । **नमो ब्रह्मणे**[१] - शब्दब्रह्मणे वेदाय नम

---

१. सर्वक्रियाकलानां तदधीनत्वात् ब्रह्म वायुः । नमो ब्रह्मणे, नमस्ते वायो इति परोक्षप्रत्यक्षाभ्यां वायुरेव अभिधीयते । इति शाङ्करभाष्यम् ।

इत्यर्थः । **नमस्ते वायो** - हे वायो ! तुभ्यं नमः । वेदाख्याक्षरराशिः सुस्पष्टतया त्वयैव अभिव्यज्यतेऽतस्त्वां नमस्करोमीत्यर्थः । एवं वायुं नमस्कृत्य स्तौति - **त्वमेव** इति । निरतिशयबृहत्वशालि यद् ब्रह्म परमपुरुषशब्दाभिधेयं तत्तु न प्रत्यक्षं अस्माकं तथापि बृहत्त्वगुणयोगात् त्वमपि हे वायो **ब्रह्मासि** अतः प्रत्यक्षं ब्रह्म तु **त्वमेवासि** । जगज्जीवनसाधनत्वगुणयोगस्य त्वय्यपि विद्यमानत्वात् चक्षुरादि(त्वगादि) सन्निकृष्टत्वाच्च प्रत्यक्षब्रह्मता त्वयीतिभावः। अत एव त्वामेव प्रत्यक्षं ब्रह्म **वदिष्यामि** । प्रत्यक्षस्य शब्दब्रह्मणोऽभिव्यञ्जकोऽसि । प्रत्यक्षश्चासि तस्मादध्येष्यमाणं यच्छब्दब्रह्म तदपि त्वमेवासि इति वदिष्यामि इत्यर्थः । **ऋतं वदिष्यामि** - अध्येष्यमाणायामुपनिषदि यदस्खलनरूपम् ऋतं तदपि त्वदधीनमेव अतः **त्वामेव ऋतं वदिष्यामि सत्यं वदिष्यामि** । यथावस्थितार्थवदनरूपं यत्सत्यं तदपि त्वदधीनमतः सत्यमपि त्वमेव तस्मात् सत्यं वदिष्यामि । एवं वायुं स्तुत्वा यस्मै शब्दब्रह्मणे नमो विहितं पूर्वं तच्छब्दब्रह्म प्रति प्रार्थयते तस्यैव अध्येष्यमाणत्वात् - **तन्माम्** इति । तदप्येष्यमाणतया प्रकृतं ब्रह्मोपनिषदात्मकम् । **माम्** - अध्येतारं **शिष्यमवतु** - विघ्नविघातद्वारा पालयतु । तच्छब्दब्रह्म **वक्तारम्** - अध्यापयितारं गुरुम् **अवतु** - अध्यापनविहन्तारं विघ्नं दूरीकृत्य अध्यापनकुशलं करोतु । पदव्यासेन तमेवार्थं पुनरर्थयते - **अवतु माम्** - मां शिष्यम् अवतु । अवतु **वक्तारम्** - उपदेशकमाचार्यमवतु प्राग्वदर्थः । पुनः प्रार्थना आदरातिशयद्योतनार्था अध्येष्यमाणोपनिषदाख्यं शब्दब्रह्म प्रति । **ओं शान्तिः इति ।** शान्तिः अस्तु विघ्नानाम् । ओंकारेण परमात्मनःस्मरणं विघ्नशान्त्यर्थमेव कृतम् । शान्तिशब्दस्य त्रिःपाठः **आध्यात्मिक** - आधिभौतिक - आधिदैविकात्मकविघ्नत्रयनिरासार्थं (आदरातिशया) [आदरातिशयेन] वा अवगन्तव्यः।।

## सुबोधिनी

**[गोपालानन्दस्वामिविरचिता]**

**[मङ्गलाचरणम्]**

अस्ति यो हृदयकाशे पुरुषोऽयं मनोमयः ।<br>
हिरण्मयं तममृतं नित्यानन्दमुपास्महे ।।<br>
स एष सहजानन्दो भगवान् पुरुषोत्तमः ।<br>
आविरस्तु हृदम्भोजे धियं विमलयन्मम ।।<br>
यत्प्रसादसमुद्भूतविशुद्धमतिसम्पदा ।<br>
तैत्तिरीयोपनिषदां विवृतिः क्रियते मया ।।

अथ विद्यां श्रावयति, कर्मणां हि विद्यायां विनियोगः कार्यो निःश्रेयसकामेन, निःश्रेयससाधनीभूता हि विद्या मृदितमनःकषायस्यैव स्यात्, तदुपमर्दश्च अनुष्ठितैः अकामैः कर्मभिः । अकृते च विद्यायामुपयोगे गतागतश्रमफलकान्येव कर्माणि स्युः । तत्रादौ शान्तिमन्त्रः श्राव्यते, येन शान्तिमन्त्रेण पठितेन विद्याप्रत्यूहोपशमः स्यात्, ततश्च विद्यारम्भो निरन्तरायो निर्वर्तेत । **शं न** इत्यादि । शं प्रार्थ्यते मित्रादिभ्यः । **मित्रः** - सूर्यः, यः प्राणान् रश्मिभिः पुष्णाति, स एष प्राणवृत्तेः अह्नश्च अभिमानी **नः शं** प्रयच्छतु । उत्तरत्र श्रूयमाणस्य भवतु इत्यस्य वा अत्रापि सम्बन्धः, शमिति साधने साध्योपचारः, सुखकरो भवतु इति यावत् । पञ्चम्याः स्थाने छान्दसः सुप्रत्ययो वा, मित्रात् शं भवतु इति यावत् । तथा वरुणादिभ्यः शं प्रार्थ्यते । **वरुणः** अपानवृत्त्यभिमानि रात्रेश्च अभिमानी देवताविशेषः । **अर्यमा** - चक्षुषः अभिमानी **इन्द्रः** - बलाभिमानी । **बृहस्पतिः** - वाचो बुद्धेश्चाभिमानी । **उरुक्रमो विष्णुः** - यस्य क्रमणं सर्ववस्तुषु **उरु** - सर्वतोऽधिकम्, सोऽयं सर्वव्यापी विष्णुः । तत्तदभिमानिभ्यः सूर्यादिभ्यस्तत्र तत्र शिवं विष्णोश्च सर्वतः शिवं प्रार्थ्यते । अध्येष्यमाणोपनिषदात्मकं वेदं नमस्करोति - **नमो ब्रह्मणे** - नमो वेदाय । अथ वायुं प्रणिपत्य स्तौति **नमस्ते वायो** इत्यादिना । वायुरेव हि प्राणापानाद्यात्मना भूत्वा शरीरमिदं धत्ते, वायुनैव सर्वाणि इमानि विधृतानि । सर्वक्रियानिर्वहणे प्राधान्यं च तस्यैव । वायो ते नमः । स्तूयते - त्वमेव प्रत्यक्षं **ब्रह्मासि** - यत्सर्वतो बृहत्वात् ब्रह्मेति ख्यायते तदप्रत्यक्षं नः, त्वं तु नः प्रत्यक्षं ब्रह्मासि, बृहत्त्वगुणयोगात् । **त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि** - यदहं प्रत्यक्षं ब्रह्मोपनिषदात्मकं पठिष्यामि तद्ब्रह्मापि त्वमेव, वेदाक्षराणां वायोरेव ह्यभिव्यक्तिः तदेकायत्तप्रकाशो तस्मिंस्त्वमेव तदिति स्तुतिः । यदृतं स्वरवर्णाद्यस्खलनलक्षणं वदिष्यामि तदृतमपि त्वमेव इति तदृतं **त्वामेव वदिष्यामि** । यदहं सत्यं यथावस्थितार्थावबोधकं वदिष्यामि तत्सत्यमपि त्वमेवेति त्वामेव सत्यं ब्रह्म वदिष्यामि । तदिदं ब्रह्म वेदाख्यं **माम्** - अध्येतारं **वक्तारम्** - अध्यापकं च **अवतु** । आदरात्पुनराह - **अवतु माम् अवतु वक्तारम्** इति । **शान्तिः** - विघ्नानाम् अस्तु इति शेषः । त्रिःपाठ आदरात् । आध्यात्मिकादि-त्रिविधविघ्नोपशमनार्थो वा ।।

## द्वितीयोऽनुवाकः

[शिक्षार्थसङ्ग्रहः]

**शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः इत्युक्तः शीक्षाध्यायः ।। १ ।। (शीक्षां पञ्च) ।। २ ।।**

।। इति द्वितीयोऽनुवाकः ।।

**तै.भा.** - अथ शं नो मित्रादिमन्त्रवत् शीक्षाङ्गस्याध्ययनोपयोगित्वात् तदर्थोऽध्ययनकाले अवश्यं स्मर्तव्यः । अन्यथा दुष्ट शब्दस्वरतो वर्णतो वा इत्याद्युक्तरीत्या महादोषः प्रादुष्यादित्याशयेन सङ्ग्रहेण, शिक्षार्थमुपदिशति - **शीक्षाम्** इत्यादि । शिक्ष्यन्ते ज्ञानेन वर्णादयः उपादीयन्तेऽनयेति शिक्षा । शिक्षार्थं सङ्ग्रहाध्यायः । शिक्षविद्योपादाने (धा.पा.६०५) इत्यस्मात् *गुरोश्च हलः* (पा.सू.३-३-१०३) इत्यकारप्रत्ययः छान्दसं दीर्घत्वम् । तामिमां **व्याख्यास्यामः** विशेषेण मर्यादया च प्रब्रूमः । वर्णः अकारादिः, जात्येकवचनम् । अत्राहुः -

*चतुष्षष्टिस्त्रिषष्टिर्वा वर्णाः शम्भुमते मताः ।*
*प्राकृते संस्कृते वापि स्वयं प्रोक्ताः स्वयभुवा ।।*
*स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।*
*यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ।।*
*अनुस्वारो विसर्गश्च क पौ चापि पराश्रयौ ।*
*दुःस्पृष्टश्चेति विज्ञेयं ऌकारं प्लुत एव च ।।* (पा.शि.३,४,५)

इति । स्वरा उदात्त-अनुदात्त-स्वरित-प्रचयसन्नतरोच्चस्तरैकश्रुतयस्त्रिसप्तविधाः मात्राः ।

*एकमात्रो भवेद्ध्रस्वः द्विमात्रो दीर्घ उच्यते।*
*त्रिमात्रस्तु प्लुतो ज्ञेयः व्यञ्जनं त्वर्धमात्रकम् ।।* (याज्ञ.शि.१५)

इत्युक्ताः । बलानि बाह्याभ्यन्तरप्रयत्नाः । श्वासोनादो घोषोधोषोल्पप्राणो महाप्राणश्चेति । बाह्यप्रयत्नाः स्पृष्ट-ईषत्स्पृष्टतासंवृतो- विवृतश्चेत्यान्तरप्रयत्नाः । सामानि गीतयो रथन्तरादयः। सन्तानाः संहिताः, पदसंहिताक्षरसंहितावर्णसंहिताङ्गसंहिताश्चेति चतस्रः । इति शीक्षाध्यायः सङ्ग्रहेण अस्माभिरुक्तः ।।

**प्र.** - **शीक्षां व्याख्यास्यामः** इति । शिक्षाख्यवेदाङ्गस्य [1]वेदोपकारप्रकारो[1] वर्ण्यत इत्यर्थः । शीक्षा इति दीर्घश्छान्दसः । वर्णः इति । *वर्णास्त्रिषष्टिश्च चतुष्षष्टिश्शम्भुमते मताः* (पा.शि.३) इत्युक्तरीत्या अकाराद्याः **वर्णाः** । **स्वराः** - उदात्तादयः । **मात्राः** - *एकमात्रो भवेद्ध्रस्वः* (याज्ञ.शि.१५) इत्युक्तहृस्वदीर्घादिभेदाः । **बलम्** - अल्पप्राणत्व-महाप्राणत्वादिलक्षणम् । **साम** - [2]कृष्ट[2]प्रथमादिलक्षणाः सप्तस्वराः । **सन्तानः** वर्णपदसंहितादिः । एतेषां ज्ञानं शिक्षाख्यवेदाङ्गसाध्यम् । ततश्च एतज्ज्ञानं ब्रह्मविद्योपयोगीत्यर्थः । इदमुपलक्षणं

---

1. वेदोपयोगप्रकारो - अ । 2. क्रुष्ट - ग ।

वेदाङ्गान्तराणामपि । **इत्युक्तः शीक्षाध्यायः** इति । **अध्यायः** - ग्रन्थविशेषः । शीक्षाख्यग्रन्थविशेषस्य उपयोगो वर्णित इत्यर्थः ।।

**कू.भा.** - *मन्त्रो हीनस्स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।*
*स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात् ।।* (पा.शि.५२)

इति स्मृतेः स्वरवर्णादिदुष्टस्य वेदस्याभिमतासाधकत्वात् प्रत्यवायश्रवणाच्च स दोषः परिहर्तव्य इति तत्प्रतिपादनार्थं स्वरवर्णाद्यनुशासनरूपं शिक्षाशास्त्रमनुस्मारयति - **शीक्षामिति** । शिक्ष्यन्ते - ज्ञानेन निश्चीयन्ते, वर्णादयः अनयेति शिक्षा । *गुरोश्च हलः* (पा.सू.३-३-१०३) इत्यकारप्रत्ययः । छान्दसो दीर्घः । तामिमां शिक्षाम् । **व्याख्यास्यामः** - विशेषेण आख्यास्यामः, प्रब्रूमः । अथवा - शिक्षाख्यं पञ्चमं वेदाङ्गं[1] त्रय्यन्ताध्ययनसाधनत्वेनाचक्ष्महे । **वर्णस्स्वरः** - वर्णो नाम अकारादिः । जातावेकवचनम् । आहुश्च शिक्षाकारः -

*त्रिषष्टिश्च चतुष्षष्टिर्वर्णाशम्भुमते स्थिताः ।*
*प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ।*
*स्वरा विंशतिरेकश्च स्पर्शानां पंचविंशतिः ।*
*यादयश्च स्मृताह्यष्टौ चत्वारश्च यमास्स्मृताः ।।*
*अनुस्वारो विसर्गश्च क पौ चापि पराश्रयौ ।*
*दुःस्पृष्टश्चेति विज्ञेया ऌकारः प्लुत एव च ।।* (पा.शि.३,४,५)

इति । **स्वराः** - उदात्तादयो वर्णधर्माः । स्थानविशेषनिबन्धनाः ध्वनिभेदाश्चत्वारः - उदात्तानुदात्तस्वरितप्रचयाः । सप्तेत्यन्ये - उदात्तानुदात्तस्वरितप्रचयसन्नतरोच्चतरैकश्रुतयः । **मात्रा बलं** - मात्रा उच्चारणक्रियाकालस्य इयत्ता । यथा - पादमात्रा अर्धमात्रा लघुरित्यादि । आहुश्च -

*यद्व्यञ्जनान्तं यदु चापि दीर्घं संयोगपूर्वञ्च तथानुनासिकम् ।*
*एतानि सर्वाणि गुरूणि विद्यात् शेषाण्यतोऽन्यानि ततो लघूनि ।।* (तै.प्रा.२२-१४)

इति । तथा - *ऋग्विरामः पदविरामो विवृत्तिविरामः समानपदविवृत्तिविरामः त्रिमात्रो द्विमात्र एकमात्रोर्धमात्र इत्यानुपूर्व्येण* (तै.प्रा.२२-१३) इति । ऋग्विरामः - त्रिमात्रः, पदविरामः - द्विमात्रः,

---

१. *छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते ।*
*ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्र उच्यते ।।*
*शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।* इति पाणिनीयशिक्षानुरोधेन शिक्षायाः पञ्चमाङ्गत्वम् ।

विवृत्तिः - पदद्वयानुसन्धानं, तदेकमात्रं, समानपदविवृत्तिः - एकस्मिन्पदे वर्णयोरनुसन्धानम् । यथा - *प्र उगचितश्चिन्वीत* (तै.सं.५-४-११-१) इति । तथा मात्राप्रमाणे -

*चाषस्तु[1] वदते मात्रां द्विमात्रं वायसोऽब्रवीत् ।*
*त्रिमात्रन्तु शिखी रौति ह्येतन्मात्रादिलक्षणम्[2] ।।* (पा.शि.४९)

इत्यादि । बलंवायोस्स्थान (पीडन) विशेषो बलम् । यद्विशेषाद्वर्णविशेषास्तद्धर्मविशेषाश्चाविर्भवन्ति । यत्र स्थानकरणवैलक्षण्येन *उपांशु-ध्वान-निमदःउपब्दिमत्-मन्द्र-मध्यम-ताराणि[3]* (तै.प्रा.२३-५) वाचा स्थानानि सप्त जायन्ते । तत्र मन्द्रादिषु सप्त सप्त यमाः *क्रुष्टप्रथमद्वितीयतृतीय-चतुर्थमन्द्रातिस्वार्याः* (तै.प्रा.२३-१४) एषां सत्यपि स्वरत्वे बलहेतुत्वात् पूर्वत्र नोक्ताः । एते च पूर्वपूर्वदृप्ताः । द्वितीयप्रथमक्रुष्टाः त्रय आह्लारकस्वराः, *मन्द्रादयो द्वितीयान्ताश्चत्वारस्तैत्तिरीयकाः* (तै.प्रा.२३-१६-१७) । नादश्वासघोषात्मकानि चानुप्रदानानि बलनिबन्धनाः । उच्चारणे समता साम, *सामसान्त्वने* (धा.पा.१८८०) औणादिकः कनिन्प्रत्ययः । यथाहुः -

*क्रमविक्रमसम्पन्नामदुतामविळम्बिताम् ।*
*नीचोच्चस्वरसम्पन्नां वदेद्धृतवती समाम् ।।* (तै.प्रा.२३-२४)

इति। तत्र स्वराणां उदात्तादीनां सन्निवेशविशेषौ क्रमविक्रमौ । **सन्तानः** - संहिता । अथ चतस्रः संहिताः - पदसंहिता, अक्षरसंहिता, वर्णसंहिता, अङ्गसंहिता चेति । अत्राहुः-

*गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च*
*लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः ।*
*स्वरितोदात्तनीचत्वं श्वासो नादोङ्गमेव च*
एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता ।। तै.प्रा.२४-५)

अत्र वर्णादिषट्कोपादानस्य उपलक्षणार्थत्वात् सर्वमिदं संगृहीतं वेदितव्यम् तज्ज्ञाने फलं दर्शयति -

*पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ।*
*स्वरमात्राविभागज्ञो गच्छेदाचार्यसंसदम् ।।* (तै.प्रा.२४-६)

---

१. **चाषः** - चाषयति भक्षयति कणादिकमिति चाषः । स्वर्णचातकः ।

२. *नकुलस्त्वर्धमात्रकम्* (पा.शि.४९) इति पाठोऽपि दृश्यते ।

३. *करणवदशब्दममनः प्रयोगमुपांशु ।* (तै.प्रा.२३-६), *अक्षरव्यञ्जनानामनुपलब्धिः ध्वानः ।* (तै.प्रा.२३-७), *उपलब्धिर्निमदः ।* (तै.प्रा.२३-८), *सशब्दमुपब्दिमत् ।* (तै.प्रा.२३-९), *उरसि मन्द्रम् ।* (तै.प्रा.२३-१०), *कण्ठे मध्यमम् ।* (तै.प्रा. २३-११), *शिरसि तारम् ।* (तै.प्रा. २३-१२)

इति **आचार्याः** - व्यासादयः, तेषां संसदं - ब्रह्मलोकमित्यर्थः । एवं वर्णादीनां स्वरूपं स्वभावं च ज्ञात्वा यस्तथाध्यापयति अधीते वा सः ब्रह्मणस्सालोक्यं सायुज्यं गच्छति । **इत्युक्तश्शीक्षाध्यायः** इत्थं शिक्षाध्यायसंग्रहोऽस्माभिरुक्तः इति । अत्र वर्णादिविशेषाणां तत्फलस्य चानुक्तत्वात् तत्सर्वं शिक्षाशास्त्रे ज्ञातव्यं, तस्य सर्वस्य प्रसंगादवसरे स्मरणमात्रं कृतमस्माभिरिति भावः ।।

**आ.भा.** शीक्ष्यते स्वरवर्णाद्युच्चारणपद्धतिर्ज्ञायतेऽनया सा शिक्षा वेदस्य षडङ्गान्तर्गतं शिक्षाख्यमेकमङ्गभूतं शास्त्रम् । दीर्घश्छान्दसः । शिक्षाशास्त्रद्वारा वर्णस्वराद्यवगतिमान् तदुच्चारणपद्धतिज्ञश्च यथावद् वेदमध्येतुं शक्नोति यथावदधीतवेदश्च तदीयमर्थं यथावदवगच्छेत् । अर्थज्ञानस्यैव प्रधानत्वात् अन्यथा यथावदर्थानवगतौ अभीष्टसिद्धिं न गच्छेदनर्थञ्च प्राप्नुयात् । उक्तञ्च -

*मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।*

*स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ।।* (पा.शि.५२)

अतो यथावदध्ययनाय शिक्षाव्याख्यानमावश्यकमिति तद्व्याख्यानं प्रतिजानाति गुरुः **व्याख्यास्यामः** इति । व्याख्यास्यामो विशेषेण आ समन्तात् - शिक्षां कथयिष्याम इत्यर्थः । शिक्षया ये शिक्षणीयाः तानाह **वर्ण** इति । **वर्णः** - त्रिषष्टिसंख्याको मतभेदेन चतुषष्टिसंख्याको वा अकारादिरूपः । **स्वरः** - उदात्तानुदात्तस्वरितरूपः । **मात्रा** ह्रस्वदीर्घादयः । **बलम्** बाह्याभ्यन्तरप्रयत्नरूपम् अल्पप्राणत्व-महाप्राणत्वादिकम् । **साम** - समता वर्णानामुच्चारणे समवृत्तिरूपा । **सन्तानः** - संहिता । सन्धिः वर्णानाम् इत्येतत् । एतानि शिक्षाशास्त्रेण ज्ञेयानि इत्यर्थः । इति एवं रीत्या उक्तः कथितः । शिक्षाध्यायः अध्यायो ग्रन्थविशेषः शिक्षाबोधकोऽध्यायः शिक्षाध्यायः स निगदितः। अध्येष्यमाणेऽग्रिमग्रन्थेऽयमावश्यकः स्यादित्येवमर्थमिति भावः ।।

**सु.** - उपनिषदमुपदेक्ष्यन् अध्येतृणामध्ययने (उपनिषदां-पाठे) स्वरादिप्रमादो माभूदिति शीक्षाध्याय आदौ श्राव्यते । येन वेदाङ्गभूतशिक्षाध्ययनेन अवगतस्वरादिनियमतया स प्रमादो न प्रसजेत् । ननु प्रमादे कोऽनर्थः, अन्यथाप्रतिपत्तिः स्यादिति दृष्टानर्थश्च, यथावदवबोधने हि उपनिषदः प्रवृत्ताः । शीक्ष्यते अनयेति वा, वेदाङ्गभूता या शिक्षा तां **व्याख्यास्यामः** - विशेषेण अस्मिन्नस्मिन्विषये प्रवृत्तां व्याख्यास्यामः - शिक्षया के शिक्ष्यन्ते तान् निरूपयाम इति यावत् । शिक्ष्यत इति कर्मणि वा । **वर्णः** - अकारादिः **स्वरः** - उदात्तादि,

**मात्रा** - ह्रस्वाद्याः, **बलम्** - प्रयत्नविशेषः, **साम** - समता सा चोच्चारणे, **सन्तानः** - संहिता, शिक्षया-शिक्षितव्या एते । ये वर्णादयः शिक्षाशास्त्रेण यथा शिक्षणमवगन्तव्याः तेषां निरूपणलक्षणोऽयं शिक्षाध्याय उक्तः ।।

## तृतीयोऽनुवाकः

[महासंहितोपासनम्]

**सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातस्सँहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासंहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः ।। १ ।। वायुः सन्धानम् । इत्यधिलोकम् ।।**

**अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतस्सन्धानम् । इत्यधिज्यौतिषम् ।। अथाधिविद्यम् । आचार्यः पूर्वरूपम् ।। २ ।।**

**अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनँ सन्धानम् । इत्यधिविद्यम् ।। अथाधिप्रजम् । माता पूर्वरूपम् । पिता उत्तररूपम् । प्रजा सन्धिः। प्रजननँ सन्धानम् । इत्यधिप्रजम् ।। ३ ।।**

**अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुः उत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् ।।**

[संहितोपासनाफलम्]

**इतीमा महासँहिताः । य एवमेता महाँसँहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण[1] लोकेन ।। ४ ।। सन्धिराचार्यः पूर्वरूपमित्यधिप्रजं लोकेन ।। ३ ।।**

।। इति तृतीयोऽनुवाकः ।।

**तै.भा.** - अथ शिष्याचार्ययोः शान्त्यर्थे मन्त्रः **सह नौ यश** इति । **नौ** - आवयोः शिष्याचार्ययोः **सह** - समानं **यशः** ब्रह्मवर्चसं च अस्तु । वेदाध्ययनजं तेजो ब्रह्मवर्चसम्, ब्रह्महस्तिभ्यां वर्चसः (पा.सू.५.४.७८) इति समासान्तो अच् प्रत्ययः ।

---

१. सुवर्गेण इत्यपि पाठोऽस्ति । कूरनारायणीयभाष्ये सुवर्गेण इति पाठ स्वीकृतः ।

अथ अधीयमानवेदसंहितासु भावनाविशेषाः फलाय विधीयन्ते - **अथात** इत्यादि । **अथ** - अध्ययनगुणानन्तरमत एव हेतोः संहितायाः पूर्वोक्तायाः सम्बन्धिनीम् उपनिषदम् उप फलसमीपे निषीदति इत्युपनिषत्, *सत्सूद्विष.....* (पा.सू.३-२-६१) इत्यादिना क्विप्, उपासामित्यर्थः । **व्याख्यास्यामः** - वक्ष्यामः । **अधिलोकम्** इत्यादिषु अव्ययं विभक्त्यादिना विभक्त्यर्थेऽव्ययीभावः[१] । लोकादिषु **पञ्चस्वधिकरणेषु** संहिता भाव्यन्तामिति शेषः । पूर्वोक्तपदार्थेषु संहितासु लोकादिभावना कर्तव्या इत्यर्थः । भाव्यमानसंहिताः प्रशंसन्ति - **ता महासंहिता इत्याचक्षते** इति । **ताः** अधिकरणभेदेन पञ्चधा भिन्नाः संहिताः महाधिकरणकत्वात् **महासंहिता इत्याचक्षते** इति । तद्विदः...... त इत्यादिना त्वम् (?) । **अथाधिलोकम्** । **अथ** इत्यारम्भे लोकाधिकरणसंहितोपासनं प्रस्तूयते इत्यर्थः । संहितायाः पूर्वोत्तरसन्धानसापेक्षत्वादाह **पृथिवी** इत्यादि । अध्ययनकाले यो वर्णो येन वर्णेन सन्धीयते सहोच्चार्यते, तयोः **पूर्वरूपं** - पूर्ववर्णः पृथिवीमधोवर्तित्वात्, **द्यौः** - स्वर्गः **उत्तररूपम्** उत्तरवर्णः उपरिवर्तमानत्वात् **सन्धिः** । अन्तरालम् **आकाशः,** तस्य द्यावापृथिवीमध्यवर्तित्वात् **सन्धानः** पूर्वोत्तरयोः सहोच्चारणार्थो यत्नः वायुना विनाकाशाप्रतीतेः सन्धानत्वं पूर्वोत्तरवर्णौ द्यावापृथिवीभावयित्वा सहोच्चारणे प्रयत्नं वायुं भावयित्वा संहितामाकाशं भावयेत् इत्यर्थः । संहरति **इत्यधिलोकम्** इति । उक्तप्रकारेण लोकविषयसंहितोपासनमुक्तम् इत्यर्थः । एवमुत्तरेष्वपि योजना कर्तव्या ।

**अथाधिज्योतिषम्** इत्यादि । योगविभागात् समासान्तो प्रत्ययः । अग्रे कृत्वं नत्वा ज्योतिष्ट्वम् (?)

*अग्नौ प्रास्ताहुतिसम्यगादित्यमुपतिष्ठते ।*

*आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ।।* (म.स्मृ.३.७६)

इति पूर्वोत्तरत्वम् अग्न्यादित्ययोः। वैद्युतो अग्निः वृष्टिमुत्पादयति इति प्रसिद्धम् ।

**अथाधिविद्यम्** इत्यादि । आचार्यान्तेवासिनोः पूर्वोत्तरत्वं स्पष्टम् । **विद्या** - वेदः, **प्रवचनम्** - अध्यापनम् ।

**अथाधिप्रजाम्** इत्यादि प्रजा निषिच्यमानं शुक्लं प्रजननं तदनुकूलव्यापारः । **अथाध्यात्मं** (कपोल) तत्प्रदेशो हनुः । **अधार हनुः** - अधो वर्तमाना । **उत्तरा** - उपरिस्था । **वाक्** - वाणी । तस्याः शरीरनिर्विद...... आत्मत्वम्...... आत्मा देह इति कोशपाठात् ।

---

१. अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु (पा.सू. २-१-६) इति सूत्रपाठः ।

अध्यात्मम् इति समासान्ते टच्, *नस्तद्धिते* (पा.सू.६-४-१४४) इति टिलोपः । उपसंहरति इतीति । व्याख्यातार इति शेषः ।

उक्तोपासनपञ्चकस्य फलानि दर्शयति - **य एवम्** इति । इहोपासीत छागपशुन्यायेन सामान्यशब्दस्य विशेषे पर्यवसानौचित्यात् उत्तरत्र स वेद ब्रह्मेति स्थाने इति प्राचीनयोग्योपास्व इति श्रवणात् । एतेन अदर्शनान्नवेदनं फलसाधनमिति प्रत्युक्तम् । अस्तु वा वेदनज्ञानमात्रं तस्य ऐहिकत्वाभावेप्यामुष्मिकत्वसम्भवात् । **सन्धीयते** - संयुज्यते । अत्रोपासनसम-संख्यात्वादेकैकस्य उपासनस्य एकैकं फलम् इत्यवगम्यते । तत्रापि अर्थाद्वा कल्पनैकदेशत्वादिति...... येन स्रुवेणावद्यति हस्तेनावद्यति स्फेनावद्यति इत्यत्राज्यपुरोडाशमांसानामिव अधिप्रजोपासनस्य प्रजार्थात्मोपासनस्य पशवः अधिविद्योपासनस्य **ब्रह्मवर्चसम्** अधिज्योतिषोपासनस्यान्नम् अधिलोकोपासनस्य स्वर्गलोक इत्यन्वयो ग्राह्यः ।।

**प्र.** - विद्याफलं गुरुशिष्योभयगतमस्त्विति गुरुशिष्यौ प्रार्थयेते - **सह नौ** इति । ब्रह्मवर्चसं यशश्च आवयोः सहास्तु इत्यर्थः ।

**अथात** इति । लोकज्योतिर्विद्याप्रजाशरीररूपेषु-पञ्चसु अधिकरणेषु संहिताशब्दितसन्धिविषयकरहस्योपदेशान् व्याकरिष्याम इत्यर्थः । **अधिलोकम्** । [1]विभक्त्यर्थेऽव्ययम्[1] इति सप्तम्यर्थे समासः । एवमुत्तरत्रापि । अधिज्यौतिषं अध्यात्मम् इत्यत्र *अव्ययीभावे शरत्प्रभृतिभ्यः* (पा.सू.५-४-१०७), *अनश्च* (पा.सू.५-४-१०८) इति समासान्तः टच् । लोकादिषु पञ्चस्वधिकरणेषु अध्यस्यमानाः संहिताः महासंहिताः महच्छब्दः पूज्यवचनः । पूज्या इत्यर्थः । अ+उ=ओ इति वर्णसंहितायां पूर्वापरौ वर्णौ पूर्वापररूपे, श्लिष्टोच्चारणलक्षणः, *परः संनिकर्षः संहिता* (पा.सू.१-४-१०९) इत्युक्तः सन्धिः, तदनुकूलयत्नलक्षणः सन्धान इति संहितागतानां चतुर्णामवयवानां लोकादिषु पञ्चस्वधिकरणेषु दृष्टिक्रमं दर्शयति **अथाधिलोकम्** इत्यादिना । **अधिलोकं** उच्यत इति शेषः । **अथ**शब्दो वाक्योपक्रमे । **वायुः सन्धानम्** इति । वायोः पूर्वोत्तरलोकसञ्चारिततया सन्धानत्वमिति भावः । **इत्यधिलोकम्** इति । उक्तमिति शेषः । एवमुत्तरत्रापि । **अग्निः** इत्यादि । *अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते* (म.स्मृ.३-७६) इत्युक्तरीत्या आहुतिसम्बन्धे अग्न्यादित्ययोः पूर्वोत्तरत्वम् । अब्लक्षणसंधेः [2]वैद्युताग्न्यधीनत्वात्[2] वैद्युतस्य

---

1. विभक्त्यर्थे यदव्ययम् - **अ,क,ख,च,** ।  2. वैद्युताधीनत्वात् - **अ** ।

सन्धानत्वं द्रष्टव्यम् । **आचार्य** इत्यादि । **विद्या** - शिष्यगतज्ञानम् । **प्रवचनम्** - अध्यापनमित्यर्थः । **मातेत्यादि** । **प्रजननम्** - गर्भोत्पादनम् । अधरा इत्यादि । कपोलाधः प्रदेशोऽधराहनुः । ऊर्ध्वप्रदेशः **उत्तरा हनुः** । **वाक्** शब्द इत्यर्थः । एतज्ज्ञानस्य फलमाह - **य एवम्** इति । **सन्धीयते** - अन्वितो भवतीत्यर्थः । शिष्टं स्पष्टम् ।।

**कू.भा.** अथ शिष्याय विद्यां प्रदित्सुराचार्यो विद्याफलं शिष्यस्य स्वस्य च साधारणं भवत्वित्याशास्ते **सह नौ यशः सह नौ ब्रह्मवर्चसं** इति मन्त्रेण । **नौ** - आवयोः शिष्याचार्ययोः । **यशश्च ब्रह्मवर्चसं च** । सहास्तु - विद्यानिमित्तं यशः, तन्निमित्तं ब्रह्मवर्चसं च ममास्तु ; यथा कस्मैचिद्वराय प्रतिपादितायां कन्यायां पुत्रादिकं फलं तस्यैव वरस्य भवति, न तथास्त्वित्यर्थः । **अथात** इत्यादिब्राह्मणं वक्ष्यमाणविद्यांगभूतं अन्नाद्यादि फलभावनाविशेषं विदधाति । **अथशब्दः** - आनन्तर्यं द्योतयति, विद्यांगभूताध्ययन तद्गुणादीनां अनन्तरमिति । **अतश्शब्दः** तेषामेवाध्ययनगुणानां विद्याधिगमहेतुत्वं दर्शयति । **संहिताया उपनिषदं व्याख्यास्यामः - संहिताया उपनिषदं** - संहिता वर्णानुसन्धानं, तस्मिन् भावनाविशेष उपनिषत्, तामुपनिषदं गुह्यं, **व्याख्यास्यामः** - विशेषणाचक्ष्महे । **पञ्चस्वधिकरणेषु** - तस्यास्संहिताया अधिष्ठानानि - लोकादयः पञ्च, तेषु सन्धीयमाना वर्णास्संहिता भाव्यते । तत्रैकैवसंहिता अधिकरणभेदेन पञ्चधाभवतीति पञ्चसंहिता भवन्ति । ताः प्रशस्तत्वान्महासंहिता इत्युच्यन्ते । **अधिलोकम्** - लोके । *अव्ययं विभक्ति*[१] (पा.सू.२-१-६) इत्यादिना विभक्त्यर्थे अव्ययीभावः । **ता महासंहिता इत्याचक्षते** - ता एताः पञ्च संहिताः पूज्यत्वात् महासंहिता इत्याहुः । सन्महत्[२] (पा.सू.२-१-६१) इत्यादिना समासः । **अथाधिलोकं** - अधिलोके या संहिता विद्यते तां सम्हितां अत्र ब्रूम इत्यर्थः । **पृथिवीपूर्वरूपमित्यादि** । अध्ययनकाले वेदे वर्णौ सन्धीयेते सहोच्चार्यते, तयोः, **पूर्वरूपं** - पूर्वो वर्णः, पृथिवी, वेदितव्या । **द्यौरुत्तररूपं** - उत्तरो वर्णो द्यौरिति वेदितव्या । **आकाशस्सन्धिः** - तयोर्वर्णयोः अन्तराळ आकाशो वेदितव्यः । **वायुस्सन्धानम्** - पूर्वोत्तरयोः सहोच्चारणार्थो यो यत्नः स वायुरिति वेदितव्यः । **इत्याधिलोकम्** - इत्थं

---

१. अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्ति-साकल्यान्तवचनेषु इति सूत्रपाठः । (पा.सू.२-१-६)

२. सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः इति सूत्रपाठः । (पा.सू.२-१-६१)

लोके संहिता भाव्येति । **अथाधिज्यौतिषं** - अनन्तरं ज्योतिषि या संहिता तामत्र व्याख्यास्यामः । अग्निः **पूर्वरूपमित्यादि** । *अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते आदित्याज्ञायते वृष्टिः* (म.स्मृ.३-७६) इत्यादिप्रकारेण अग्न्यादित्यवैद्युतादीनां पूर्वोत्तरादिभावः । **वेद्युतस्सन्धानम्** वैद्युतो हि विद्युतमुत्पादयति । **इत्यधिज्यौतिषं** - इत्थं ज्योतिषि संहिताभावना प्रकार उक्तः । **अथाधिविद्यं** - विद्यायां या संहिता तां व्याचक्ष्मह इति । विद्या सन्धिः - **विद्या** - वेदः **स सन्धिः** - सा संहिता । **प्रवचनं सन्धानं, प्रवचनं** - अध्यापनम् । **अथाधिप्रजं** - प्रजायां या संहिता तां व्याचक्ष्मह इति । **प्रजननं सन्धानं** - प्रजार्थं निषिच्यमानं शुक्लम् । **अथाध्यात्मं** - आत्मनि शरीरे या संहिता सा प्रोच्यते । **अधराहनुः पूर्वरूपं** - आस्यपर्यन्तप्रदेशाः हनवः । अधरोत्तरौ पर्यन्तौ गृह्येते । **इतीमा महासंहिताः** - इत्थमिमाः पूजिताः संहिताः व्याख्याताः । एतद्वदने फलं दर्शयति **य एवमेता इत्यादि** । अत्र संहिताज्ञाने दृष्टान्यफलादर्शनात् संहिताव्याख्यानमिदं उपासनार्थम् ।।

**आ.भा.** *शं नो मित्रः* इत्यादिप्रार्थना सकलोपनिषदङ्गभूता पूर्वं कृता ; सम्प्रति संहितोपनिषदङ्गभूता प्रार्थना क्रियतेऽतः परं संहितोपनिषद्व्याख्यानस्यैव कर्तव्यत्वात् संहितोपनिषदध्ययनाध्यापनजन्यं यशो लोके ख्यातिः नौ शिष्याचार्ययोरावयोः सह उभयानुगतमस्तु भवतु । तज्जन्यं **ब्रह्मवर्चसम्** तेजश्च नौ सह अस्तु गुरुशिष्यानुगतमेव भवतु इत्यर्थः ।

**अथ** - शिक्षाव्याख्यानानन्तरम् । अतश्शब्दो हेत्वभिधायी । अध्ययनं हि शब्दस्य भवति गुरूच्चारणाऽनूच्चारणरूपम् । तत्र बुद्धिः शब्दस्य रूपमेव विषयीकरोति प्रथमतः । शब्दस्वरूपे सङ्क्रान्ता बुद्धिरर्थस्वरूपे क्रमेणैव सङ्क्रामति अतः प्रथमं संहिताव्याख्यानमित्यर्थः । संहिता च परः सन्निकर्षः सहिता इत्युक्तरीत्या वर्णानां सन्धिरेव । तत्र प्रथमं बुद्धिरवतरति तदनन्तरमर्थे इति मत्वैव पूर्वं संहितारहस्यव्याख्यानप्रतिज्ञा । उपनिषच्छब्दार्थश्च रहस्यमिति । सेयं संहिता स्वशाखासम्बद्धैव ग्राह्या । अध्येतुः अध्यापयितुश्च सन्निकृष्टत्वात् स्वशाखायाः । तस्या एवास्याः संहितोपनिषदः पञ्चविषया भवन्ति इत्यभिप्रायेणोक्तंपञ्चस्वधिकरणेषु । अधिकरणानि आश्रयाः । विषया इत्येतत् । तानि पञ्चसंख्याकानि । तद्विषयिणीमुपनिषदं व्याख्यास्याम इत्यर्थः । तान्यधिकरणान्येव दर्शयति - **अधिलोकम्** इत्यादिना । **अधिलोकं** लोकेषु इत्यधिलोकम् । विभक्त्यर्थेऽव्ययीभावः समासः । लोकविषयकं संहितारहस्यदर्शनम् इत्यर्थः । **अधिज्योतिषम्** - ज्योतिस्सु इति

अधिज्योतिषम् । विभक्त्यर्थेऽव्ययीभावः । ततः समासान्तष्टच् । ज्योतिर्विषयकं संहितारहस्यप्रतिपादनमित्यर्थः । अधिविद्यं विद्यासु **इत्याधिविद्यम्** । विद्यापदेन विद्यासम्बन्धिनो गुरुशिष्यादयोऽप्युच्यते । तद्विषयकसंहितारहस्यबोधनमित्यर्थः । अधिप्रजं प्रजासु **इत्यधिप्रजम्** । पूर्ववत् समासः । प्रजापदेन प्रजासम्बधिनो जननीप्रभृतयो गृह्यन्ते । तद्विषयकं संहितारहस्योपदर्शनमित्यर्थः । आत्मनि अध्यात्मम्। विभक्त्यर्थेऽव्ययीभावानन्तरम् *अनश्च* (पा.सू.५-४-१०८) इति सूत्रेण टच् समासान्तः टिलोपश्च । आत्मशब्देनात्र शरीरमुपलक्ष्यते । तद्विषयकं संहितारहस्यप्रदर्शनमित्यर्थः । लोकादिषु पञ्चसु संहिताऽध्यासोऽत्र विवक्षितः । एताः संहिता लोकादिष्वध्यस्यमानत्वादेव महत्यो मान्या इति महासंहितापदेनाचार्या एता **आचक्षते** वदन्ति ।

लोकादिपञ्चविषयकसंहितारहस्यदर्शनं प्रतिज्ञातम् । तत्र प्रथमं लोकविषयक-संहिताऽध्यासक्रमं दर्शयितुमाह **अथ** इति । **अथ**शब्द उपक्रमार्थः। तथा च लोकविषयकसंहितोपनिषदुपक्रम्यते, आरभ्यत इत्यर्थः । अ+उ=ओ इति वर्णसंहिता प्रसिद्धा । तत्राकारः पूर्वरूपम् । उकारः पररूपम् । ओकारः सन्धिर्द्वयोर्वर्णयोः सन्निकर्षरूपत्वादोकारस्य । ओकारोच्चारणजनकः प्रयत्न *आद्गुणः* (पा.सू.६-१-८७) इत्यादिसूत्रेण ओकारजनकः प्रयत्नो वा सन्धानम् । इत्थं मिलत्वा चत्वारोऽवयवाः भवन्ति संहितायामेकस्याम् । तेषु चतुःष्ववयवेषु क्रमेण पृथिवीद्युलोकादिदृष्टिः कार्येति दर्शयति - **पृथिवी** इत्यादिना । ओकारस्थानीय आकाश एव संहिता । तत्र **पूर्वरूपम्** प्रथमोऽवयवः **पृथिवी** । पूर्वरूपे पृथिवीलोकदृष्टिर्विधेया इत्यर्थः **द्यौत्तुररूपम्** । उत्तररूपे द्वितीयावयवे द्युलोकदृष्टिः कार्येत्यर्थः । **आकाशः सन्धिः** - सन्धावाकाशदृष्टिः कार्या । आकाशपदेन अन्तरिक्षलोको गृह्यते । **वायुः सन्धानम्** - सन्धाने वायुलोकदृष्टिः कार्या । वायुना हि पृथिवीद्युलोकसञ्चारिणा तौ उभौ लोकौ सन्धीयेते, अतो वायोः सन्धानत्वम् । **इत्यधिलोकम्** लोकविषयकं संहितोपासनमुक्तमिति भावः ।

**अथ** शब्द उपक्रमे । **अधिज्योतिषं** ज्योतिर्विषयकं संहितोपासनमारभ्यत इत्यर्थः । तत्र संहितायाः **पूर्वरूपं** पूर्वो वर्णो **अग्निः** । पूर्वरूपेऽग्निदृष्टिः कार्या । **आदित्य उत्तररूपम् -** संहिताया उत्तररूपे द्वितीये वर्णे आदित्यदृष्टिः कर्तव्या । **आपः सन्धिः -** सन्धौ संहितास्वरूपे अब्दृष्टिः कार्येत्यर्थः । *अग्नौ प्रास्ताहुतिः सम्यग् आदित्यम् उपतिष्ठते* (म.स्मृ.३-७६) ततो जलं भवति तस्मादग्न्यादित्ययोः सन्धिः जलम् । **वैद्युतः सन्धानम् -** विद्युतोऽयं वैद्युतो विद्युत्सम्बन्धी बह्निः । तद्दृष्टिः सन्धाने कार्येत्यर्थः । जलरूपसन्धेः विद्युत्साध्यत्वात् । **इत्यधिज्योतिषम् -** ज्योतिर्विषयकं संहितोपासनमुक्तमित्यर्थः ।

**अथ** इति । विद्याविषयकं संहितोपासनमुपक्रम्यात इत्यर्थः । **आचार्यः पूर्वरूपम्** - संहितायाः प्रथमे वर्णे आचार्यदृष्टिः कार्या । **अन्तेवास्युत्तररूपम्** - संहिताया द्वितीये वर्णे अन्तेवासिदृष्टिः कार्या । आचार्यो गुरुः अन्तेवासी च शिष्यः । **विद्या सन्धिः** - सन्धौ विद्यादृष्टिः कार्या । विद्या च अत्र शिष्यगतं गुरूपदेशजनितं ज्ञानम् । **प्रवचनं सन्धानम्** - सन्धाने प्रवचनदृष्टिः कार्येत्यर्थः प्रवचनद्वारैव विद्यालाभात् । **इत्यधिविद्यम्** - विद्याविषयकं संहितोपासनं प्रदर्शितमिति भावः ।

**अथाधिप्रजम्** - प्रजाविषयकं संहितोपासनमारभ्यते । **माता पूर्वरूपम्** - संहितायाः पूर्वरूपे प्रथमावयवे मातृदृष्टिः कार्या । **पितोत्तररूपम्** - उत्तररूपे द्वितीयावयवे पितृदृष्टिः कार्या । **प्रजा सन्धिः** - सन्धौ प्रजादृष्टिः कार्या । पुत्रादिरूपायाः प्रजाया मातापित्रोः सन्धिरूपत्वात् । **प्रजननं सन्धानम्** - प्रजननं गर्भजननं तस्य दृष्टिः सन्धाने कार्येत्यर्थः । प्रजननद्वारेणैव सन्धिरूपप्रजालाभात् । **इत्यधिप्रजम्** - प्रजाविषयकं संहितोपासनम् उक्तमित्यर्थः ।

**अथाध्यात्मम्** - शरीरविषयकं संहितोपासनमारभ्यते इत्यर्थः । **अधराहनुः पूर्वरूपम्** - संहितायाः प्रथमवर्णे अधरहनुदृष्टिः कार्या । कपोलस्याधोभागोऽधरा हनुरित्युच्यते । **उत्तर हनुः** उत्तररूपम् संहिताया द्वितीयवर्णे उत्तरहनुदृष्टिः कार्या । कपोलस्योपरितनो भाग उत्तरा हनुरित्युच्यते । **वाक् सन्धिः** - सन्धौ वाग्दृष्टिः कार्येत्यर्थः । वाग् वाणीरूपाऽत्र विवक्षिता न तु वागिन्द्रियमिति ध्येयम् **जिह्वा सन्धानम्** - सन्धाने जिह्वादृष्टिः कार्या । जिह्वया वाचः समुत्पत्तेः तस्याः वागिन्द्रियाधारत्वात् । **इत्यध्यात्मम्** - शरीरविषयकं संहितोपासनमुक्तमित्यर्थः ।

पञ्चाधिकरणकसंहितोपासनस्य फलं निर्दिशति - **इतीमाः** इति । **इतीमा महासंहिताः** - इमाः - पूर्वोक्ताः अधिलोकम् इत्यादिना ग्रन्थेन या **महासंहिताः** - महासन्धयः **ता व्याख्याताः** इत्यर्थः । **यः** उपासकः पूर्वोक्तरीत्या **व्याख्याताः** - विशेषेण कथिता महासंहिताः **एवं वेद** लोकादिविषयकतया समुपास्ते सः **प्रजया** - पुत्रपौत्रादिरूपया **पशुभिः** गोमहिषाश्वप्रभृतिभिः **सन्धीयते** - संयुज्यते । **ब्रह्मवर्चसेन** - ब्राह्मेण तेजसा **अन्नाद्येन** - अन्नप्रभृति भोग्यवस्तुना, **सुवर्ग्येण लोकेन** - स्वर्गादिना लोकेन च **सन्धीयते** - अन्वीयते । एतासां पञ्चानां संहितोपनिषदामनुष्ठानेन निष्कामस्य उपासितुः ब्रह्मविद्यानिष्पत्तिः भवति । सकामस्य तु उक्तं फलं भवति इत्यत्र तात्पर्यम् ।।

**सु. - सह नौ** इति शान्तिपाठोऽयं संहितोपनिषदध्ययनशेषभूतः । शं न इत्यादिस्तु कृत्स्नोपिषदध्ययनार्थः । शिष्याचार्यो प्रार्थयते **नौ** - शिष्याचार्ययोः अध्ययनजन्यम् अध्यापनजन्यं यत् यशः **ब्रह्मवर्चसं** च तदावयोरस्तु । **अथ** - शिक्षाया अनन्तरम्

उपनिषदं व्याख्यास्यामः । उपनिषच्च संहितायाः संहितोपासनमित्येतत् । पर्वक्रमतो ब्रह्मविद्यायां पदम् आधापयितुं संहितोपनिषत् प्रथमं प्रस्तूयते । प्रथमं शब्दोपासनं, ततः अर्थोपासनमिति पर्वक्रमः । वेदाख्यशब्दाध्ययनसंस्कृतचित्तस्यार्थोपासनात् प्रथमं शब्दविशेषलक्षणसंहितोपासनं सन्निहितमिति प्रथमं सन्निहितां संहितामेवालम्बनतया ग्राहयन्ती सेयं संहितोपनिषत् प्रवर्तते । वर्णानां सन्निकर्षः संहितोच्यते, सा च संहिता अधीतायाः शाखायाः बोध्या, सान्निध्यात् तदिदमुपासनं पञ्चस्वधिकरणेषु आश्रयेषु विषयेषु भिन्नभिन्नं प्रवर्तते । तत्र **अधिलोकमेकम्** - **अधिज्योतिषमेकम्** - **अधिविद्यमेकम्** - **अधिप्रजमेकम्** - **अध्यात्ममेकम्**, लोकादिदृष्ट्योपास्यमानास्ता एता **महासंहिताः इत्याचक्षते** द्रष्टार आचार्याः, तत्र **अधिलोकम्** - लोके विषये उपासनमुच्यते । अ + उ = ओ, इत्यस्यां वर्णसंहितायां पूर्वापररूपभूतौ पूर्वापरौ वर्णौ द्वौ, श्लिष्टोच्चारणलक्षणः *परस्सन्निकर्षः संहिता* (पा.सू.१-४-१०९) इत्युक्तलक्षणः सन्धिः, तदनुकूलयत्नलक्षणं सन्धानं इति द्वौ, सम्भूय संहिताया अवयवाः चत्वारः। **तेष्वेषु पूर्वरूपं** पृथिवी, पूर्वरूपे पृथिवीदृष्टिः कार्या, उत्तररूपं द्यौः उत्तररूपे द्युलोकदृष्टिः कार्या, **आकाशः सन्धिः** - सन्धौ आकाशदृष्टिः कार्या, **वायुः सन्धानम्** - सन्धाने वायुदृष्टिः कार्या । **इत्यधिलोकम्** - संहितोपासनमुक्तम् । **अथाधिज्योतिषम्** इत्यादि । अतिरोहितार्थमेतत्। **इतीमा महासंहिताः** पञ्चस्वधिकरणेषु व्याख्याताः । एतद्वेदनस्य फलमाह **य एवमेताः** इत्यादिना ।।

## चतुर्थोऽनुवाकः

**[मेधासिद्धये जपनीयाः मन्त्राः]**

**यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम् ।। शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् ।। ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ।। आवहन्ती वितन्वाना ।। १ ।।**

**[धनसाध्यहोमोपयिकाः मन्त्राः]**

**कुर्वाणा चीरमात्मनः । वासाँसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा ।। आ मा यन्तु [1]ब्रह्मचारिणः स्वाहा[1] । यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा समा भग प्रविश स्वाहा ।। २ ।।**

---

1. *वि मा यन्तु ब्रह्मचारिणः स्वाहा । प्र मा यन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा* इति वाक्यचतुष्टयम् अधिकम् आन्ध्रपाठे ।

[सच्छिष्यलाभाय प्रार्थना]

**तस्मिन् थ्सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा । यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा [1]पाहि[1] प्र मा पद्यस्व ।। ३ ।। वितन्वाना विशस्वाहा सप्त च ।। ४ ।।**

।। इति चतुर्थोनुवाकः ।।

**तै.भा. –** एवमध्ययनकाले कर्तव्यमानुषङ्गिक प्रजादिफलकमध्ययनाङ्गं संहितोपासन-मुपदिश्याध्ययनसमाप्तौ जप्तव्य मेधामन्त्रम् उपदिशति - **यश्छन्दसाम्** इत्यादि। अत्र मेधासिद्धये प्रणवः प्रार्थ्यते । तस्यैव ब्रह्मणः **छन्दसाम्** - वेदानाम्, **ऋषभः**[१] - श्रेष्ठः, सर्ववेदप्रतिपाद्यस्य ब्रह्मणः वाचकत्वात् **विश्वरूपः** । वाच्यवाचकयोः अभेदेन निर्देशः । **यः अमृतात्** - नित्यभूतात् वचनव्यत्ययः । अमृतेभ्यः **छन्दोभ्यः अधि सम्बभूव** । *व्यवहिताश्च* (पा.सू.१-४-८२) इत्युपसर्गस्य व्यवहितप्रयोगः । सारतयोद्धृत इत्यर्थः । तथाऽऽह मनुः --

*अकारं चाप्युकारं च मकारं च प्रजापतिः ।*
*वेदत्रयान्निरबृहद्भूर्भुवः स्वरितीति च ।।* (२-७६)

इति । अकारोकारमकारसमुदायो हि प्रणवः । **स इन्द्रः** - ऐश्वर्ययुक्तः तादृशब्रह्मवाचकत्वात् **मा** - माम्, **मेधया** - धारणक्षमया धिया **स्पृणोतु** - प्रीणयतु, *स्पृप्रीतिपावनयोः* ।(धा.पा.१२६०) स्वोपासकस्य **मे** प्रीतये मेधां दिशत्वित्यर्थः ।

अथ मेधया किं क्रियते तत्राह - **अमृतस्य** इत्यादि । हे **देव** ! वाच्येन ब्रह्मणा दीप्यमानः अमृतस्य देवस्य **धारणः** - धारयिता **भूयासम्** नन्द्यादिषु पृष्टव्यम् । धारणकार्यमाह - **मे शरीरं विचर्षणम्** - त्वद्धारणेन विशिष्टेन्द्रियकं भूयात् । **मे जिह्वा** - तदुच्चारणेन, **मधुमत्तमा** - अतिशयेन माधुर्यशालिनि भूयात् । **कर्णाभ्यां भूरि** - बहुतरं वेदार्थं **विश्रुवम्** - विशेषेण शुणवानि बहुतरवेदार्थश्रवणसमर्थे कर्णे भूयास्तामित्यर्थः । शृणोतेः लिङाशिष्युवङादेशः । **ब्रह्मणः** - परमात्मनः **कोशोऽसि** - कोशस्थानीयोऽसि त्वयि खलु वाचके ब्रह्म गुप्तं तिष्ठति । **मेधया** ज्ञानविशेषेण, **पिहितः** - छादितः । मेधया हि

---

१. *स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ।।* इत्यमरः (३-१-५१)

1. भाहि - ग ।

अनुच्चारणदशायां हृदि प्रणवो गोप्यते । स त्वं **मे श्रुतं** - श्रुतवेदार्थं **गोपाय** - रक्ष सुसमृद्धं कुरु । यद्वा - अविस्मृतं कुर्वित्यर्थः । मेधां जनयित्वा उद्घाटितद्वारो भव । तत्र मे श्रुतार्थसंरक्षणम् अस्तु इति भावः ।

अथाध्यापनस्मृत्युपयोगितयाचार्येण प्रत्यहम् अग्नौ औपासने होममन्त्राः - **आवहन्ती** इत्यादि । अत्र श्रीः प्राथ्यर्ते **वासांसि** - वस्त्राणि, **गावः** - गाः आकाराभावश्छान्दसः । **सर्वदा अन्नपाने** सार्वकालिकान्नपाने तत्समयोचितान्नपाने च **मम आवहन्ती** - आनयन्ती अथ **वितन्वाना** - विस्तारयन्ती विस्तार्यात्मनः चिरं कुर्वाणचिरकालमात्मसात्कुर्वाणा छान्दसो दीर्घः । एवम्भूतायतस्त्वमसि **ततः** हेतोः, **लोमशां** क्षेत्रादिबहुविचित्रां **श्रियम्** विभूतिं **पशुभिः सह आवह** - प्रापय **स्वाहा** । सुकृतमिदं तवास्तु । विभूतिप्रयोजनमाह - **ब्रह्मचारिणः** - अन्तेवासि **मामायन्तु** आयान्तु । इणो रूपमिदम् । **जने** जनेषु मध्ये **यशः** - यशस्वी, **असानि** - भूयासम् । मत्त्वर्थीयो लुप्यते । वस्यसोऽपि श्रेयान् प्रशस्यतमो भूयासं वसूशब्दादि ईकारस्य छान्दसो लोपः ।

एतादृशविभूतिकनिमित्तं स्वकृत्यमाह **तंवा** इति। हे भग ! हे श्रीः *भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु* (अ.को.३-३-२) इत्यमरः । तमेवं फलप्रदं **त्वं प्रविशानि** - प्राप्नुवानि । **सः** त्वमपि **मा प्रविश** - **हे भग ! तस्मिन्** - त्वयि **सहस्रशास्त्रे** सति **निमृजे** - दानादिभिः पापं क्षालयामि न तु मत्तः स्याम् इति भावः ।

आमायन्तु ब्रह्मचारिणः इत्युक्तं विवृणोति - **यथा** इत्यादि । **यथा आपः** - सलिलानि, **प्रपता** - प्रवणेन निम्नेन **यन्ति** - शीघ्रं गच्छन्ति उपसर्गाश्छन्दसीति वतिः। **यथा मासा अहर्जरम्** संवत्सरं यन्ति अहानि जरयन्ति इत्यहर्जरं एवमयत्नेन मां **ब्रह्मचारिणः** सर्वदेशेभ्यः आयन्तु, हे **भग** ! तस्मात् त्वमेव **प्रतिवेशोऽसि** - प्रत्यासन्नोसि मां **प्रभा हि** - प्रापय अन्तर्भावितण्यर्थोऽयं भा सर्वत्र मां ख्यापयेत्यर्थः । तदर्थं मां **प्रपद्यस्व** - प्रकर्षेण मत्समीपे वर्तस्व ।।

**प्र.** - ब्रह्मविद्यार्थं प्रणवं प्रार्थयते - **यश्छन्दसाम्** इति । **छन्दसाम्** वेदानां यः **ऋषभः** - श्रेष्ठः । **विश्वरूपः** - *विश्वं विष्णुः* (सा.ना.१) इति नामसहस्रपाठात् विश्वं - विष्णुः । तत्प्रतीकत्वात् तद्ध्यानसाधनत्वाच्च तद्रूपत्वम् । सर्वशब्दप्रकृतित्वाद्वा सर्वरूपत्वम् ।

एवंभूतः प्रणवः **अमृतात्** परमात्मनः सर्वेभ्यश्छन्दोभ्योऽधिकतया **सम्बभूव** - प्रादुर्भूतः । **सः इन्द्रः** - परमैश्वर्यशाली प्रणवः **मा** - मां **मेधया** - ज्ञानेन **स्पृणोतु** - उज्जीवयतु । *स्पृप्रीतिरक्षणप्राणनेषु* (धा.पा.१२६०) इति हि धातुः। **देवेति** दीव्यतः प्रणवस्य सम्बोधनम् । **अमृतस्य** परमात्मनः हृदये धारको भूयासम् । सर्वदा ब्रह्मज्ञानम् अनुवर्तताम् इत्यर्थः । मदीयञ्च शरीरं **विचर्षणं** बलारोग्यादिना कान्तिमद्भवतु । मदीया च जिह्वा सर्वदा ब्रह्मवदनशीलतया भोग्यतमा भवतु । कर्णाभ्याञ्च **भूरि** - भूयो ब्रह्मप्रतिपादकं शास्त्रं शृणवानि । **विश्रुवम्** इति छान्दसं रूपम् । परमात्मनः त्वं वाचकतया **कोशोऽसि** - निधानस्थानमसि । मेधाजनकतया तद्भरिततया वा मेधयाऽच्छादितोऽसि । तादृशः त्वम्, श्रुतार्थो यथा अप्रमृष्टो भवति, तथा कुरु इत्यर्थः ।

विद्यौपयिकहोमसाधनमन्त्राः उच्यन्ते - **आवहन्ती** इत्यादिः । लक्ष्मीप्रार्थनामन्त्रोऽयम् । **आवहन्ती** - उत्पादयन्ती, **वितन्वाना** वर्धयन्ती, यतस्त्वम्, ततो मे चीरमितराणि वासांसि गाः अन्नपाने च सर्वदा कुर्वाणा सती, *सा हि श्रीरमृता सताम्* (तै.ब्रा.१-२-१) इति त्रयीलक्षणां **श्रियम्, लोमशाम्** - बहुलां यज्ञाद्यौपयिकपश्वादिद्रव्यैस्सह **आवह** - उत्पादय । होमसाधनत्वात् मन्त्रस्य स्वाहान्तत्वम् । **आ मा यन्तु** इति । ब्रह्मविद्यायोग्याः ब्रह्मचर्यव्रतसम्पन्नाः शिष्याः [1]समागच्छन्तु[1] इत्यनुकूलशिष्यप्रार्थनामन्त्रः ।

**यशः** इति । जनमध्ये यशस्वी भवानि इत्यर्थः । **श्रेयान्** इति । **वस्यसः** - वसीयसः वसुमत्तराणां मध्ये श्रेष्ठो भूयासमित्यर्थः । **तं त्वा** इति । हे भग ! इति एश्वर्यादीनां सम्बोधनम् । तं त्वां **प्रविशानि** प्राप्नुवानीत्यर्थः । **स मा** इति । हे भग! सः त्वं मां प्राप्नुहीत्यर्थः । **तस्मिन्** इति । हे भग ! **सहस्रशाखे** ऐश्वर्यवीर्याद्यनन्तविधायुक्तेत्वयि प्रविष्टोऽहं **निमृजे** शुद्धो भवानीत्यर्थः । *मृजूष् शुद्धौ* (धा.पा.१०६६) इति हि धातुः । यथाऽऽपः इति । हे **धातः** - परमात्मन् ! यथा जलानि प्रवताः प्रवणाः दिशो यन्ति । तानादिकाद्वनुतेः निष्ठायामनुनासिकलोपः [2]**यथा**[2] **मासाः अहर्जरम्** - अहोभिः जरा यस्य स पुरुषः अहर्जरः । यस्य कालेन जरा भवति, न व्याध्यादिना, सोऽहर्जरः । वृद्धः इति यावत् । तं यथा मासाः प्राप्नुवन्ति ; यद्वा अहानि जीर्यन्ति यत्रेति **अहर्जरः** - संवत्सरः, सूर्यो वा ; एवं मां योग्याः शिष्याः आयान्तु इत्यर्थः । प्रतिवेशोऽसि इति । हे **धातः !** त्वं प्रतिवेशशब्दित[3]प्रतिगृहकल्पः[3] सन्निहितोऽसीत्यर्थः । **मा** - मां प्रकर्षेण **पाहि** - प्रपद्यस्व । अन्तर्भावितण्यर्थोऽयं पदिः । प्रपन्नं मां कुरु इत्यर्थः ।।

---

1. मामागच्छन्तु - अ,ख,ग,च । 2. यथा वा - क,ख,च । 3. प्रतिगृहकल्पितः - अ ।

**कू.भा.** - यश्छन्दसाम् इत्यनुवाकः ज्ञानजननार्थं जपादौ विनियुज्यते । यश्छन्दसामित्येतेषां मध्येज्योतिस्त्रिष्टुप्[१] ततः त्रिपदा गायत्री[२] शिष्टं यजुरिति[३] । अत्र परब्रह्मवाचकः प्रणवः विद्यागंत्वेन स्तूयते । अत्र शब्दब्रह्मभूतस्य प्रणवस्य परब्रह्मभूतस्य नारायणस्य च साधर्म्यं प्रतिपाद्यते । **यश्छन्दसां** - उक्ताद्युत्कृतिपर्यन्तानां अक्षरसंख्याविशेषवाचिनां छन्दोभाषात्मनां शब्दतत्वानाम्, **ऋषभः** - उत्पादकत्वेन स्थित्वा सर्ववचसां वर्षिता संवर्धकः, सोपि सर्ववेद्यानां धारकपोषकभोग्यत्वेन वर्षिता । **विश्वरूपः** - विश्वं शब्दजातं अनेन रूप्यते विस्तीर्यते इति विश्वरूपत्वं प्रसिद्धम् । **छन्दोभ्योध्यमृताथ्सम्बभूव । छन्दोभ्यः** - अपौरुषयेभ्यो वेदेभ्यः, **अधि** - आधारत्वेन स्थितः, **अमृतात्** - परब्रह्मणः, सम्बभूव । यस्मादेवं, तस्मात् प्रणवः **छन्दोभ्योधि** - धारकत्वेन उत्कृष्टः इति यावत् । तथा च मनुः -

---

१. *मध्येज्योतिर्मध्यमेन* (पिंग.छं.सू.३-५३) । यदा मध्यमस्त्रैष्टुभः पादो वेति, उभयतश्च द्वौ द्वौ गायत्रौ, तदा मध्येज्योतिः नाम त्रिष्टुभ् भवति । यथा -

*यश्छन्दसामृषभो विश्वरूपः* - एकादशाक्षरा - साम्री निचृद्गायत्री ।

*छन्दोभ्योध्यमृतात् संबभूव* - दशाक्षरा - पाजापत्या स्वराट्गायत्री ।

*स मेन्द्रो मेधया स्पृणोतु* - नवाक्षरा - प्राजापत्या त्रिष्टुभ् भुरिक् ।

*अमृतस्य देव धारणो भूयासं* - द्वादशाक्षरा - साम्री गायत्री ।

*शरीरं मे विचर्षणं* - अष्टाक्षरा - प्राजापत्या - याजुषी स्वराट्गायत्री ।

अत्र उभयतः द्वौ गायत्रौ मध्ये च त्रिष्टुभ् वर्तते । अतः मध्येज्योतिस्त्रिष्टुभ् नाम छन्दः ।

२. त्रिपदा गायत्री यथा -

*जिह्वा मे मधुमत्तमा* - अष्टाक्षरा - पाजापत्या याजुषी स्वराट्गायत्री ।

*कर्णाभ्यां भूरि विश्रुवम्* - अष्टाक्षरा - पाजापत्या याजुषी स्वराट्गायत्री ।

*ब्रह्मणः कोशोसि मेधया पिहितः* - द्वादशाक्षरा - साम्रीगायत्री ।

अत्र पादत्रयेपि गायत्रीविद्यमानत्वात् त्रिपदागायत्रीनाम छन्दः ।

३. श्रुतं मे गोपाय - षडक्षरा - यजुर्गायत्री - (स्पष्टम् )

पिंगलाचार्यकृत छन्दश्शास्त्रस्थलक्षणानि बहुषु मन्त्रेषु व्यभिचरितानि भवन्ति । अतः तत्रैव निर्दिष्टसूचनानुसारेण तत्तन्मन्त्रेषु लक्षणानि ऊह्यानि । अतः ते च निचृद्गायत्री भुरिग्गायत्री विराट् गायत्रीत्यादिरूपैः समाधेयाः । गायत्रीछन्दस्तावत् एकादशाक्षरादारभ्य अष्टत्रिशंदक्षरपर्यन्तं विद्यते । एवं उष्णिगित्याद्याः । तदनुसारेण अत्र समन्वयः कृतः ।

*आद्यन्तु त्र्यक्षरं ब्रह्म त्रयी यत्र प्रतिष्ठिता ।*

*स गुह्योन्यस्त्रिवृद्वेदो*[१]*यस्तं वेद स वेदवित् ।।* (म.स्मृ.११-२६५)

इति । अन्यत्र **अमृतात्** - परमपदात्, **छन्दोभ्योधि** - छन्दसां वाच्यत्वेन, **यः सम्बभूव** - स्वयमाविरभूत् । *य एष स्वयमुद्बभौ* (म.स्मृ.१-७) इति । **स मेन्द्रो मेधया स्पृणोतु** - सः प्रणवरूपी, सर्वशब्दानां तद्वाच्यानां **इन्द्रः** - निर्वाहकः, मा, **मेधया स्पृणोतु** - ग्रन्थार्थधारणरूपा बुद्धिः मेधा, तया, **स्पृणोतु** - स्पर्शयतु, सः प्रीतो मेधाजननेन मां प्रीणयतु इति, अन्यत्र निगदार्थः । **अमृतस्य देवधारणो भूयासं** - ज्ञानदानतदभावाभ्यां पूर्वं ब्रह्मादि स्थावरान्तं तत्वजातं बुध्वा मुक्त्वा स्वेच्छं संक्रीडमानः, **अमृतस्य** - अमृतत्वस्य, सर्वेश्वरस्य प्राप्तिहेतोः दिव्यज्ञानस्य अहं धारणः धारयिता भूयासं, अन्यत्रापि समानम् । **शरीरम्** इत्यादि । हे **देव** ! तव प्रसादात्, **मे** - मम शरीरं, **विचर्षणम्** - विशिष्टेन्द्रियकं **भूयात्** - मम ज्ञानकर्मात्मकानि सर्वाणीन्द्रियाणि विशिष्टज्ञानशक्तिकानि भगवत्स्मरणकीर्तन-भजननमननादिसमर्थानि भवन्तु इति यावत् । अपि च, **जिह्वा मे मधुमत्तमा** - मम जिह्वा अतिशयेन सर्वेषां श्रोत्रेन्द्रियभोग्यशब्दजननी भूयात् । **कर्णाभ्यां भूरि विश्रुवम्** - हे **देव !** तव प्रसादात्, अहं कर्णाभ्यां, **भूरि** - बहुतरं, **विश्रुवम्** - सर्वाः विद्याः विशेषेण शृणवानि, विश्रुवमिति लिङ् आशिषि । पुनरपि सः एव स्तूयते । **ब्रह्मणः** - सर्ववेदस्य, तद्वेद्यस्य परतत्वस्य च, **कोशोसि** - त्वयि सर्वे वेदाः वेदवेद्यं ब्रह्म तत्स्वरूपरूप-गुणविभूत्यादिकं च सर्वं रत्नमंजूशिकायां निधिरिव निहितमिति यावत् । **मेधया** - दिव्यज्ञानेन, **पिहितः** - आच्छादितः, ज्ञानविशेषदर्शनीयस्वरूपत्वात् तज्ज्ञानरहितानां दुर्ग्रहोऽसीति यावत् । एतदुभयमप्यन्यत्र समानम् । भगवानपि वेदानां तद्वेद्यानमपि कोशभूतः मंजूषा सदृक्षः, **मेधया पिहितः** - ज्ञानेन पूरितः । तथा *यत्र विश्वं भवत्येकनीळम्* (महा.ना.१-५) *यस्सर्वज्ञः सर्ववित्* (मुं.उ.१-१-९) इत्यादि च । **श्रुतं मे गोपाय श्रुतं** - मम अधीतं सकलां विद्यां, **गोपाय** - रक्ष, मम परविद्याम् उत्पाद्य अस्कन्नां कृत्वा सुसमृद्धाम् अविशीर्णां कुरु इति यावत् ।

---

१. त्रिवृद्वेदः - ऋग्यजुःसामरूपेण वर्तते इति त्रिवृत् । त्रिवृच्चासौ वेदश्च त्रिवृद्वेदः । त्रयी । *ऋचो यजूंषि चान्यानि सामानि विविधानि च । एष ज्ञेयः त्रिवृद्वेदः* (म.स्मृ.११-२६४) इति ।
त्रिवृद्वेदः - ओंकारः, प्रणवः । अकारोकारमकारात्मकत्वेन त्र्यक्षरं यत्र त्रयो वेदाः स्थिताः सः अन्यः त्रिवृद्वेदः प्रणवाख्यः । इति मन्वर्थमुक्तावलीव्याख्या ।

**आवहन्ती** इत्यादि विद्यांगत्वेन वृष्टिजननहोमाय विनियुज्यते । तत्र आवहन्तीति प्रथमा षट्पदा जगती, द्वितीया पंचपदा, तस्मिन्निति त्रिपदा गायत्री, यथाप इत्यवशिष्टं यजुरिति । प्रथमया जगत्या श्रीः प्रार्थ्यते । **आवहन्ती** - आगमयन्ती, उत्पादयन्ती, **वितन्वाना** - विस्तारयन्ती । **कुर्वाणा चीरमात्मनः** - आगमय्य विस्तार्य च, **आत्मनः** - मम, **चीरं** - दीर्घत्वम् । यद्वा - **अचीरं** - द्रुतं, कुर्वाणा । कानि पुनस्तानीत्याह - **वासांसि** इत्यादि विचित्राणि वस्त्राणि बहुप्रकारगाश्च । विभक्तिव्यत्ययश्छान्दसः । **अन्नपाने च सर्वदा** - सर्वप्रकारमदनीयं स्वादुतमं पानीयं च, **सर्वदा, आवहन्ती वितन्वाना** - चीरं कुर्वाणा या श्रीः तां, श्रियं, सर्वदा, मम, **आवहं** - अगमय । पुनरपि सा एव विशेष्यते - **लोमशां** - क्षेत्र- पुत्र-दासी-दासादि बहुद्रव्यवती, श्रियम्, **पशुभिः** - गोमहिषाजादिभिस्सह ममावहेति । **स्वाहाशब्दः** - त्यागवचनः होमे विनियुज्यते । अत्र च भगवते प्रतिपाद्यं हविरात्मपत्रपुष्पादिकम् । अथ श्रुतिविद्या गुप्त्यर्थं तत्प्रवचनाय शिष्यान् प्रार्थयते - **आमा यन्तु ब्रह्मचारिणः स्वाहा** - भगवद्ज्ञानाय ब्रह्मचर्यादिकं व्रतं धारयन्तः शुश्रूषणपराः हे अन्तेवासिनः ! **मा आयान्तु** - आगच्छन्तु, आचार्यकं मे स्यात् इति यावत् । किञ्च - **यशोजनेऽसानि स्वाहा । जने** - सर्वेषु जनेषु मध्ये, अहं, **यशोऽसानि** - यशस्वी भूयासम् । लुप्तमत्वर्थीयोयं प्रयोगः । अथवा - **यशोजने** - यशस्विजने, भगवद्भजनयजनकीर्तनादि कल्याणाकरे जने, अहं ग्राह्यो भवेयम् । किञ्च - **श्रेयान् वस्यसोऽसानि स्वाहा** - वस्यसः - वसीयसः, वसुमत्तमात्, परमज्ञानभाजनात्, प्रशस्यो भवानि, छन्दसः ईकारलोपः । किञ्च - **तं त्वा भग प्रविशानि स्वाहा** - हे भग ! भजनीये ! हे श्री ! अथवा एश्वर्यादिसमृद्ध श्रियःपते ! **तं त्वा** अहं, **प्रविशानि** - भोक्तृत्वेन प्राप्नुवानि, त्वां प्राप्यत्वत्परिचरणरूपम् अशेषं कैंकर्यं लभेय इति यावत् । किंच - **स मा भग प्रविश स्वाहा** - हे भगवन् पुरुषोत्तम ! त्वमपि मां **प्रविश** - दण्डकारण्यवासिनः शरभंगादिमुनिवर्यानिव त्वमेव मां स्वीकुरु इति । **तस्मिन्थ्सहस्रशाखे निभगाहं त्वयि मृजे स्वाहा भग** - परमसमृद्धि-परमशुद्धि-परमपदया-परमसौहार्दादिनिधे श्रीमन् ! **तस्मिन्** - त्वयि, **सहस्रशाखे** - बहुप्रकारज्ञानशक्त्यादिकल्याणगुणगणरूपशाखानुशाखाविस्तृते त्वयि, अहं, **निमृजे** - त्वत्प्राप्तिनिरोध्यनादिकालसंचितानन्तांहस्तातिं मार्ज्मि, त्वत्स्मरण-कीर्तन-यजनादिसंक्षाळिताशेषपापः भवानि । प्रार्थितार्थसमागमेन द्रढयति - **यथापः** इति । **आपः** - वर्षासमये बहूनि जलानि, **प्रवता** - प्रस्रवणेन, निम्नेन देशेन, यथा यन्ति शीघ्रं गच्छन्ति, उपसर्गाच्छन्दसीति वनिः । **यथा मासा अहर्जरं** - अहानि जरयति इत्यहर्जरः

संवत्सरः, तं, **यथा मासाः**, यन्ति गच्छन्ति। एवं मां ब्रह्मचारिणः **धातरायन्तु सर्वतस्स्वाहा** - हे धातः । सर्वतः, **आयन्तु** - ब्रह्मचार्यादिशिष्यगणाः सर्वेण प्रकारेण आगच्छन्तु इति । किञ्च - **प्रतिवेशोसि प्रमा भाहि प्रमापद्यस्व** - हे भगवन् त्वं, **प्रतिवेशोसि** - श्रमविलयस्थानं प्रतिवेशः, तदसितापत्रयदवदहनदह्यमानानां संसारिणां पथि स्थितिं तरुवाप्यादिविश्रमस्थानं भोगस्थानम् असि, तस्मात् त्वं मां, **प्र भाहि** - प्रकर्षेण भातं दीप्तं सर्वलोकविख्यातं कुरु, प्रभाहीति अन्तर्भावितण्यर्थः द्रष्टव्यः । यद्वा मां, **प्रभाहि** - प्रकाशय, तदर्थं, **मा प्रपद्यस्व** - प्रकर्षेण मद्धिताध्यवसायो भव कदाचिदपि रक्षणे मां न विमुंच इति यावत् । यद्वा - **प्रमापद्यस्व च** - मां रससिद्धमिव लोहं त्वन्मयं त्वदात्मानं कुरु इत्यर्थः । श्रीकामः अस्मिन् विद्याप्रकरणे अभिधीयमानः धनार्थी, धनं च कर्मार्थम् कर्म च उपात्तदुरितक्षयार्थं, तत्क्षये हि विद्या प्रकाशते, तथा च स्मृतिः -

*ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।*
*यथादर्शतलप्रख्यं पश्यत्यात्मानमात्मनि ।।* (महा.भा.शां.१९७-८) इति ।

**आ.भा.** - **यश्छन्दसाम्** इत्यारभ्य **श्रुतं मे** इत्यान्ताः मन्त्रा ब्रह्मविद्याङ्गभूतमेधासिद्धये जपनीयाः इह प्रोक्ताः । तदर्थमेव प्रणवप्रार्थना विधीयते - **यः** इत्यादिना । **यः** प्रणवः, **छन्दसाम्** - वेदानाम्, **ऋषभः** - श्रेष्ठः प्रणवसारत्वात् वेदस्य । **विश्वरूपः** - विश्वं रूपम् अस्य, *ओंकारेणैव सर्वा वाक् सन्तृण्णा* (छां.उ.२-२३-२) इति श्रुतेः सर्ववाक्स्वरूपः । यश्च **छन्दोभ्यः** - वेदेभ्यः **अमृतात्** - परमात्मनः सकाशात् **अधिसम्बभूव** - आधिक्येन व्याहृत्यपेक्षयाऽपि श्रेष्ठतया प्रादुर्भूतः । **सः** प्रणवः **इन्द्रः** - परमेश्वरः, वाच्यगतपरमेश्वरत्वस्य वाचके समारोपात् । **मा** माम् **मेधया स्पृणोतु** - प्राणयतु, संयोजयतु इत्येतत् । **हे देव** ! परमात्मवाचकतया सर्ववाचकेषु अधिकतया दीप्यमानप्रणव ! **अमृतस्य** - अमृतत्वसाधकस्य ब्रह्मज्ञानस्य **धारणः** - धारयिता **भूयासं** - भवेयम् । त्वत्प्रसादाद् ब्रह्मज्ञानं मे भवेत् । तच्च अहं निरन्तरं वागिन्द्रियं **मे** - मम **मधुमत्तमा** - माधुर्ययुक्तं वचनं मधु तदस्ति अस्यामिति मधुमती अतिशयेन मधुमती स्यात् । वचनस्य ब्रह्मविषयकतया भवत्येव मधुमत्ता मधुरवादिनीति यावत् स्यात् । **कर्णाभ्यां** - शब्दप्रत्यक्षसाधनाभ्याम् इन्द्रियाभ्यां **भूरि** - अत्यर्थं **विश्रुवम्** - श्रोता भूयासम् । ब्रह्मबोधकशास्त्रश्रवणं मे बहु स्यात् इति भावः विश्रुवमिति छान्दसः प्रयोगः । ब्रह्मज्ञानक्षमं मे शरीरेन्द्रियादि भवतु त्वत्प्रसादात् इति समुदितार्थः । हे प्रणव ! त्वं **ब्रह्मणः** परमात्मनः, **कोशोऽसि** कोश इवासि यथा कोशेसिः निगूढा मा

तिष्ठति तत एव बहिः प्रकाशते तथा परं ब्रह्मापि वाचके त्वयि तिष्ठति त्वत्तः प्रकाशते चेति भावः । **मेधया** - लौकिक्या बुद्ध्या **पिहितः** - आच्छादिततत्वोऽसि । न हि लौकिकाः परमात्मप्रकाशकं त्वां ज्ञातुमीशत इत्यर्थः । एवंभूतस्त्वं हे प्रणव ! **मे** मम **श्रुतं** - गुरूपदेशतो जातं ब्रह्मविषयकं ज्ञानं **गोपाय** - रक्ष तद्विनाशे यथा न भवति तथा कुरु ।

**आवहन्ती** इत्यादिना प्रणवप्रार्थना पूर्वं क्रियते लक्ष्मीधनादिसम्पत्तिप्राप्तये । तदनन्तरं धनसाध्यहोमोपयिका मन्त्राः पठ्यन्ते ततः सच्छिष्यलाभाय प्रार्थना एतत् त्रितयमपि ब्रह्मविद्याङ्गभूतमिति ब्रह्मविद्याप्रकरणे कथितम् । **आवहन्ती** - प्रापयन्ती ब्रह्मविद्याङ्गभूतहोमौपयिकधनादिकमिति कर्माध्याहार्यम् । **वितन्वाना** - सम्प्रापय्य धनादिकं वर्धयन्ती । चीरम् इत्यत्र दीर्घश्छान्दसः । **चिरं** - दीर्घकालपर्यन्तम् । **कुर्वाणा** - धनादिसम्पत्तिं समुत्पादयन्ती **आत्मनः** मम । **वासांसि** - वस्त्राणि धर्मसाधनोपयुक्तानि । तादृशीः गावः गावश्च । छान्दसत्वाद्विभक्तिव्यत्यासः । **अन्नपाने च । अन्नं** - धान्यादि **पानं** - पेयं जलादीनि च सर्वदा कुर्वाणा या श्रीः तां **श्रियम्** । ततो मेधाप्रदानानन्तरम् । लोमयुक्ताजादिसहिताम् । **पशुभिः** - अपरैश्च पशुवर्गैः **सह** - संयुक्ताम् । **आवह** - आसमन्तात् प्रापय । हे प्रणव ! प्रणवस्तुतेरेव प्रकृतत्वात् । **स्वाहा** पदं होमेऽस्य मन्त्रस्य विनियोगसूचकम् । अतः परं सच्छिष्यलाभाय प्रार्थ्यते - **आ मा यन्तु** इत्यादिना । **ब्रह्मचारिणः** - ब्रह्मचर्यपरायणाः ब्रह्मविद्यार्थिनः शिष्याः **मा** - माम् **आयन्तु** - आगच्छन्तु । तादृशा एव ब्रह्मचारिणो मां प्रयन्तु प्रकर्षेण प्राप्नुवन्तु विशेषतः इतरापेक्षया मां यन्तु । **दम्** - इन्द्रियदमनकराः ब्रह्मचारिणः **आयन्तु** । **शम्** - सुखकराः समुपदिष्टार्थग्रहण-धारणादिपाटवेन ममानन्दकराः इत्येतत् । एवंभूताः ब्रह्मचारिणः **आयन्तु** - आ समान्तात् मां प्राप्नुवन्तु । एतेष्वपि मन्त्रेषु **स्वाहा**शब्दः होमक्रियायां विनियोगसूचकः । अतः परं स्वसम्बन्धियशःप्रभृति प्रार्थ्यते - **यशः** इत्यादिना । **जने** - जनानां मध्ये, **यशः** - यशस्वी, **असानि** - भवेयम् **वस्यसः** - वसुमतां धनिनां मध्ये, **श्रेयान्** - श्रेष्ठः, **असानि** - भवानि । हे **भग** ! भगवन् ! विशिष्टैश्वर्यशालिनि ! प्रणव ! **तम्** - ब्रह्मकोशत्वेन, वर्णितं **त्वाम्** - प्रणवं, **प्रविशानि** - प्राप्तो भवेयम् ! हे **भग** ! प्रणव ! **सः** - ब्रह्मकोशभूतस्त्वम्, **मा** - मां **प्रविश** - प्राप्नुहि । हे **भग** ! पूज्य ! प्रणव ! **सहस्रशाखे** - अनन्तशाखे वेदमूलभूते **तस्मिन्** - अनन्तैश्वर्ययुक्ते, **त्वयि** प्रणवे **अहं** कृतप्रवेशः सन् **विमृजे** - शोधयामि स्वात्मानं त्वत्सम्पर्केण । हे **धातः** ! विधातः ! विश्वरचनाया वेदपूर्वकत्वाद् वेदस्य च प्रणवपूर्वकत्वात् । यद्वा हे **धातः** ! हे सर्वाशापरिपूरक ! प्रणव ! **आपः** जलानि, **प्रवताः** -

निम्नदेशं प्रभक्ताः सत्य एव **यथा यन्ति** - गच्छन्ति, समुद्रादिषु, **यथा मासाः** - चैत्रादिकाः द्वादशसंख्याकाः **अहर्जरम्** - अहानि दिनानि जीर्यन्ति जीर्णानि भवन्ति । अस्तं यन्ति इत्येतत् । यत्र सोऽहर्जरं संवत्सरः तम् यन्ति प्राप्नुवन्ति । एवं अनयैव रीत्या **ब्रह्मचारिणः** - ब्रह्मचर्यपराः शिष्याः सर्वतः सर्वाभ्यः दिग्भ्यः **आयन्तु** - आगच्छन्तु मां प्रति । हे **धातः !** त्वं **प्रतिवेशः** प्रतिवेशसदृशः । **असि** - समीपस्थगृहवानिव भवसि । अतः **प्रपाहि मां** प्ररक्ष । प्रतिवेशिधर्मोऽयं यत् प्रतिवेशिनं रक्षेद् दुःखेभ्यः तदर्थमेव च **मां प्रपद्यस्व** मत्समीपं समागच्छ । **प्रतिवेशिनः** - स्वप्रतिवेशिसमीपगमने नातीव क्लेशो भवति दूरगमने हि क्लेशमपेक्ष्य भवत्यालस्यादिकम् । तदत्र नास्ति तस्मात् मां प्राप्य परिरक्ष इति भावः ।।

**सु.** - मेधायाः श्रियश्च सिद्धये विनियोज्य । मन्त्राः पठ्यन्ते चतुर्थेऽनुवाके । तत्र - **यश्छन्दसाम्** इत्यादीनां मेधासिद्ध्यर्थानां जपे विनियोगः, **आवहन्ती वितन्वाना** इत्यादीनां श्रीसिद्ध्यर्थानां होमे विनियोगो बोध्यः । **लोमशाम्** इत्याद्युत्तरवाक्येषु स्वाहाशब्दयोगात् । मेधायाः श्रियश्च ब्रह्मविद्याशेषतयाऽऽशंस्यतेति विद्याप्रकरणेऽस्य श्रवणं सङ्गतम् । असत्यां मेधायां न प्रभवति श्रवणमननयोः, अनिष्पन्नश्रवणमननस्य न विद्यानिष्पत्तिः, तथा पश्वादिद्रव्यसम्पत्तिरहितो न प्रभवति कर्मसु । अननुष्ठितेषु कर्मसु न भवति विद्यान्तरायदुरितक्षयः, अप्रक्षीणदुरितस्य नान्तःकरणं प्रसीदति, अप्रसन्ने मनसि न विद्यानिष्पत्तिः । तत् मेधाश्रियोरपि विद्यार्थता युक्ता नाम । प्रणवः प्रार्थ्यते मेधाकामनया - **यश्छन्दसाम्** इति । प्रणवस्यायं विशेषो यत्परस्य ब्रह्मणो वाचकः इति, वाच्यस्यैवायं महिमा यद्वाचकसमाश्रयणेनार्थसिद्धिः इति । **यः** प्रणवः, छन्दसाम् **ऋषभः** - श्रेष्ठः, त्रय्याः सारो हि सः । **विश्वरूपः** - विश्वमस्य रूपमिति स्तूयते वाच्यमहिमाश्रयणेन । विश्वं वाग्जातमस्यैव रूपमिति वा विश्वरूपम् । श्रूयते च अन्यत्र *तद्यथा शंकुना सर्वाणि पर्णानि सन्तृण्णानि एवमोंकारेण सर्वा वाक् सन्तृण्णा ओंकार एवेदं सर्वम्* (छां.उ.२-२३-३) इति । **छन्दोभ्योऽध्यमृतात् सम्बभूव** - वेदेभ्यः ऋग्यजुःसामलक्षणेभ्यः यदमृतं व्याहृतित्रयम् , तस्मादप्यधिकतया प्रणवः सम्बभूव । त्रयीसारभूतव्याहृतित्रयमारभूतः इति यावत् । सोऽयम् **इन्द्रः** - परमेश्वरः, वाच्यगतमैश्वर्यं वाचके समारोप्य स्तूयते । **मा** - मां, मेधया **स्पृणोतु** - उज्जीवयतु । मेधाबलं प्रयच्छतु इति यावत् । हे **देव** - प्रणव ! **अमृतस्य** - प्रकरणात् विद्यालक्षणस्य, **धारणः** - धारकः **भूयासम्** - विद्यासिद्धिः मे भूयात् इति यावत् । **मे शरीरं विचक्षणं** बलारोग्यसम्पन्नं भूयात् । **मे जिह्वा मधुमत्तमा** - प्रकरणात्

ब्रह्मवदनशीलतया मधुरभाषिणी भूयात् । **कर्णाभ्यं भूरि** - भूयः, **विश्रुवम्** - प्रकरणात् ब्रह्मविद्यावबोधकं शास्त्रं शृणवानि । शरीरवाक्श्रवणादि सर्वं विद्यानुकूलवृत्ति भूयादिति यावत् । हे प्रणव ! त्वं **ब्रह्मणः** - परमात्मनः **कोशोऽसि** । असिः कोश इव परंब्रह्म त्वयि वाचके आलम्बनभूते वा निहितमिति भावः । **मेधया** - बाह्यलौकिकवस्त्ववगाहिन्या पिहितोऽसि, लौकिकमतयः त्वां न जानन्तीति यावत् । यद्वा - **ब्रह्मणः कोशोऽसि** - धनमिव कोशे त्वयि ब्रह्म निगूढमस्ति, तदिदं सर्वे जानन्ति । त्वमसि **मेधया** - या इयं प्रज्ञा जपादिसाधनविशेषावलम्बिनी तया, पिहितोऽसि । शब्दब्रह्मनिष्ठा बहवो हि त्वदीयं शाब्दमेव महिमानमखिलवाङ्मयमूलत्वादिलक्षणं जानन्तो जपहोमादिषु केवलं त्वामाश्रयन्ते । कश्चिदेव तु त्वां परमालम्बनं परस्य ब्रह्मणो जानन् उपास्ते, लभते च ततः कोशादिव धनं परंब्रह्म । गुरुभ्यो यन्मया श्रुतं तत् **गोपाय** - परिरक्ष ।

अथ होमे विनियोज्याः श्रीसिद्धिप्रदा मन्त्रा उच्यन्ते - **आवहन्ती** इत्यादिना । **आवहन्ती** - उपनयन्ती, प्रकरणात् धर्माचरणौपयिकाम् अर्थसम्पत्तिम्, **वितन्वाना** - विस्तारयन्ती, चीरमिति दीर्घश्छान्दसः, **चिरं कुर्वाणा** - चिरकालमनुवर्तमानां कुर्वाणा, श्रीरस्तु, कस्य ? **आत्मनः** - मम । तथा **वासांसि गावश्च मम** सन्तु, तथा **अन्नपाने च सर्वदा** यावज्जीवं मम स्ताम् । धर्मैकशेषभूतधनसम्पत्तिलक्षणा श्रीः देहयात्रोपयिकवासः प्रभृति चेति द्वयं प्रार्थितम् ; तत्र प्रथमं देहयात्रोपयिकवासःप्रभृतेः प्राधान्यं ज्ञापयन् आह - **ततो मे श्रियमावह** इति । उभयोराशास्ययोर्मध्ये प्रथमं वासःप्रभृति देहि, तदनन्तरं तां श्रियं ममावह । प्रणव एव प्रार्थ्यते, स एव हि प्रकृतः । सा च श्रीर्धर्मैकशेषभूतेति व्यञ्जयन्नाह - **लोमशां पशुभिः सह** इति । अव्यादिप्रधानां पशुभिः अन्यैश्च सह युक्तां श्रियम् आवह इति यावत् । यागादिधर्मैकशेषता व्यज्यते । **स्वहाशब्दो** होमे विनियोगज्ञापकः । अथानुकूलशिष्यसम्पत्तिः प्रार्थ्यते - **आमायन्तु** इति । **ब्रह्मचारिणः** - विद्यार्थब्रह्मचर्यव्रतनिष्ठाः, **मा** - माम् , **आयन्तु** - आयन्तु । **जने** - जनानां मध्ये, **यशः** - यशस्वी **असानि** । **वस्यसः** - वसुमत्तराणां मध्ये **श्रेयान्** - प्रशस्यः असानि । हे **भग !** - एश्वर्यप्रदत्वात् साधने साध्योपचारेण भगेति प्रणवः सम्बोध्यते, भगवन् इति वाऽर्थः । **तं त्वां प्रविशानि** - वाच्यस्य ब्रह्मणः वाचकस्य प्रणवस्य च अभेदभावनया इदमुच्यते । सर्वाश्रयं **त्वामहं प्रविशानि**, त्वेदेकाश्रयोऽहम् असानि इति यावत् । सः त्वं सर्वात्मको मां प्रविश । हे **भग !** - भगवन् ! **तस्मिन् सहस्रशाखे त्वयि** - त्रयीमूलत्वात् प्रणवः स्तूयते सहस्रशाखे इति, **अहं निमृजे** - शोधयामि, त्वत्संश्लेषेण व्यपेतपापः स्याम् इति यावत् । हे **धातः** - **यथा**

**आपः प्रवताः** - प्रवणा यन्ति,. आपो यथा निम्नदेशे स्वतः प्रवणा यन्ति, **यथा वा मासा अहर्जरम्** - संवत्सरं यन्ति तथा मां ब्रह्मचारिणः आयन्तु सर्वतः । अहोभिः परिवर्तमानो लोकान् जरयति इत्यहर्जरः संवत्सर उच्यते । **त्वं प्रतिवेशोऽसि** - आसन्नगृहस्थानीयोऽसि, सन्निहितोऽसि इत्येतत् । **मां प्र पाहि । मां प्रपद्यस्व** - प्रपद्यस्व । अन्तर्भावितण्यर्थोऽयम् ।।

## पञ्चमोऽनुवाकः

[परविद्योपासनाङ्गव्याहृत्युपासनम्]

**भूर्भुवःसुवरिति वा एतास्तिस्रो व्याहृतयः । तासामुह स्मै तां चतुर्थीम् । माहाचमस्यः[१] प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यान्या देवताः । भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः ।। १ ।।**

**मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । भूरिति वा अग्निः। भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमा । चन्द्रमसा वाव सर्वाणि ज्योतींषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूँषि ।। २ ।।**

**मह इति ब्रह्म । ब्रह्म वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते ।। ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ।। ३ ।। असौ लोको यजूंषि वेद द्वे च ।। ५ ।।**

।। इति पञ्चमोऽनुवाकः ।।

**तै.भा.** - अथ परोपासनाङ्गव्याहृत्युपासनम् उपदिश्यते - **भूः** इत्यादि । व्यावृत्तमाह्रियन्ते ब्रह्मर्षिभिः इति व्याहृतयः भूरादयश्शब्दाः *स भूरिति व्याहरत्* (तै.ब्रा. २-२-४) इति प्रसिद्धाः । एताः तिस्रः व्याहृतयः एतां वक्ष्यमाणां व्याहृतिं तासां उत आसामेव व्याहृतीनां चतुर्थी **माहाचमस्यः**[१] - माहाचमस्यापत्यम् ऋषिः **प्रवेदयते स्म** । गर्गादित्वात् यङ् । का पुनस्सा इत्यत्राह - **मह इति** इति । एतां चतुर्थीमुपासनाय उपदिशति प्राधान्येन माहाचमस्यः। **स** ब्रह्म । **स आत्मा । अङ्गान्यन्या देवताः** इति । चतुर्थ्यां ब्रह्मभावना कर्तव्या ।

---

१. **माहाचमस्यः** - चमसः - सोमयागे उपयुज्यमानः दीर्घचतुरश्रः समुष्टिकः औदुम्बरादिकाष्ठमयः पात्रविशेषः । चमसपात्रोपलक्षित अनेकसोमयागसम्पन्नः महाचमसः महांश्चासौ चमसश्च महाचमसः तस्यापत्यम् माहाचमस्यः ।

चतुर्थ्याम् अङ्गित्वभावना, अन्यासु व्याहृतीषु तदङ्गत्वभावना च कर्तव्या इत्यर्थः । तदधिष्ठानदेवतापेक्षया देवतात्वनिर्देशः । इदानीं भावानाविशेषा उच्यन्ते - **भूः** इत्यादि । भवन्त्यस्मिन् भूतानि इति भूः अधिकरणे क्विप् । भावयति विश्वमवकाशप्रदानेनेति भावः । अन्तर्भावितण्यर्थादसुनि गुणाभावश्छान्दसः । सुष्ठु ईयते प्रवक्ष्यते सुकृतिभिरिति **सुवः।** सुपूर्वत्वादर्ते त्य ना कर्तर्यपि विहितत्वात् उवङ् । महीयते विश्वम् अनेन इति **महः** औणादिको सुन् । आदित्यास्य कथं महस्त्वम् इत्यत्राह - **आदित्येन** इत्यादि । **वाव** इति प्रसिद्धौ । आदित्येन बोधकत्वत् **सर्वे लोका महीयन्ते** - उपक्रियन्ते । मही...... का...... दिः।

**भूरिति वा अग्निः** इत्यादि । **वायोः** ज्योतिष्यन्तर्भावः तद्धेतुत्वात्। अमृतमथनत्वात् चन्द्रेण **सर्वाणि ज्योतिषिं** उपक्रियन्ते । **भूरिति वा ऋचः** इत्यादि । **ब्रह्मणा** - ओंकारेण सर्वे वेदाः **महीयन्ते** - उपक्रियन्ते, अविचलितुं स्थाप्यन्ते।

*ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।*
*स्रवत्यनोकृंतं पूर्व परस्ताच्च विशीर्यते ।।* (म.स्मृ.२.७४) इत्युक्तेः ।

**भूरिति वै प्राणाः** इत्यादि । अन्नेन **सर्वे प्राणाः** धारकत्वेन उपक्रियन्ते।।

**ता वा** इत्यादि । यस्मादेव **ता एताश्चतस्रो व्याहृतयः चतुर्धा भवन्ति तस्माच्चतस्रो व्याहृतयः चतस्रश्चतस्रः** भवन्ति । **ताः** - प्रत्येकं चतुर्धावस्थिताः व्याहृतीः **यो वेद** उपास्ते **स ब्रह्म वेद** तदुपायत्वात् तस्य । ब्रह्मज्ञानमात्रं न फलमित्यत्राह - **सर्व** इति । **अस्मै** - ब्रह्मविदे, **सर्वे** देवादयः, **बलिम्** - पूजां कुर्वन्ति, आ...... ख्येन प्रापयन्ति अर्चिरादिभिः आराधितो भवति इत्यर्थः ।।

**प्र.** - वक्ष्यमाणपरविद्याङ्गभूतव्याहृत्युपासनमुपदिश्यते - **भूर्भुवः** इत्यादिना। **वै** शब्दः प्रसिद्धौ । **तासाम्** इति । **महः** इति व्याहृतिं माहाचमस्यनामा ऋषिः तिसृणां व्याहृतीनां चतुर्थीं वक्ति इत्यर्थः । **तद्ब्रह्मे**त्यादि । यन्महश्शब्दितं, तदेव निरतिशयमहत्त्वात् आत्मब्रह्मशब्दितम् । इतरदेवतास्तु तदङ्गभूताः तस्यात्मनः शरीरभूताः । अतो निरतिशयमहत्त्वाभावात् न महश्शब्दवाच्यत्वम् इत्यर्थः । एवं महश्शब्दस्य वास्तवमर्थमुपवर्ण्य, भूर्भुवस्सुवर्मह इति व्याहृतिचतुष्टये चतुर्विधोपासनं दर्शयति **भूरिति** इत्यादिना । भूरादिव्याहृतिचतुष्टये भूलोकान्तरिक्षस्वर्गलोकादित्यरूपार्थ चतुष्टयदृष्टिः कर्तव्या इत्यर्थः । **महीयन्ते** - पूजां प्राप्नुवन्तीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । महीयन्ते

पूज्यन्ते अनेन इति मह इति महश्शब्दव्युत्पत्तिरिति भावः । **ता वा एताः** इति । चतस्रोऽपि व्याहृतयः उक्तप्रकारेण चतुर्विधोपासनयुक्ताः इत्यर्थः । **चतस्रश्चतस्रो व्याहृतयः** इति । भूराद्याः चतस्रो व्याहृतयोऽपि उक्तप्रकारेण प्रत्येकं चतस्रः । अतः षोडशव्याहृतयः संपद्यन्ते इत्यर्थः । तद्वेदनस्य फलमाह **ता यो वेद** इति । तद्वेदनात् ब्रह्मविद्या निष्पद्यते, सर्वे च देवाः पूजां कुर्वन्ति इत्यर्थः ।।

**कू.भा.** - एवं विद्यांगानि उपदिश्य तत्प्रतिपाद्यस्य वक्ष्यमाणस्य परोपासनस्यांगभूतं व्याहृत्युपासनं प्रथममुपदिशति - **भूर्भुवस्सुवरित्यादि** । आभिः ब्रह्म व्याह्रियते इति व्याहृतयः - भूरादयश्शब्दाः, तद्वाच्यो भूरादिर्वा[1], **एतास्तिस्रो व्याहृतयः** प्रसिद्धाः ब्रह्मशरीरभूताः ब्रह्मप्रतिपादिका वा, भवन्त्यस्मिन् सर्वाणि भूतानीति भूः, अधिकरणे क्विप्, अवकाशप्रदानेन सर्वं पदार्थजातं भावयतीति भुवः, अन्तर्भावितण्यर्थो वेदितव्यः । असुनि गुणाभावश्छन्दसः । सुष्ठुशोभनं वरणीयं प्रापणीयं **सुवः**, अस्मिन् सुष्ठु वरणीयमिति वा, बहुळग्रहणादकर्तर्यपि विच् । यद्वा आदित्याद्युपबद्धाः लोकाः लोकाधिष्ठानदेवता वा । **माहाचमस्यः** इति गर्गादिलक्षणो यञ् । सा पुनः का इत्यपेक्षायामाह - **मह इति** । महयति विश्वं, महीयते विश्वं अनेनेति वा - **महः** । औणादिको सुन् प्रत्ययः । अनया चतुर्थ्या व्याहृत्या अंगिभूतं परं ब्रह्म प्रतिपाद्यते, अन्याभिर्व्याहृतिभिः तच्छरीरभूताः । तदेतदाह - **तद्ब्रह्म, स आत्मा, अंगान्यान्या देवताः** इति । अनया चतुर्थ्या यत्प्रतिपादितं, तत्परं ब्रह्म - बृहत्वब्रह्मणत्वगुणयोगि, स **आत्मा** - आप्नोतित्यात्मा, इतराणि समस्तानि तत्त्वानि अव्यवधानेन व्याप्य धारणपोषणनियमनादिकं कुर्वन् स्वामित्वेनावस्थित इति यावत् । यथैकस्य शरीरस्य शरीरि तथा सर्वेषां भूतानां आत्मा । तथा - *य आत्मनि तिष्ठन्* (बृ.उ.मा.पा. ५-७-२६) इत्यादि । **अंगान्यान्या देवताः** इति । अन्या ब्रह्मरुद्रादयस्सर्वा देवताः **अंगानि** यश इति । शेषभूतानीति न्यायाद्यनपेक्षं कण्ठोक्तम् । इदानीं एकैकां चतुर्धा भूराद्यधिकरणत्वेन उपासनीयां उपदिशति । **भूरिति वा अयं लोकः** भूतोत्पत्तिहेतुत्वात् **भूरिति** पृथ्वीलोकः उच्यते । अवकाशादिदानेन भूतानि भावयतीति भुव इत्यन्तरिक्षलोकः । परमसुखमस्मिन् प्राप्यते इति **सुवरिति** स्वर्गलोकः उच्यते ।

---

१. व्यावृत्तम् आह्रियते ब्रह्मादिभिरिति व्याहृतयः भूरादयश्शब्दाः *स भूरिति व्याहरत्* (तै.ब्रा. २-२-४) इत्यादिषु प्रसिद्धाः तद्वाच्याः वा देवताः । इति भट्टभास्करभाष्यम् ।

महीयते विश्वमनेनेति - **मह इति, आदित्यः** आदित्यान्तवर्ती नारायणः प्रतिपाद्यते । *दित्यदित्यादित्यादिना*[१] (पा.सू. ४-१-८५) आदित्यशब्दात् ण्यः। तदेतत् स्वयमेव निर्वक्ति **आदित्येन वाव सर्वे लोका महीयन्त इति । महीयन्ते -** धारणपोषणभोग्यप्रदानेन उपक्रियन्ते । महियन्त इति कण्ड्वादियगन्तः । **भूरिति वा अग्निरित्यादि**। अग्नेरूष्मणात् अत एव स्विन्ने शरीरे भूतानि भवन्ति अतोभूरिति बोद्धव्यम् । भूतानि धारणादिना भावयतीति वायुः **भुवः** इत्युपास्यः । भूतानि आलोकादिदानेन शोभनं भावयतीति - **सुवरित्यादित्यो** बोद्धव्यः । **महसा -** पूजितेनामृतरूपेण तेजसा सर्वाणि ज्योतींषि उपक्रियन्ते इति **चन्द्रमा मह** इत्युपास्यः। **भूरिति वा ऋचः** इत्यादि ऋग्भिर्यागसाधनभूताभिः यज्ञद्वारेण भूतानि भवन्तीति - **भूरिति ऋचः** उच्यन्ते । साम्ना च भूतानि भाव्यन्ते इति **भुवः** इति सामानि उपास्यानि । यजुर्भिर्ज्ञानकर्मविधानरूपैस्सर्वाणि सुष्ठु रक्ष्यन्ते इति **सुवरिति यजूंषि** प्रतिपाद्यन्ते । **ब्रह्मणा -** प्रणवेन कारणभूतेन, **सर्वे वेदाः महीयन्ते -** उपक्रियन्ते इति **मह इति** ब्रह्मोपास्यम् । **भूरिति वै प्राणः** इति - प्राणो हिं वायु भूतानि भावयतीति - भूरिति प्राण उपास्यः । अशितपीत निर्हारादिना अपानोपि तथेति - **भुव इति अपानो** ज्ञेयः । अन्नपानादिकं सर्वेषु शरीरेषु व्यापाय्य सुष्ठु अवतीति - **सुवरिति व्यानो** विज्ञेयः । **मह इत्यन्नम्** । स्वयमेव तस्य निर्वचनप्रकारमाह - **अन्नेन वाव सर्वे प्राणा महीयन्तेति । प्राणाः - प्राणिनः**, महीयन्ते- उपक्रियन्त इति यावत् । **ता वा एता** इत्यादि भूराद्या **एताश्चतस्रश्चतुर्धा**, उपासनाधिकरणभेदेन चतस्रश्चस्रः षोडशधा प्रतिपादिता याः, ता यो **वेद -** उपास्ते, **स वेद ब्रह्म -** परं ब्रह्म साक्षात् कुर्यात्, तत्साक्षात्कारस्योपायत्वाद-स्योपासनस्य । किंच - **सर्वेस्मै देवा बलिमावहन्ति । अस्मै -** व्याहृत्युपासकाय, **सर्वे देवाः -** इन्द्रादयः, **बलिं -** पूजा, **आहरन्ति -** आभिमुख्येन प्रापयन्ति देवादिभिस्सर्वैराराद्धयो भवतीत्यर्थः ।।

**आ.भा. -** षष्ठोऽनुवाके परविद्यामुपदेक्ष्यति सम्प्रति तदङ्गभूतं व्याहृत्युपासनं स्तौति **भूः** इत्यादिना । वा शब्दः प्रसिद्ध्यर्थकः । भूर्भुवः सुवः इत्येताः तिस्रो व्याहृतयः प्रसिद्धा एवेत्यर्थः । तासां तिसृणां व्याहृतीनां **चतुर्थी -** चतुष्ट्वसंख्यापूरणी व्याहृती **माहाचमस्यः -** महाचमसस्य अपत्यं माहाचमस्य एतन्नामा ऋषिः । **प्रवेदयते स्म** दृष्टवान् । उह इति निपातद्वयं वृत्तस्यैव वस्तुनोऽनुवदनमिति द्योतयति । काऽसौ

---

१. **दित्यदित्यादित्य......** *दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः* (पा.सू.४-१-८५) इति सूत्रपाठः ।

चतुर्थीं व्याहृतिर्यां ददर्श माहाचमस्य इत्ययमाह - **मह इति** । चतुर्थीं व्याहृतिं दृष्टवान् स ऋषिरित्यर्थः । तद्ब्रह्म मह इति चतुर्थी व्याहृतिरेव ब्रह्म निरतिशयबृहत्त्वाद् हेतोः । स आत्मा चतुर्थी व्याहृतिरेव सर्वस्यात्मा । सर्वं हि सा व्याप्नेति तस्मात् सर्वात्मभूता इत्यर्थः । **अङ्गान्यान्या देवताः** - देवतापदं लोकस्याप्युपलक्षणम् । अन्ये देवाः लोकाश्चास्याः चतुर्थ्या व्याहृतेरङ्गानि अवयवाः । अस्याः सर्वव्यापकत्वादित्यर्थः । एवं महशब्दस्य मुख्यमर्थमुक्त्वा चतसृष्वपि व्याहृतिषु उपासनाचतुष्टयं प्रदर्शयति **भूः** इत्यादिना । **भूरिति वा अयं लोकः** - भूरित्यास्यां व्याहृतौ भूलोकदृष्टिः कार्या । सुवः इति तृतीयव्याहृतौ स्वर्गलोकदृष्टिः विधेया । मह इति चतुर्थीं व्याहृतौ आदित्यदृष्टिः कर्तव्या इत्यर्थः । आदित्येन भूरादयो लोकाः सर्वेऽपि **महीयन्ते** - महिमानमुपगच्छन्ति । पूजनीयतां प्राप्नुवन्ति इत्येतत् । तस्मान्मह इत्यस्यां चतुर्थ्यां व्याहृतौ आदित्यचिन्तनं कुर्यादिति कथनमिदम् । वाव शब्दोऽवधारणसूचकः ।

व्याहृतिचतुष्टये उपासनाचतुष्टयं प्रथममुक्त्वा द्वितीयम् उपासनाचतुष्टयम् उपदिशाति **भूः** इत्यादिना । भूरिति व्याहृतौ आग्निचिन्तनं कुर्यात् । भुवः इति व्याहृतौ वायुं चिन्तयेत् । सुवरिति तृतीयव्याहृतौ आदित्यं भावयेत् । मह इति चतुर्थ्यां व्याहृतौ **चन्द्रमसं** भावयेदित्यर्थः । अत्र निमित्तमाह - **चन्द्रमसा** इति । चन्द्रमसा सर्वाणि ज्योतीषिं तारकविद्युदादीनि **महीयन्ते** - वृद्धिं प्राप्नुवन्ति ।

तृतीयमुपासनाचतुष्टयं व्याहृतिषु प्रदर्शयति - **भूः** इति । भूरिति व्याहृतौ ऋग्वेददृष्टिः कार्या । भुवः इति व्याहृतौ गीतिप्रधानसामवेददृष्टिः कर्तव्या । सुवः इति तृतीयव्याहृतौ यजुर्वेददृष्टिः विधेया । मह इति **चतुर्थ्यां व्याहृतौ** ब्रह्मदृष्टिः कार्या । ब्रह्मात्र प्रणवः शब्दाधिकारात् । चतुर्थ्यां व्याहृतौ प्रणवचिन्तने निमित्तं निर्दिशति - **ब्रह्मणेति** । **ब्रह्मणा** प्रणवेन सर्वे वेदा ऋगादयो महीयन्ते - पूज्यन्ते प्रणवपूर्वकत्वाद् वेदानाम् ।

चतुर्थमुपासनचतुष्टयं व्याहृतिषु वक्ति - **भूः** इत्यादि । भूः इति व्याहृतौ प्राणदृष्टिः कार्या । भुव इति व्याहृतौ अपानदृष्टिः कार्या । सुवः इति व्याहृतौ व्यानचिन्तनं कार्यम् । मह इति चतुर्थ्यां व्याहृतौ अन्नं भावयेदित्यर्थः । चतुर्थ्यामन्नदृष्टिविधाने निमित्तमाह - **अन्नेन इति** । सर्वे प्राणाः प्राणापानादयो अन्नेन **महीयन्ते** - महिमानं यन्ति अन्नाधीनत्वात् प्राणादिस्थितेः ।

वै शब्दोऽवधारणे । **एताः** - भूरादयः चतस्रो व्याहृतयः प्रत्येकं **चतुर्धा** - चतुष्प्रकारा भवन्ति । एकैकस्यां व्याहृतौ उपासनचतुष्टयस्य विधानात् । अतः चतस्रोऽपि व्याहृतयः प्रत्येकं चतस्रः चतस्रः भवन्ति, तस्मात् सम्भूय षोडशप्रकारा भवन्ति इत्यर्थः । भूरिति प्रथमव्याहृतेर्भूलोकात्मकत्वं वह्न्यात्मकत्वम् ऋगात्मकत्वं प्राणात्मकत्वञ्चेति चतस्रो

विधा भवन्ति । भुवः इति व्याहृतेरन्तरिक्षवायुसामापानात्मकत्वेन चतुर्विधत्वम् । सुवः इत्यस्याः स्वर्गादित्ययजुर्व्यानरूपतया चतुर्विधत्वम् । महः इति चतुर्थ्यास्तु आदित्यचन्द्रप्रणवान्नस्वरूपतया चतुःप्रकारत्वम् । एवं षोडशप्रकारमुपासनं सहैव कार्यमिति फलति । **ताः** - व्याहृतीः उक्तरीत्या, **यः** उपासकः **वेद** - समुपास्ते **सः** उपासकः, **ब्रह्म वेद** - ब्रह्मविषयकज्ञानवान् भवति । यदा वक्ष्यमाणरीत्या ब्रह्मज्ञानवान् भवति तदा **सर्वे देवाः** - इन्द्रादयः **अस्मै** ब्रह्मविदे बलिमुपहरन्ति । *अस्य ब्रह्मविदो पूजां कुर्वन्ति* एतेन षष्ठेऽनुवाके वक्ष्यमाणाया ब्रह्मविद्याया अङ्गत्वं व्याहृत्युपासने सूचितं भवति ।।

**सु.** - अथ परविद्यामुपदेक्ष्यन् प्रथमं तदङ्गभूतव्याहृत्युपासनमुपदिशति - **भूर्भुवः सुवः** इत्यादिना । **भूर्भुवः सुवः** इत्येताः व्याहृतयः तिस्रः प्रसिद्धाः, तासां व्याहृतीनां चतुर्थीं व्याहृतिं मह इत्येतां **माहाचमस्यः** - महाचमसस्यापत्यं कश्चिदृषिः प्रवेदयते, उहेति वृत्तानुवादे, चतुर्थीं व्याहृतिं माहाचमस्यो महर्षिः मन्त्रद्रष्टा ददर्श इति यावत् । **मह इति ब्रह्म** - महत्त्वात्, ब्रह्मैव हि सर्वतो महत्, महत् बृहदित्यनन्यार्थम् । स एवात्मा सर्वस्य । तस्य महःशब्दवाच्यस्य परस्य ब्रह्मणः अङ्गान्यान्या देवताः । एवं चतुर्थ्या व्याहृतेर्यो मुख्यार्थः स निरूपितः । अथ चतुर्विधं व्याहृतिचतुष्टयोपासनमुच्यते **भूरिति वा अयं लोकः** - भूलोकः, भूरिति व्याहृतौ भूलोकदृष्टिः कार्येति यावत् । **भुवः इत्यन्तरिक्षम्** - भुवः इति व्याहृतिमन्तरिक्षं भावयेत् । **सुवरित्यसौ लोकः** - स्वर्गो लोकः, सुवरित्येतां व्याहृतिं स्वर्गं चिन्तयेत् । मह इति चतुर्थी व्याहृतिः आदित्यः, ताम् आदित्यं भावयेत् तस्यां तथा दृष्टौ निमित्तमाह - **आदित्येन वा सर्वे भूरादयो लोकाः महीयन्ते** । तथा चतुर्थ्या मह इत्यनया व्याहृत्या भूरादयो व्याहृतयः महीयन्ते । **भूरिति वाऽग्निः** इत्यादि । भूरादिषु क्रमादग्न्यादिदृष्टिः कार्या चतुर्थ्यां चन्द्रदृष्टौ निमित्तमाह - **चन्द्रमसा वा सर्वाणि ज्योतिंषि महीयन्ते** इति । **भूरिति वा ऋचः** इति । **मह इति ब्रह्म** - प्रणवः भूरादिषु क्रमादग्न्यादिदृष्टिः कार्या इति यावत् । चतुर्थ्यां व्याहृतौ प्रणवदृष्टौ निमित्तमाह - **ब्रह्मणा वाव इति भूरिति वै प्राणः** इत्यादिः । भूरादिषु क्रमात् प्राणादिदृष्टिः कार्या इति यावत् । चतुर्थ्यां व्याहृतौ अन्नदृष्टौ निमित्तमुच्यते - **अन्नेन वा** इति । ता वा एताः भूरादयो व्याहृतयः चतस्रश्चतुर्धा भवन्ति दृष्टिभेदात् । तस्मात् चतस्रोऽपि व्याहृतयः - प्रत्येकं चतस्रः । प्रथमं व्याहृतीं भूलोकात्मना अग्न्यात्मना ऋगात्मना प्राणात्मना च पश्येत्, द्वितीयाम् अन्तरिक्षात्मना वाय्वात्मना सामात्मना अपानात्मना च पश्येत्, तृतीयां स्वर्गात्मना आगित्यात्मना यजुरात्मना

व्यानात्मना च पश्येत्, चतुर्थीमादित्यात्मना चन्द्रात्मना प्रणवात्मना अन्नात्मना च पश्येदिति चतसृणामपि चतुर्विधं मिलितमुपासनं कार्यमित्युक्तं भवति । ता एता व्याहृतीरुक्तेन प्रकारेण वेद, **स वेद ब्रह्म** - वक्ष्यमाणब्रह्मविद्यां लभते, ततश्च अस्मै ब्रह्मविदे सर्वे देवा बलिमुपहरन्ति पूजयन्ति इत्येतत् । अङ्गिफलम् अङ्गे प्रोच्यते ।।

## षष्ठोऽनुवाकः

[शिष्यं प्रति उपासनोपदेशः]

**स य एषोऽन्तर्हृदयः आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो[१] विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ।। १ ।।**

**सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्, ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्मप्राणारामं मन आनन्दम् । शान्ति समृद्धममृतम् इति प्राचीनयोग्योपास्स्व ।। २ ।। वायावमृतमेकं च ।। ६ ।।**

।। इति षष्ठोऽनुवाकः ।।

**तै.भा.** - पूर्वं स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति इत्युक्तम् । तद्वक्तव्यान्तरैस्सह विस्तरेणोपदिशति - **स य एषः** इत्यादि । हृदये अन्तः अन्तर्हृदयं तस्मिन् **अन्तर्हृदये** अधिकरणोऽव्ययीभावः । *तृतीयासप्तम्योर्बहुलम्* (पा.सू.२-४-८४) इत्यंभावाभावः । *अधो निष्ठ्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति* । (महा.ना.९६) इति वक्ष्यमाणं स्थानं हृदयं तस्मिन् स एष आकारोस्ति । यः इति स्थाने वैदिकप्रयोगः यथा स यश्चायं पुरुषे इति य एष इति योगिना प्रत्यक्षं तथोच्यते *आकाशस्सुषिरं सूक्ष्मम्* (महा.ना.९७) इति हि वक्ष्यते **तस्मिन्नयं मनोमयः** विशुद्धेन मनसा ग्राह्यः **पुरुषः** परमात्मा वर्तते । योगिभिः साक्षात्कृतत्वादपरोक्षनिर्देशः । **अमृतः** उपासकानाम् अमृतवत् भोग्यः । यद्वा अनवधेनास्य हन्यत इत्युक्तरीत्या तत्स्थानविनाशेऽपि अविनाशी शरीरान्तर्वर्तित्वेऽपि शरीरगतविकारैरस्पृष्टः इत्यर्थः । **हिरण्मय** प्रकाशरूपो हिरण्मयो वा *पीताभास्यात्तनूपमेति* वक्ष्यमाणरीत्या

---

१. *कश्च अश्च ईशश्च केशाः तेषामन्तः ब्रह्मविष्णुरुद्राधिकारातीत इति केचित्* इति भट्टभास्करभाष्यम् । *केशानाम् अन्तः अवसानं मूलं केशान्तः, मूर्धप्रदेशः इत्यर्थः ।* इति शङ्करभाष्यम् ।

उपासकानुग्रहाय कृतहिरण्मयशरीरो वा । *स य एषोऽन्तर्हृदय आकाशे हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व ऐव सुवर्णः* (छां.उ.१.६.६) इति सूर्यान्तर्वर्तित्वेन श्रूयमाण एव अन्तर्हृदयेऽपि वर्तते । *स यश्चायं पुरुषे यश्चासौ आदित्ये स एकः इत्यतिदेशात् । एवमुपास्यस्वरूपं उपासनस्थानयोग्योक्तम् ।*

अथ उपासनाङ्गत्वेन उपासकस्य उत्क्रान्तिमार्गमाह **अन्तरेण तालुके** । तालुकयोर्मध्ये *अन्तरान्तरेण युक्ते* (पा.सू.२-३-४) इति द्वितीया । **य एष स्तन इव** अधो लम्बते । अजास्तनाकारोवयव विशेषः **सः इन्द्रस्य** - जीवात्मनः **योनिः** - निष्क्रमणस्थानम्, *इन्द्रियमिन्द्रलिङ्गमिति* (पा.सू.५-२-९३) पाणिनिसूत्रे इन्द्रशब्देन इन्द्रियवान् जीवः उच्यते इति सुव्यक्तम् । अयं च अवयवः सुषुम्नैव । *शतञ्चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति* (कठ.उ.६-१६) इत्यत्र श्रुतेः । इदानीं देवयानाख्य उत्तरमार्गः उपदिश्यते **यत्रासौ केशान्तो विवर्तते** परिणमति तादृश **शीर्षकपाले व्यपोह्य** भित्त्वा । **भूरिति** पूर्वमुक्ते **अग्नौ प्रतितिष्ठति** सत्कारेण प्रतिष्ठां लभते । **ततः** - तस्मात् निष्क्रम्य **सुवरित्युक्ते आदित्ये** प्रतितिष्ठति । ततस्तस्मान्निर्गत्यमहरित्युक्ते ब्रह्मणि प्रतितिष्ठति पूर्वानुवाकोक्ताङ्गव्याहृत्युपासनफलमेव तत् ।

किमेवं ब्रह्मप्राप्तस्य अस्ति पुनरावृत्तिः नेत्याह **आप्नोति स्वाराज्यम् ।** स्वेन राजतीति स्वराट् *सत्सूद्विष......* (पा.सू.३-२-६१) इत्यादिना क्विप् स्वतन्त्रः अकर्मवश्य इत्यर्थः स्वाराज्यमाप्नोति अकर्मवश्यो भवति कर्मकृता हि पुनः संसारप्राप्तिः निवृत्यैव सिद्धान्तानिवृत्तिरिति भावः । ज्ञानसंकोचककर्मनिवृत्या सर्वत्वमपि प्रादुर्भवतीत्याह **आप्नोतीत्यादि** । मनसः पतिः - **मनसस्पतिः,** हलन्तादसंज्ञायामप्यलुक्कादित्वात् सः । (?) भावप्रधानो निर्देशः मनसस्पतित्वमाप्नोति **वाक्पतिः, चक्षुष्पतिः, श्रोत्रपतिः, विज्ञानपतिः** इति भवतीति शेषः । वाक्शब्देन रसनेन्द्रियमुच्यते । विज्ञायते अनेन इति करणव्युत्पत्त्या विज्ञानशब्देन परिशेषात् घ्राणत्वचौ गृह्येते । एतैः शब्दैः युगपत् सर्वेन्द्रियजन्यज्ञानत्वोक्त्या सर्वज्ञत्वमुक्तं भवति ।

अथ ब्रह्म साम्यापत्तिमाह - **एतत्** इति । ततः सर्वज्ञत्वादि प्राप्तेर्हेतोः......(?)यमुपासकः पुरुषः विधेराब्रह्मापेक्षया नपुंसकत्वं ब्रह्म भवति ब्रह्मसमो भवति परमं साम्यमुपैति । *मम साधर्म्यमागताः* (भ.गी.१४-२) इत्यत्र विवरणात् । ब्रह्म विशिनष्टि - **आकाशशरीरम् ;** आसमन्तात् प्रकाशमानस्वरूपं अनेन विभुत्वमुक्तम् । अमृतम् अविनाशि अनेन नित्यत्वमुक्तम् । सत्य अविपर्यस्त आत्मा संकल्परूपज्ञानं यस्य तत् **सत्यात्म,** सत्यसंकल्पमित्यर्थः ।

**प्राणाः** जीवाः, तेषु आरमतीति **आरामः**, उपासकजनवात्सल्येन अन्तर्यामितया वर्तमानम् इत्यर्थः । मननं **मनः**, *मन ज्ञाने* (धा.पा. ११७७) इत्यस्मात् धातोः भावे असिप्रत्ययः ज्ञानरूपमित्यर्थः । **आनन्दं** - सर्वानुकूलस्वरूपं, **शान्तिः** अत्र हेयोपरमः तया **समृद्धं** पूर्णं एकेनापि हेयेन रहितमनेन वाक्येन अखिलहेयप्रत्यनीककल्याणैकतानं ब्रह्मोक्तम् ।।

एवमुपासनस्थानमुपास्यस्वरूपं तदुपासनफलानि सुषुम्नाप्रवेशदेवयानगति ब्रह्मप्राप्ति तत्साम्यापत्तीश्च उपदिश्य स्वयमाचार्यरूपेण श्रुतिः शिष्याय विदधाति - **इति प्राचीनयोग्योपास्व** इति । **प्राचीनयोग्य !** इति सामान्येन शिष्यसम्बोधनम् । प्राचीनैः - पूर्वकाण्डोदितकर्मभिः योग्यः उपासनार्ह नित्यादिभिः विमलमानसो हि ब्रह्मविद्यायामधिकारी । *तमेतं वेदानुवचनेन ब्रह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन* (बृ.उ.६-४-२२) इत्यत्र श्रवणात् । इति उक्तप्रकारेण **उपास्व** - उक्तोपास्य विषयं निरन्तरं प्रत्ययं कुरु इत्यर्थः ।।

**प्र.** - अङ्गान्युपदिश्य परविद्यामाह - **स य एषः** इत्यादिना । हृदयान्तर्गताकाशे विशुद्धमनोग्राह्यः अमृतः असंसारी, कमनीयविग्रहो य आस्ते, सः उपासितव्यः इत्यर्थः । इदञ्च वाक्यं परमात्मपरतया *सर्वत्र प्रसिद्धोपदेशात्* (ब्र.सू,१-२-१) इत्यत्र [1]भाष्यकृता[1] उदाहृतम् । तथैव [2]व्यासार्यैः[2][१] व्याख्यातञ्च । अतो जीवविषयत्वशकां न कार्या ।

एवं परविद्यामुपदिश्य अर्चिरादिगतिं दर्शयति - **अन्तरेण** इत्यादिना । **तालुके** - जिह्वायां **अन्तरेण** - मध्ये गोस्तन इव यो [3]लम्बते[3] सा इन्द्रस्य सन्निहितमुक्तैश्वर्यस्य जीवस्य **योनिः** - निर्गममार्गः । **यत्रासौ** इति । **यत्र** - यस्मिन्मार्गे **केशयोः** - कः - ब्रह्मा, ईशः - रुद्रः । *क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्* (ह.वं.१३-४८) इति केशवशब्दनिरुक्तौ तथा वर्णनात् [4]तयोरन्तः[4] अवधिभूतः; कारणमिति यावत् । संहर्ता, स्थानभूत इति वा । तादृशो भगवान् यत्र मार्गे विशेषेण प्राप्यतया वर्तते इत्यर्थः । यद्वा - तालुके अन्तरेण ऊर्ध्वोधरतालुद्वयमध्ये तयोरप्यधस्तादित्यर्थः । यः स्तन इव लम्बते । *संततं सिराभिस्तु लम्बत्याकोशसन्निभम्* (महा.ना.१७) इति श्रवणात् हृदयपुण्डरीकमुच्यते । सा **इन्द्रस्य** - परमात्मनः **योनिः** - स्थानम् । यत्र **असौ** केशान्तवत् सूक्ष्मो जीवः विशिष्य वर्तते । *हृदि ह्ययमात्मा* (प्र.उ.३-६)

---

१. व्यासार्यैः - श्रुतप्रकाशिकाचार्यैः सुदर्शनसुरिभिः इत्यर्थः ।

1. भगवता भाष्यकृता - ग,ध । 2. व्यासाचार्यैः - क,ख,च । 3. अवलम्भते - ग,घ ।
4. तयोरप्यन्तः - अ ।

इति श्रुतेः । **व्यपोह्य** इति । प्रयाणकाले शिरःकपाले भित्त्वा भूरित्युपासितया व्याहृत्या **अग्नौ** - अग्निलोके प्रतिष्ठितो भवति । भूरिति व्याहृतिः अग्निलोकं प्रापयतीत्यर्थः । यद्यपि सर्वस्य अर्चिरादिमार्गगन्तुः अग्निलोकप्राप्तिरस्ति, तथापि भूरादिव्याहृत्युपास्तिमहिम्ना कञ्चित्कालं तत्र तिष्ठति इत्यर्थः । **स्वाराज्यम्** - अकर्मवश्यत्वमित्यर्थः । **आप्नोति** इत्यादि । स्वसंकल्पनिष्पाद्यसर्वेन्द्रियः इत्यर्थः । करणनिरपेक्षज्ञान इति वा अर्थः । **एतदिति ।** ततः तदनन्तरं एतद्भवति । किं तदित्यत्राह **आकाशः** इति । आ समन्तात् प्रकाशमानदिव्यविग्रहयुक्तं [1]आविर्भूतब्रह्मरूपं[1] भवति इत्यर्थः । **सत्यात्म** इति । सततैकरूपतया सत्यानां नित्यमुक्तानामात्मनां प्राणवत् परमप्रेमास्पदभूतो यः परमात्मा, स एव आरामः सर्वविधभोग्यभूतो यस्य, तत् तथोक्तम् । मनसा संकल्पमात्रेण सिद्धः आनन्दो यस्य तत् मन आनन्दम् । *यं कामं कामयते, सोऽस्य संकल्पादेव समुत्तिष्ठति* (छां.उ.८-२-१०)इति श्रुतेः । शान्त्या **समृद्धम्** - आत्यन्तिकशान्तियुक्तम् । **अमृतम्** - असंसारि । एतादृशं ब्रह्मण भवतीति पूर्वेणान्वयः । **इति** - इति । एवं प्राचीनयोग्यनामानं शिष्यमनुशिष्टवान् इति शेषः ।।

**कू.भा.** पूर्वोक्तव्याहृत्युपास्तिनिष्ठस्य देवयानमार्गेण भगवत्प्राप्तिप्रकार उच्यते **स य एषः** इत्यादिना । **अन्तर्हृदये** - हृदयमध्ये, **य एषः आकाशः** - अवकाशः । **स एषः** इति तस्य प्रसिद्धतां सूचयति । **तस्मिन्नयं पुरुषो मनोमयः** - योगशुद्धेन मनसा ग्राह्यः **अयं पुरुषः** - जीवात्मा, वर्तते, स्वानुभवसिद्धत्वादयमिति निर्दिश्यते । **अमृतो हिरण्मयः । अमृतः** - जननमरणादिधर्मरहितः, **हिरण्मयः** - हितरमणीयरूपः इत्यर्थः । व्याहृत्युपासकस्य एवं वर्तमानस्य निर्गमनद्वारमुपासनांगत्वेनोपदिशति - **अन्तरेण तालुके** - तालुमध्ये । **य एष स्तन इवावलम्बते** - स्तनाकारः अवयवविशेषो योस्ति । **सेन्द्रियोनिः । सः इन्द्रस्य** - जीवात्मनः, शरीरेश्वरस्य वा, **योनिः** - निष्क्रमणस्थानम् । यया योन्या निर्गच्छति सैव विशेष्यते उपरिष्टात् । **यत्रासौ केशान्तो विवर्तते । यत्र** - यस्यां, **केशान्तः** तदाख्यः स्थानविशेषः, **विवर्तते** - क्षेत्रज्ञसतयानिष्क्रम्य, **शीर्षकपाले** - दक्षिणोत्तरे, **व्यपोह्य** - विभिद्य, ततः **भूरित्यग्नौ प्रतितिष्ठति** - भूरित्युपासनेन, **अग्नौ** - अग्निलोकं, स गच्छति, **भुवः** इत्युपासनेन वायुलोकम् ।

**सुवरित्यादित्ये** - आदित्यलोकम्, **मह इति ब्रह्मणि** - ब्रह्मलोकं, परमव्योम गच्छति । तत्र गत्वा, **आप्नोति स्वाराज्यं** - अकर्मवश्यत्वं भगवत्कैंकर्यं प्रतिबन्धकनिवृत्तिरूपं,

---

1. ब्राह्म - अ,ग,घ ।

**आप्नोति मनसस्पतिं** - सर्वनियामकपरुषोत्तमं प्राप्नोति । अथवा - मनश्शब्देन मनोधिष्ठाता जीवात्मा उच्यते, स्व स्वामिनं प्राप्नोतीति यावत् । एवं भगवन्तं प्राप्तः, **वाक्पतिर्भवति** - वागिन्द्रियसाध्यस्य कृत्स्नशब्दराशेस्तज्जनितसुखस्य वा नियामको भवति । **चक्षुष्पतिश्च भवति** - चक्षुरिन्द्रयसाध्यस्यापि तथा । **श्रोत्रपतिश्च** पूर्ववत् । **विज्ञानपतिश्च भवति** - करतलामलकवत् सदा स्वज्ञानेन सर्वमनुसन्दधाति । **एतत्ततो भवति । ततः** - भगवत्प्राप्त्यनन्तरं, **एतद्भवति** - एतदादिकं सर्वं संपद्यते । किं तत् ? आकाशशरीरं **ब्रह्म भवति** - ब्रह्मात्मको भवति, ब्रह्मणः आकाशशरीरत्वं दिव्यस्य भगवतो रूपस्याकाशवदासमन्तात् काशमानत्व-सूक्ष्मत्व-ज्ञानाद्यनाच्छादकत्व-नित्यत्व-सर्वेतरावकाशप्रदत्वादिना । पुनरपि ब्रह्मैव विशेष्यते - **सत्यात्म** - सत्यानां चेतनाचेतनानां सर्वेषामात्मभूतं, अथवा **सत्यात्म** - सत्यं मूर्तामूर्तमपि आत्मस्वरूपं यस्य तदिदं सत्यात्म, **प्राणारामं** - प्राणेषु, आरमणं - आक्रीडा यस्य तत्, प्राणारामं, प्राणानां वा आरामो यस्मिन् तत् प्राणारामं, अथवा प्रवण एव आत्मस्वरूपमेव, **आरामः** - उद्यानं यस्य तत् प्राणारामं स्वानन्दतृप्तमित्यर्थः । **मन आनन्दं** - आनन्दभूतं - अनन्दकृत् सुखकृदेव यस्य मनः तन्मन आनन्दम्, यद्वा मनस्यैव आनन्दो यस्य तन्मन आनन्दं, नेन्द्रियान्तरापेक्षानन्दमित्यर्थः । अनेन मुक्तात्मनामीश्वरस्य च दिव्यरूपवत्वं निरवधिकानन्दत्वं मनोविशेषवत्त्वं, इत्याद्यर्थजातं न्यायानपेक्षं श्रुत्यैवोक्ततिति विदितम् । **शान्तिसमृद्धम्** - एश्वर्यादिनिमित्तोद्धर्षाभावः शान्तिः, तया समृद्धं, तथा *शान्तोदित*[1] *विज्ञानाय* इति मूलतन्त्रे[2] । यद्वा शान्तिः उपशमः, शान्तिश्चासौ समृद्धं च शान्तिसमृद्धं, शान्त्यावासमृद्धवत् तदुपलक्ष्यते इति शान्तिसमृद्धम्, **अमृतं** - शरीरादि विशिष्टनिष्टमरणादिरहितम् । व्याहृत्युपासकस्य एवम्भूतस्य परस्य ब्रह्मणश्शरीरत्वेनानन्यथासिद्धं हि शेषत्वं भवति । **इति प्राचीनयोग्ययोपास्व** - इत्याचार्यशिष्यमनुशास्ति, हे **प्राचीनयोग्य !** तस्यापत्म् (पा.सू.४-१-९२) इतिगर्गादिलक्षणो यञ् । अथवा प्राचीनैः पूर्वोक्तैः, विद्यांगैः भगवदुपासनयोग्यतामापन्न हे शिष्य ! त्वं पूर्वोक्तप्रकारेण उपास्व इति ।।

**आ.भा.** - भूरादिव्याहृतयः तिस्रो यस्याङ्गभूताः तादृशमहःशब्दवाच्यस्य ब्रह्मणोऽङ्गिरूपस्य यादृशगुणविशिष्टं रूपं यत्र स्थाने समुपास्यं तद्रूपं स्थानञ्च दर्शयति -

---

१. **शान्तोदित दशा** - भगवतः शान्तोदितदशा नित्योदितदशा इति दशाद्वयमस्ति । तत्र हेयप्रत्यनीक कल्याणैकतानस्वरूपानुभवदशा प्रथमा । इतरा तु विभूत्यनुभवदशा ।

२. **मूलतन्त्रे** - पञ्चरात्रतन्त्रे ।

**स य एषः** इति । **अन्तर्हृदये** - हृदयप्रदेशे शरीरान्तर्गते य एष प्रसिद्ध आकाशो वर्तते तस्मिन् हृदयाऽकाशे स महःशब्दवाच्यतया पूर्वनिर्दिष्टोऽयं **पुरुषः** - पुरि शरीरे शयनात् पुरुषो निरुपाधिकपुरुषशब्दवाच्यो वा परमात्मा[१] कीदृशः सः इत्यत्राह - **मनोमयः** । मनोमयत्वगुणविशिष्टो विशुद्धमनोग्राह्यः इत्येतत् । **अमृतः** - अमरणधर्मा । उपलक्षणमेतज्जन्मादीतरविकारराहित्यस्यापि तेन जन्ममरणादिसर्वविकाररहितः इत्यर्थः । **हिरणमयः** - हिरण्यवत् कान्तविग्रहः । सः उपास्यः । मनोमयत्वामृतत्वहिरणमयत्वगुणविशिष्टो मनःशब्दवाच्यः पूरुषो हृदयाकाशे समुपासनीयः मुक्तिकामैः इत्यर्थः । इयमेव परा विद्याग्रे कथ्यते ।

एवं परविद्यामुपदिश्य तदुपासकस्य परमात्मप्राप्तये प्रसिद्धामर्चिरादिगतिमुपदिशति **अन्तरेण** इत्यादिना । **तालुके** इत्यत्र *अन्तरान्तरेण द्वितीया* (पा.सू.२-३-४) इति सूत्रेण द्वितीया । तालुकयोन्तरेण मध्यभागे एषः प्रसिद्धः स्तन इवालम्बते गोस्तनवत् अधोमुखस्तिष्ठति मांसखण्डः तस्य मध्ये इत्यर्थः । **इन्द्रयोनिः । इन्द्रस्य** - परमात्मनः **योनिः** - प्राप्तिसाधिका नाडी सुषुम्नानाम्नी शास्त्रप्रसिद्धायाऽस्ति असौ नाडी इन्द्रयोनिशब्दोदिता यत्र प्रदेशे केशान्तः[२] - केशानां शिरोभवानां लोम्नाम् अन्तो मूलं विद्यते तादृशे शिरःकपाले शिरोगतं कपालद्वयं **व्यपोह्य** - पृथक्कृत्य **विवर्त्तते** - विशेषतस्तिष्ठति । अभिनिस्सृता वर्तते इत्येतत् ; अनयैव नाड्या ब्रह्मविज्जीवः शरीरान्निष्क्रामाति । अत्रार्थेऽपराऽपि श्रुतिर्भवति । *शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका तयोर्ध्वमायन्नमृतत्वमेति,* (कठ.उ.२-३-१६) अनया नाड्या शरीरान्निष्क्रम्य अन्यविधब्रह्मोपासकोऽपि अर्चिरादिमार्गेणैव देशविशेषविशिष्टं परमात्मानं प्राप्नोति यद्यपि तथापि व्याहृत्युपासको व्याहृत्युपासासामर्थ्यात् प्राप्तेषु वह्न्यादिलोकेषु कञ्चित्कालं विश्रामं लभते यथा तथा नापरः इति वक्तुमाह - **भूरित्यग्नौ प्रतितिष्ठति** । प्रथमव्याहृतौ भूरित्यस्यामग्निचिन्तनं कृतं व्याहृत्युपासकेन तन्महिम्नाऽग्निलोके मार्गगते प्राप्ते सति तत्रायमुपासकः कञ्चित्कालं विश्राम्यति इत्यर्थः । **भुव इति वायौ** । भुव इति द्वितीयव्याहृतौ वायुचिन्तनमहिम्ना आदित्यलोके किञ्चित्कालं विश्रामं लभते इत्यर्थः । **मह इति ब्रह्मणि** । मह इति चतुर्थव्याहृतौ तद्वाच्यपरब्रह्मचिन्तनमहिम्ना परमात्मसमीपे प्रतिष्ठितो भवति । न ततो निर्वतते कदाचिदपीति भावः परमात्मधामगतः किं किं

---

१. तथा च स्मर्यते - *भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।*
*निरुपाधी च वर्तेते वासुदेवे सनातने ।।* इति । (पाद्मोत्तर - ६-७५४-६६)

२. तथा च श्रुत्यन्तरम् - *स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत* इति (ए.उ.खं.३)

प्राप्नोतीत्याह - **आप्नोति** इति । **स्वाराज्यं** - कर्मबन्धविनिर्मुक्तिं लभते इत्यर्थः । **आप्नोति मनसस्पतिम्** । सर्वेषां मनसां पतिर्भवति । स्वसंकल्पवशादेव सर्वार्थज्ञानसम्भवान्मनोऽपेक्षा तस्य न भवति । सत्यामिच्छायां सर्वैरेव मनोभिः स मननं कर्तुं समर्थो भवतीति भावः । सर्वासां वाचां सर्वेषां चक्षुषां श्रोत्राणां विज्ञानानाञ्च पतिः स भवति । एषां प्रभुरेव भवति नाधीनः इति भावः । पुनः किमस्य भवतीत्याह **एतत् ततो भवति** । ततो ब्रह्मप्राप्तेर्हेतोरनन्तरं वा एतद्भवति । किमेतदित्यत्राह - **आकाशशरीरं ब्रह्म** । आ समन्तात् काशते प्रकाशते इत्याकाशं देदीप्यमानमाकाशं शरीरं यस्य देदीप्यमानविग्रहविशिष्टं ब्रह्म भवति, आविर्भूतब्राह्मस्वरूपः सम्पद्यते व्याहृत्युपासकः इत्यर्थः । विशेषान्तरमाह - **सत्यात्म इति**[१]। सत्ये सर्वविकाररहिते आत्मनि सर्वात्मभूते प्राणे सर्वप्राणनहेतुभूते परमात्मनि आसमन्ताद् रमते इति सत्यात्मप्राणारामं भवति । ब्रह्मेत्यस्य विशेषणत्वात् नपुंसकत्वम् परमात्मन्येव केवलं रमते नान्यत्रेति भावः । मन आनन्दम् मनसा संकल्पमात्रेण आनन्दतीति मन आनन्दम् संकल्पमात्रेण सर्व आनन्दोऽस्योपस्थितो भवति यं यमानन्दमयं कामयते इत्यर्थः । **शान्तिसमृद्धम्** - शान्तिरूपशमः सर्वस्यानर्थजातस्य तया समृद्धं विशिष्टं भवति इत्यर्थः । **अमृतम्** - संसाररूपं यज्जन्ममरणचक्रं तद्रहितमीदृशं ब्रह्म भवतीति भावः । **इति प्राचीनयोग्य इति** - हे प्राचीनयोग्य ! शिष्यविशेषस्य सम्बोधनान्तं तामैतत् । **इति** - एतस्माद्धेतोरीदृशी मुक्तिं प्राप्नोति व्याहृत्युपासक इत्यस्माद्धेतोरित्येतत् । त्वमपि **उपास्व** - महःशब्दवाच्यं परं ब्रह्म व्याहृत्यालम्बनं परमात्मानं भजस्वेति भावः ।।

**सु.** - अङ्गभूता विद्या प्रोक्ता, अथ तदङ्गिभूतां परविद्यामाह - **सः इति** । य एष प्रसिद्धः अन्तर्हृदये आकाशः, तस्मिन् सोऽयं **पुरुषः** - यो मह इत्येतस्याश्चतुर्थ्या व्याहृतेर्वाच्यः परमात्मा यस्याङ्गान्या देवताः सन्निधत्ते सोऽयं मनोमयत्वादिधर्मविशिष्यः । **मनोमयः** - विशुद्धेन मनसा ग्राह्य.ः । **अमृतः** - जन्ममरणादिसांसारिकधर्मरहितः । **हिरण्मयः** - कमनीयनित्यविग्रहः । मनोमयत्वादिगुणविशिष्टतया सोऽयं पुरुषो हृदयाकाशे उपास्यः इति यावत् । अथ अस्य उपासकस्य ब्रह्मप्राप्तौ या गतिः मार्गः स उच्यते - **अन्तरेण** इत्यादिना । अस्ति काचित् सृतिः सुषुम्नाख्या नाडी, या **इन्द्रस्य** - परमेश्वरस्य परमात्मनः, **योनिः** - प्रापिका । प्रापकत्वाद्योनिरुच्यते । सेयं लक्ष्यते - **अन्तरेण तालुके** - तालुकयोरन्तरेण निर्गता, तथा तालुकयोरन्तरेण यः स्तन इव लम्बते मासखण्डः तस्मान्निर्गता, तथा यत्रासौ केशानाम् अन्तो मूलं **विवर्तते** - तत्र

---

१. सत् परं त्यत् अपरं तदुभयात्मकं सत्त्यात्म । यथा सच्च त्यच्चाभवत् इति । यद्वा सत्यसङ्कल्पत्वात् सत्यात्मत्वम् । इति भट्टभास्करभाष्यम् ।

मूर्धप्रदेशे अभिसम्बद्धेत्येतत्, व्यपोह्य शीर्षकपाले विनिर्गता । तया अयमुपासको विनिर्गतः अर्चिरादिना मार्गेण परं ब्रह्म प्राप्नोति । अस्योपासकस्य एतावान्विशेषः यदेष व्याहृत्युपासकस्तत एव भूरित्येतत्प्रथमव्याहृत्युपासनमहिम्ना मुक्तिमार्गवशात्प्राप्तेऽग्निलोके कञ्चित्कालं प्रतितिष्ठति । प्रथमव्याहृतावग्निदृष्टिह्यर्थेन कृता, तथा द्वितीयायां वायुदृष्टिः, तृतीयायामादित्यदृष्टिः, ततोऽग्नेः निर्गतो भुव इत्यनया व्याहृत्योपासितया **वायौ** - वायुलोके । ततश्च सुवः इत्यनया आदित्यलोके । तदिदमुच्यते - **भूरित्यग्नौ प्रतितिष्ठति भुव इति वायौ सुवरितद्यादित्ये** इति । अथ अनेनैवातिवाहिकमार्गक्रमेण मह इत्येतस्याः व्याहृतेर्वाच्यस्य परस्य ब्रह्मणो मनोमयत्वादिगुणविशिष्टस्योपासनात् परब्रह्मणि प्रतितिष्ठति । तदिदमाह - **मह इति ब्रह्मणि** इति । **स एष स्वाराज्यम्** - अकर्मवश्यतां प्राप्नोति । न च पुनरावर्तते इत्येतत् । यतोऽयमकर्मवश्यः, अत एव इन्द्रियवशगो न भवति । किन्तु मनःप्रभृतीनां पतिर्भवति । तत्तदिन्द्रियप्रकाश्यानामर्थानां तत्तदिन्द्रियनिरपेक्षं प्रकाशने समर्थो भवति । स्वसंकल्पायत्तसकलार्थप्रकाशो भवतीति यावत् । तदिदमुच्यते - **आप्नोति मनसस्पतिम्** इति । मनस्पतित्वमित्यर्थः । मानस-वाचिक-चाक्षुष-श्रावणादिसकलविज्ञानानामेष प्रभविता भवति । ततो ब्रह्मप्राप्तेरेतच्च भवति । **आकाशशरीरं ब्रह्म** - आसमन्तात् काशमानदिव्यशरीरमससंकुचितज्ञानैकस्वरूपं च । ब्राह्मेण रूपेण परब्रह्मसाम्यं सम्पद्यते इति भावः । किञ्च - **सत्यात्मप्राणारामं च भवति** - सत्यमित्यविकृतमुच्यते, स्वरूपतः स्वभावतश्च यदविकृतं सर्वस्यात्मभूतं च सर्वप्राणनहेतुत्वात् प्राणभूतं च यत्परं ब्रह्म तदेक आरामोऽयं मुक्तो भवति । मुक्तस्वरूपमिति विशेष्यमपेक्ष्य नपुंसकनिर्देशः, छान्दसो वा । मन आनन्दं च भवति मनःशब्दः संकल्पपरः । संकल्पमात्रसिद्धसर्वानन्दश्च भवतीति यावत् । कश्चिदाचार्यः प्राचीनयोग्यनामानं शिष्यमाह - हे **प्राचीनयोग्य !** उक्तेन प्रकारेण उपास्व इति । अयमाचार्यवचनोपन्यास आदरार्थः ।।

## सप्तमोऽनुवाकः

[पाङ्क्तोपासनम्]

**पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्याधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानस्समानः । चक्षुश्श्रोत्रं मनो वाक् त्वक् चर्म माँसँस्नावास्थि मज्जा । एतदधि विधाय ऋषिरवोचत् । पाङ्क्तं वा इदं सर्वम् । पाङ्क्तेनैव पाङ्क्तं स्पृणोतीति ।। १ ।। सर्वमेकञ्च ।। ७ ।।**

।। इति सप्तमोऽनुवाकः ।।

**तै.भा.** - उक्त ब्रह्मविद्याङ्गभूतं विद्याविशेषमुपदिशति **पृथिवी** इत्यादि । पृथिव्यादयः त्रयो लोकाः **दिशः** प्राच्यादयः आदित्यगत्यधीनाः **अवान्तरदिशाः** - कोणदिशः अजिति योगविभागादच् समासान्तः । अग्न्यादयः पृथिव्यादीनाम् अधिपतयः । **आपः** इत्यादि । ओषधिग्रहणेन वीरुधोपि गृह्यन्ते। **आत्मा** जीवः, एते पञ्चदशपदार्थाः त्रयः पञ्चकाः **अधिभूतम्** भूतेषु भवन्ति विभक्त्यर्थे अव्ययीभावः ।

**अथाध्यात्मम्** इत्यादि । आत्मनि अध्यात्मम् *अनश्च* (पा.सू.५-४-१०८) इति समासान्तः । प्राणादयः पञ्चदशपदार्थाः, त्रयः पञ्चका अध्यात्मं देहे भवन्तीत्यर्थः । प्राणादयः पञ्च हृदयादिस्थानाः प्रसिद्धाः । चक्षुरादीनि पञ्चेन्द्रियाणि । **वाक्**च्छब्देन रसनेन्द्रियमुच्यते । **त्वक्** शब्देन घ्राणमपि गृह्यते । **चर्मादीनि** शरीरपर्वाणि स्नावाबन्धिनी सिरा मज्जा अस्थ्यन्तर्गतः क्लेदः । एतत्पञ्चक षट्कमधिविधाय उद्दिश्य **ऋषिः** - वेदात्मा **अवोचत्** । **इदं सर्वं** - विश्वं, **पाङ्क्तम्** उक्तविधया पङ्क्तिरूपम् स्वार्थे अण् प्रत्ययः । तस्मात् पाङ्क्तेन पङ्क्तिसम्बन्ध्युपासनेन पाङ्क्तं पङ्क्ति शरीरब्रह्म **स्पृणोतीति** । प्रीणयत्य...... तिशेषः । तत्प्रीणनस्य प्रकरणात् ब्रह्मोपासनं फलमिति गम्यते ।।

**प्र. - पृथिव्यन्तरिक्षम्** इत्यादि । [1]अधिभूतेषु[1] पृथिव्यादिपञ्चकमेकम्, अग्न्यादिपञ्चकं द्वितीयम्, अबादिपञ्चकं तृतीयम्, एवं त्रीण्यधिभूतंपञ्चकानि । अध्यात्मं प्राणादिपञ्चकमेकं, चक्षुरादिपञ्चकं द्वितीयम्, चर्मादिपञ्चकं तृतीयम् । एवं षट् पञ्चकान्यपि, पञ्चाक्षरा पङ्क्तिः (तै,सं.६-२-२) इति पञ्चत्वसंख्यायुक्ततया पाङ्क्तानि । ततश्च पङ्क्तिच्छन्दोयुक्ततयोपासितेन पञ्चकषट्केण पाङ्क्तं स्पृणोति । पञ्चभूतादियुक्ततया [2]पाङ्क्तम्[2] **स्पृणोति** - पालयति । साम्राज्यं लभते इति पञ्चक षट्कटमधिकृत्य कश्चिदृषिः अवोचदित्यर्थः ।।

**कू.भा.** - इदानीं ध्यानविशेषं ज्ञानांगत्वेनोपदिशति - **पृथिव्यन्तरिक्षमित्यादि** । पृथिव्यादिपंचकं अग्न्यादिपंचकं अबादिपञ्चकं इति त्रयः पञ्चकाः, **अधिभूतं** - शरीरावयवभूतेष्वधिभवन्ति । एतानि भूतानि भूतपरिणामाश्च त्रयः पञ्चकाः । प्राणादयः पञ्च, चक्षुरादयः पञ्च, चर्मादयः पञ्च एते त्रयः पञ्चकाः, **अध्यात्मं** - आत्मनि शरीरे भवन्ति । पृथिव्यन्तरिक्षं द्यौरिति लोकाः, प्राच्यादयो दिशः, अग्न्यादयः पृथिव्यादीनामधिदेवता ।

---

1. भूतेषु - अ,ग,घ । 2. पाङ्क्तम् जगत् - अ,ग,घ ।

आकाश शब्देनाकाशगुणश्शब्दो विवक्षितः । **प्राणः** - मुखनासिकानिष्क्रमणो वायुः, **व्यानः** - बलकृदग्निदीपनादिहेतुः, **अपानः** - अधोगतिश्शब्दकर्मा, उदानः छर्दनादिहेतुः, **समानः** आहरादीनां सर्वेषु अङ्गेषु सन्नेता । रूपग्रहणहेतुः **चक्षुः**, शब्दग्रहणहेतुः **श्रोत्रम्**, संकल्पहेतुः, **मनः**, रसग्रहणहेतुः **वाक्**, रसनाघ्राणस्याप्युपलक्षणं, गन्धग्रहणहेतुर्घ्राणः, स्पर्शग्रहणहेतुस्त्वक् । **स्नावा** - बन्धनी सिरा, **मज्जा** - अस्थ्यन्तरस्थितं जलम् । **एतदधिविधाय** - एतदुपात्तं ज्ञानं, **अधिविधाय** - उपासनार्थमुक्त्वा, पुनः ऋषिर्वेदात्मा, **इदं सर्वं जगत् पाङ्क्तं** - पङ्क्तेरागतमवोचत्, न चतुर्भ्यः न षड्भ्यः, यस्मादेवं तस्मादनेन पाङ्क्तेन यथोक्तलक्षणं पञ्चषट्केनानुसंहितेन **पाङ्क्तेन**, **पाङ्क्तं** - विश्वं, **स्पृणोति** - व्याप्नोति, पालयति ।।

**आ.भा.** - पूर्वोक्तब्रह्मोपासनोपयोगितया सम्प्रति पाङ्क्तोपासनमुपदिशति - **पृथिवी** इति । पङ्क्तिर्नाम छन्दोविशेषः । तत्र पञ्चपदानि भवन्ति । पञ्चसंख्यापृथिव्यादिपञ्चकेषु समानैवास्ति तस्मात् पङ्क्तिच्छन्दःसाम्यात् पङ्क्तेरिदं पाङ्क्तमितिविग्रहेण पाङ्क्तशब्दः पृथिव्यादिपञ्चकेषु प्रवर्तते । अथवा *पाङ्क्तो यज्ञः* (तै.सं.१-५-२) इति श्रुतेः पृथिव्यादि पञ्चकेषु यज्ञत्वदृष्ट्यापि पाङ्क्तदृष्टिः विधेयेति पाङ्क्तोपासनमेतत् । यद् यत् पञ्चकं पाङ्क्तत्वेन चिन्तनीयं तदुच्यते **पृथिवी** - भूलोकः । **अन्तरिक्षम्** अन्तरिक्षलोकः । **द्यौः** - द्युलोकः । **दिशः** - पूर्वादिकाः । **अवान्तरदिशाः** ईशानादिकोणगाः उपर्यधश्चेति । दिशाशब्दोऽयमाबन्तः[१] । इत्येतत् पञ्चकमेकम् । अग्निवायौ आदित्यचन्द्रमोनक्षत्ररूपं द्वितीयम् । अथ ओषधिवनस्पत्याकाशात्मरूपं तृतीयम् । अत्रात्मशब्दो भूताधिकाराद् विराट्परः । एतानि त्रीणि पञ्चकान्यधिभूतपदेनोक्तानि अधिभूतपदस्य लोकपाङ्क्तदेवपाङ्क्तयोरुपलक्षणत्वात् तयोरप्यत्र निर्दिष्टत्वात् । अथाध्यात्मम् इत्यादिना शरीरान्तर्गतानि त्रीणि पञ्चकान्युच्यन्ते - तान्यपि पाङ्क्तत्वेन चिन्तनीयानि इत्यभिप्रायः । प्राणव्यानापानोदानसमानानि प्रथमपञ्चकम् । चक्षुःश्रोत्रमनोवाक्त्वग्रूपं द्वितीयं पञ्चकं । चर्ममांसस्नाव्वस्थिमज्जारूपं तृतीयम् । एतत्पञ्चकत्रयमध्यात्मम् । सम्भूयपञ्चकानि षड्भवन्ति । एतेषु पाङ्क्तदृष्टिर्विधीयते । एतदधिविधाय इति कश्चित् ऋषिः एतानि पञ्चकानि अधिविधाय परिकल्प्य अवोचत् उक्तवान् । किमुक्तवानित्यपेक्षायामाह - **पाङ्क्तं वा** इति । इदं सर्वं पृथिव्यादिपञ्चकप्रभृति

---

१. *आपं चैव हलन्तानां यथा वाचा तिशा दिशा* इति हि स्मर्यते ।

पाङ्क्तमिति । पाङ्क्तेन पाङ्क्तदृष्ट्या समुपासितेन एतेन षट्संख्याकेन पञ्चकेन पाङ्क्तं सर्वं जगत् पञ्चकतया कल्पितं **स्पृणोति** - परिपालयति । सर्वजगत्परिपालनसामर्थ्यं लभते इत्यर्थः ।।

**सु.** अथ पाङ्क्तोपासनमुपदिश्यते **पृथिव्यन्तरिक्षम्** इत्यादिना । अधिभूतं पञ्चकत्रयम् अध्यात्मं च पञ्चकत्रयम् । तत्र प्रत्येकं पञ्चत्वसङ्ख्यासाम्यात् पाङ्क्तदृष्टिर्विधीयते **पाङ्क्तं वा इदं सर्वम्** इति । शारीरमान्तरं प्राणाद्यध्यात्ममुच्यते बाह्यं पृथिव्याद्यधिभूतमुच्यते । तत्र पृथिव्यादि दिगन्तमेकं पञ्चकम्, अग्न्यादि नक्षत्रान्तमपरं पञ्चकम्, अबाद्यात्मान्तं तृतीयं पञ्चकम् आत्माऽत्र विराड्देहः । तथा प्राणादिपञ्चकम्, चक्षुरादिपञ्चकम्, चर्मादिपञ्चकं चेति अध्यात्मम् । **एतदधिविधाय** - एतदधिकृत्य कश्चित् ऋषिरवोचत् **पाङ्क्तं वा इदं सर्वम्** इति । पङ्क्तिच्छन्दसः पञ्चाक्षरत्वेन पञ्चत्वसंख्यासाम्यात् पञ्चकेऽस्मिन् पाङ्क्तदृष्टिः विधेयेति यावत् । **पाङ्क्तेन** - पाङ्क्तदृष्ट्योपास्यमानेनानेन पाङ्क्तं पृथिव्यादि **स्पृणोति** - पालयति, साम्राज्यं लभते इति भावः ।।

## अष्टमोऽनुवाकः

### [प्रणवप्रशंसा]

**ओमिति ब्रह्म । ओमितीदँ सर्वम् । ओमित्येतदनुकृति ह स्म वा अप्योश्रावयेत्याश्रावयन्ति । ओमिति सामानि गायन्ति । ओंशोमिति शस्त्राणि शँसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोप्राप्नुवानीति । ब्रह्मैवोपाप्नोति । ओमित्यग्निहोत्रमनुजानाति ।। ८ ।।**

**।। इति अष्टमोऽनुवाकः ।।**

**तै.भा.** - *तेऽर्चिषमेवाभि सम्भवन्ति अर्चिषोऽहः अह्नः आपूर्यमाणपक्षं आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासाँस्तान् । मासेभ्यः संवत्सरँ, सवंत्सरादादित्यम्, आदित्याच्चन्द्रमसम्, चन्द्रमसो विद्युतम्* (छां.उ.५-१०१) इति देवयानम् उपदिश्य पूर्वोक्तस्याध्ययनस्य अङ्गभूतं प्रणवं प्रशंसन्नाह **ओम्** इत्यादि । ओमित्येतत् ब्रह्म ब्रह्मवाचकम् वाच्यवाचकयोः अभेदेन सामानाधिकरण्यनिर्देशः अत एव ओमित्येतत् **इदं सर्वम्** जगत् प्रणववाच्य ब्रह्मात्मकमिदं सर्वं जगदित्यर्थः । **ओमित्येतदनुकृतिः** - अनुकाराक्षरं केनचित् किञ्चिदुक्तौ ओमित्यनुकुर्वन्ति सर्वे जनाः । **ह स्म वा** इति प्रसिद्ध्यर्थे निपातत्रयं प्रसिद्ध्यतिशयद्योतनाय

ओमित्येतदनुकाराक्षरमिति आबालपण्डित प्रसिद्धमित्यर्थाः अपिः समुच्चयार्थः सर्वत्र संबध्यः **ओं श्रावयेत्याश्रावयन्ति** यज्ञे ऋत्विजः । अत्र प्रणवैकदेशोऽपि प्रणवः *एकदेशविकृतमनन्यवद्भातीति* न्यायात् ओमित्यारभ्य **सामानि गायन्ति** उद्गातारः । **ओं शोमिति शस्त्राणि शंसन्ति** होतारः । शकारो मङ्गलार्थः । **ओमित्यध्वर्युः प्रतिगरं** प्रत्युच्चारणम् ओं सामोद इवेत्येवं रूपं **प्रतिगृणाति** - उच्चरति, **ब्रह्मा** - ऋत्विक्, **ओमिति प्रसौति** - इतरस्त्वृत्विजोनुजानाति । **ओमित्यग्निहोत्रमनुजानाति** यजमानः प्रवचनमध्ययनं च उपलक्षणम् । **प्रवक्ष्यन्** अध्येष्यमाणश्च ब्रह्मणो ब्रह्मा वेदमुपाप्रवानीति पारगो भवेयमिति मत्वा ओम् इत्याह । तथैव **ब्रह्मोप्राप्नोति** । तस्मात् वेदादौ प्रणवः कार्यः इत्यर्थः ।।

**प्र.** - प्रणवं [1]प्रशंसति[1] - **ओमिति ब्रह्म** इति । ब्रह्मप्रतीकत्वात् तद्ध्यानसाधनत्वाच्च प्रणवो ब्रह्मैव । **ओमितीदँ सर्वम्** इति । ब्रह्मात्मकत्वादेव [2]सर्वात्मकत्वञ्चेत्यर्थः[2] । ओमित्येतदनुकृतिर्हस्म वा अपि इति । विधिनिषेधात्मकस्य सर्वस्यापि ओमित्येकाकार एवानुज्ञालक्षणोऽनुकारोऽपि । **ह स्म वै** इति निपातत्रयेण प्रसिद्धिर्द्योत्यते । **ओश्रावय** इत्यादि । ओमित्युपक्रम्यैव उद्गाकारः सामानि गायन्ति इत्यर्थः । **ओंशोमिति** । होतारोऽपि ओमित्युपक्रम्यैव शंसन्तीत्यर्थः । **ओमित्यध्वर्युः** इति । होतरि शंसति अध्वर्युः प्रत्यृचं ओमित्यनुमोदते । [3]ओधामोदेवेति[3] शंसतो होतुः प्रोत्साहनं प्रतिगरः । पाकं पचतीतिवत् प्रतिगरं प्रतिगृणाति इति निर्देशः । **प्रसौति** - अनुज्ञां प्रयच्छतीत्यर्थः । **ओमित्यग्निहोत्रम्** इति । ओमुन्नयेत्येवं यजमानोऽनुजानाति इत्यर्थः । **ओमिति ब्राह्मणः** इति । वेदं प्राप्नुवानित्यनुसंधाय अध्ययनं करिष्यन्, ओमित्याह, तथैव वेदं प्राप्नोतीति दृष्टमेवेत्यर्थः ।।

**कू.भा.** - अथेदानीं **ओमिति ब्रह्म** इत्यनेनाष्टमेनानुवाकेन प्रणवस्य साक्षाद्ब्रह्मवाचकत्वं प्रतिपादयता तस्य ब्रह्मसादृश्यं प्रतिपाद्यते **ओमिति ब्रह्मेति** । यदेतदोमित्येतदक्षरं तत् ब्रह्म बृहत्वबृंहणत्वात् बृंहणं, तस्मादोमित्येतदक्षरं **ब्रह्म** । **ओमितीदँ सर्वं** - इदं चेतनाचेतनात्मकं तत्तच्छब्दवाच्यं जगत्, ओमित्येतस्याक्षरस्य कार्यभूतैश्शब्दैः

---

1. शंसति - अ । 2. सर्वात्मकश्चेत्यर्थः - ग,घ । 3. प्रवचनं - ग,घ ।

प्रतिपाद्यमानमोंकार एव । **ओमित्येतदनुकृतिहस्म वै -** ओमित्येतदक्षरं विधिनिषेधात्मकस्य सर्वस्य शब्दस्य **अनुकृति -** अनुकरणम् । तथा सर्वैश्शब्दैरेव कुरु एवं मा कुर्वित्युक्तं ओमिति प्रतिवदति । **ह स्म वै** इति पदत्रयेणास्मिन्नर्थे लोकवेदयोः प्रसिद्धिर्बोध्यते । **अथोश्रावयेत्याश्रावयन्ति** यज्ञेषु ऋत्विजः । तथा **ओमिति सामानि गायन्ति -** ओमित्याश्राव्य सामानि गायन्ति । तथा **ओं शोमिति शस्त्राणि शँसन्ति -** शस्त्र - शंसनपरा ओमिति शस्त्राणि शंसन्ति । शकारोपजनो मंगळार्थः । तथा - **ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति ।** अध्वर्युः **प्रतिगरं -** प्रत्युच्चारणं, ओमिति **प्रतिगृणाति** - प्रतिब्रूते । **ओमिति ब्रह्म प्रसौति -** ऋत्विक्प्रधानभूतो ब्रह्म च, **ओमिति प्रसौति -** इतरान् ऋत्विजः ओमित्यनुमन्यते । **ओमित्यग्निहोत्रमनुजानाति** अग्निहोत्री अग्निहोत्रं ओमित्यनुजानाति । किंच **ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोप्राप्नुवानीति -** ओमिति ब्रह्म वक्ष्यमाणः ब्राह्मणः अहं वेद प्राप्नुवानीति एतमर्थमुपक्रमे ओमित्याह । **ब्रह्मैवोपाप्नोति -** एवं प्रणवयज्ञं सर्वमनुतिष्ठन्, **ब्रह्मैवोपाप्नोति -** परब्रह्मप्राप्नोतीत्यर्थः ।।

**आ.भा. -** प्रणवस्य परब्रह्मावलम्बनादुपास्यत्वं सिद्ध्यत्यतः प्रणवस्य स्तुतिबोधकोऽयमनुवाकः । सा च स्तुतिः सर्वासां लौकिकीनां वैदिकानाञ्च क्रियाणामोंकारपूर्वकप्रदर्शनात् फलति । क्रियाणामोंकारपूर्वकत्वमेव. दर्शयितुमाह **ओमित्यादि** । इतिशब्दः प्रणवानन्तरं श्रूयमाणः प्रणवस्वरूपनिर्देशकः । **ओमिति** ब्रह्म ओमित्येतत् प्रणवस्वरूपमक्षरं ब्रह्मैव ब्रह्मवाचकत्वात् । वाचके वाच्याऽभेदाध्यवसायात् । **ओमितीदं सर्वम्** । ओमिति प्रणवस्वरूपमेव इदं सर्वं दृश्यमानं जगत् प्रणवस्य ब्रह्मरूपत्वात् । ब्रह्मप्रभवञ्चेदं जगदतः प्रणव एवेति स्तुतिः । **ओमित्येतदनुकृतिः** । **अनुकृतिः -** अनुकरणम् । अहमिदं करोमि इत्युक्त्वा कश्चित् प्रवृत्तः क्रियायां यदि पृच्छ्यते कृतं त्वया ? तदा स वक्ति ओमिति । तस्मादोंकारो अनुकृतिः । सर्वेषामेव विधिनिषेधानाम् । सा च अनुकृतिरनुज्ञारूपेति बोध्यम् । **ह स्म वै** इति पदत्रयमपि प्रसिद्धं द्योतयितुम् । अपि च **ओं श्रावयेति** । गुरुर्यदि प्रेरयति शिष्यं तदा स श्रावयति एवमन्येऽपि प्रेरिता आश्रावयन्ति । अत्र ओंकारः प्रणवैकदेशस्यानुकरणम् । उद्गातारो गीतिप्रधानानि सामानि ओमिति उच्चार्यैव गायन्ति । ओ शोमिति शस्त्राणि शंसन्ति । गीतरहिता ऋचः[१] शस्त्राणि तानि होतार ओंकारपूर्वकाण्येव उच्चारयन्ति । क्वचिदोंकारपूर्वकं क्वचित् शोशब्दपूर्वकं वदन्ति

---

१. अप्रगीतमन्त्रसाध्यास्तुतिः शस्त्रं इति तन्त्रवार्तिके । (२-१-१५-३)

इत्योंकारपूर्वकत्वस्योभयत्र सत्त्वादिति भावः । ओमित्यध्वर्युः इति । यदा होता शंसति ततोध्वर्युर्याज्ञिकः प्रतिगरम् प्रोत्साहकं वचः ओमित्येतत्स्व रूपमेव प्रतिगृणाति होतारं प्रति वदति इत्यर्थः । ओमिति ब्रह्मा प्रसौति । ब्रह्मा यज्ञेषु याज्ञिकैः कृताऽकृतावेक्षणकर्तृत्वेन नियुक्तः श्रोत्रियः क्रियारम्भाय याज्ञिकान् प्रति ओमित्युच्चार्यैवानुज्ञां ददाति । ओमित्यग्निहोत्रमनुजानाति । होता यदि पृच्छति जुहोमि किम् ? तदा ओमित्युक्त्वैव होताराम् **अनुजानाति** - अनुज्ञां ददाति यजमानः आचार्यो वा अग्निहोत्रहोमार्थमिति भावः । ओमिति ब्रह्मण इति ब्राह्मणः **प्रवक्ष्यन्** - प्रवचनं करिष्यन् वेदमध्येतुं प्रवृत्त इत्येतत् । **ब्रह्म** - वेदम् **उपप्रवानि** - प्राप्नुवानि इत्यनुसन्धाय ओमित्युच्चार्यैव वेदाध्ययनाय प्रवर्तते तदा **ब्रह्म** - वेदम् **उपाप्नोति** - प्राप्नोत्येव इत्यर्थः । एवं क्रियासु प्रवृत्तिरोंकारपूर्विकैव जायते । सैव च फलाय कल्पते । तस्मात् ओंकार उपास्य ओमिति ब्रह्मेत्येवं रूपेणेति प्रघट्टकार्थः ।।

**सु.** - परब्रह्मोपासनालम्बनभूतं प्रणवं स्तौति **ओमिति** इति । इति शब्दः शब्दस्वरूपपरिच्छेदकः । ओमित्येतत् प्रणवस्वरूपं ब्रह्मैव वाचको वाच्याभेदारोपेण स्तूयते । **ओमितीदं सर्वम्** - प्रणव एव सर्वमिदं वाङ्मयम् । सकलशब्दानां वेदप्रभवत्त्वात् वेदस्य चैतन्यमूलत्वात् । सर्वमिदं वाच्यं प्रणव एवेति वा स्तूयते । यतः प्रणवो ब्रह्मैव अत एव ब्रह्मप्रभवमिदमखिलं प्रणव एवेति स्तूयते । ओमित्येतदनुकृतिः - **अनुकृतिः** - अनुकरणमनुज्ञाक्षरम् । **ह स्म वा** इति प्रसिद्धौ । कार्यमात्रमनुजानन्नोमिति हि उच्चारयति । **अपि** - अपि च । ओं श्रावयेति **प्रैषपूर्वकमाश्रावयन्ति** । ओमिति उपक्रम्यैव उद्गातारः सामानि गायन्ति । ओं शम् इत्युपक्रम्यैव शस्त्राणि शंसन्ति । गीतिरहिता ऋचः शस्त्राणि उच्यन्ते । अध्वर्युः ओमित्येव **प्रतिगरम्** - प्रतिशंसनं, **प्रतिगृणाति** - प्रतिशंसति । होतरि शंसति तच्छंसनमनु अध्वर्युः प्रतिशंसति - **ओमिति** । ब्रह्म ओमिति हि, **प्रस्तौति** - अनुजानाति । **ओमिति अग्निहोत्रमनुजानाति** - जुहोमि इत्युक्ते ओमित्यनुजानाति । **प्रवक्ष्यन्** - वेदप्रवचनं करिष्यन् प्रथममाह ओमिति, **ब्रह्म** - वेदं अध्ययनमुखेनोपाप्रवानि इति प्रवृत्तः, ओमित्येतदुच्चारणपूर्वकमेवाद्यापि प्राप्नोति । तदेवं वैदिकक्रियामात्रस्य प्रणवपूर्वकत्वेन प्रणवस्यैतावान् महिमा, सोऽयं प्रणवः उपास्यः इति भावः ।।

## नवमोऽनुवाकः

[स्वाध्यायप्रवचनादिविद्याङ्गकर्म]

**ऋतञ्च स्वाध्यायप्रवचने च । सत्यञ्च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च ।**

**अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवाचा राथीतरः । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ।। १ ।। प्रजा च स्वाध्यायप्रवचने च षट् च ।। ९ ।।**

।। इति नवमोऽनुवाकः ।।

**तै.भा.** - एवमङ्गोपदेशानन्तरमङ्गीभूतस्वाध्यायाध्ययनं तत्प्रवचनं च सदा कर्तव्यमित्याह **ऋतं च** इत्यादि । **ऋतं** - मानसं सत्यं यथावत् संकल्पः इत्यर्थः । स्वस्वाध्यायस्वाध्यायः स्वशाखा तेन तदध्ययनं लक्ष्यते । **प्रवचनम्** - अध्यापनं, तच्च संनिधानात् **स्वाध्यायप्रवचनम्** एतत्सर्वं कुर्यादित्येके मन्यन्ते इति शेषः । एवमुत्तरत्रापि योजना । **सत्यं** - यथार्थवचनं, **तपः** - मौनानाहारादिकं, **शमः** - अन्तरिन्द्रियनिग्रहः, **दमः** - बाह्येन्द्रियनिग्रहः, **अग्नयः** - गार्हपत्यावहनीयदक्षिणाग्नयः तैः तदासनं लक्ष्यते । अहोरात्रमग्निसाध्यानि कर्माणि अतिथिशब्देन अतिथिपूजा उच्यते । **मानुषं** - मनुष्योत्सवादौ देवतापूजनं **प्रजा** - प्रजार्थं गर्भाधानादिसंस्काराः, प्रजनयः प्रजार्थमृतुगमनं प्रकृष्टा जातिः **प्रजातिः** पत्नी-पौत्रादयो वा सत्यमेव पर्याप्तं न अर्थः स्वाध्यायप्रवचनाभ्यामिति **सत्यवचा राथीतरः** रतेः अस्यापत्यं ऋषिः राथि तत् सत्यवचनाभिमानकृतं ब्राह्मणानां वेदैकधनत्वादिति सूचयति । सत्यवचा इत्यन्वर्थसंज्ञया **रथीतरः**, रथिश्रेष्ठः छान्दसो दीर्घः ; अनेन अयं क्षत्रियः इत्यवगम्यते । **पुरु** - बहुतरं शिष्टं शासनं यस्यासौ पुरुशिष्टः तस्यापत्यं ; पौरुशिष्टिः । *अत इञ्* (पा.सू. ४-१-९५) पूर्वस्य *तस्येदम्* (पा. सू. ४.३.२०) इत्यण् अपत्यार्थमर्थसिद्धम् । **तपः नित्यम्** अविच्छिन्नं यस्यासौ । तपोनित्यः इत्यन्वर्थनामा । नित्यशब्दस्य अविच्छिन्नवाचित्वं नित्यप्रहसित इत्यादौ दृष्टम् । स तप एव पर्याप्तमित्याह । मुद्लगस्यापत्यं **मौद्गल्यः** । *गर्गादिभ्यो यञ्* (पा. सू. ४.१.१०५) **नाको** नाम ऋषिः। **स्वाध्यायप्रवचने एवेति** । अत एव पर्याप्तम्, नान्यदादरणीयमित्याह । एषु नाकपक्ष एव स्वापक्ष इति स्वयं श्रुतिराह **तद्धि** इति । ते स्वाध्यायप्रवचने हि **तपः** हि शब्दः तपो हि स्वाध्याय इति प्रसिद्धिं दर्शयति। आदरात् द्विरुक्तिः। **तप** इति सत्यादीनाम् उपलक्षणम् । स्वाध्यायप्रवचनाभ्यामेव सत्यादिकं सर्वं सिद्ध्यति इति भावः । स्वाध्यायप्रवचनयोः सर्वावस्थास्वपि अपरित्याज्यतया प्राधान्यं द्योतयितुं हि प्रतिपर्यायं स्वाध्यायप्रवचनशब्दप्रयोगः ।।

**प्र.** - ब्रह्मविद्याङ्गमनुष्ठेयं कर्माऽऽह - **ऋतञ्च** इत्यादिना । **ऋतम्** - सूनृता वाणी । **स्वाध्यायः** - वेदाध्ययनम् । **प्रवचनम्** - अध्यापनम् । ऋत-स्वाध्याय-प्रवचनानि नित्यानुष्ठेयानीति वाक्यार्थः । **सत्यम्** - समदर्शनम् । *ऋतं तु सूनृता वाणी सत्यं तु समदर्शनम्* (भाग.११-१९-३८) इत्युक्तेः । **तपः** कायशोषणम् । **दमः** बाह्येन्द्रियजयः । **शमः** - अन्तरिन्द्रियजयः । **अग्नयः** - [1]गार्हपत्याद्याः[1] । अग्निहोत्रम् इति नित्यकर्मणामग्निसाध्यानामुपलक्षणम् । मृतमनुष्योद्देशोनानुष्ठीयमानं [2]श्राद्धं[2] [3]मानुषम्[3] ।

*नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।*

*त्रिंशल्लक्षणवान् साक्षात् सर्वात्मा येन तुष्यति ॥* (भाग. ७-११-१२)

इत्युक्तभगवदाराधनं वा । **प्रजनः** - प्रजननम् , ऋतुकालाभिगमनम्[१] **प्रजातिः** प्रकर्षेण [4]पौत्रादिजननम्[4] । सत्यं वचो यस्य सः **सत्यवचाः** । रथीतरत्यापत्यं राथीतरनामा ऋषिः सत्यम् इति निर्दिष्टं सत्यं वच एव प्रधानम्, स्वाध्यायप्रवचने न प्रधाने इति मन्यते । पौरुशिष्टि नामा तपसि नित्यः निरतः ऋषिस्तु, तप एव प्रधानम्, स्वाध्यायप्रवचनाभ्यां न प्रयोजनमिति मन्यते । स्वाध्यायप्रवचने एव प्रधानं, तदेव प्रथमं [5]तपः[5] इति नाको मोद्गल्यो मन्यते इत्यर्थः॥

**कू.भा.** - विद्योत्पत्तये यज्ञदानतपःप्रभृतीत्यनुष्ठेयानीति *यज्ञेन दानेन तपसानाशकेन* (बृ.उ.६-४-२२) *सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्* (ब्र.सू. ३-४-२६) इत्यादिभिः प्रतिपादितानि, इदानीं विद्यांगत्वेनानुष्ठेयानि प्रतिपाद्यते । *ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ।* (भाग. ११-१९-३८) **स्वाध्यायः** - अध्ययनम् । **प्रवचनम्** - अध्यापनम्, ब्रह्मयज्ञो वा । एतानि ऋतादीनि अनुष्ठेयानीति वाक्यशेषः । **सत्यं च** - समदर्शनं, सत्यवदनं वा । **तपः** - कृच्छ्रादिविहितकर्मानुष्ठानं, यद्वा - *कामस्त्यागस्तपस्स्मृतः* (भाग.११-१९-३७) इति श्रीभागवते । दमः बाह्यकरणोपशमः । *शमो हन्निष्ठताबुद्धेः दम इन्द्रियसंयमः* (भाग.११-१९-३६) इति श्रीभागवते । **अग्नयः** आधातव्या आहवनीयादयः । **अग्निहोत्रं** नाम कर्मनामधेयं, अग्निहोत्रं च होतव्यमिति । **अतिथयः** - ब्राह्मणादयः पूज्याः । **मानुषं** -

---

१. रजोदर्शनदिनात् चतुर्थदिने स्नातायाः पञ्चमादिद्वादशदिनकालः ऋतुकालः ।

1. गार्हपत्यादयः - ग,घ । 2. श्रद्धादिकम् - ग,घ । 3. मानुषमाहुः - ग,घ ।

4. पुत्रपौत्रादि - ग,घ । 5. परमं तप - ग,घ ।

मनुष्यव्यापारसाध्यं भगवत्प्रणाम-स्तवन-यजन-भजन- कीर्तनादिकं लौकिकास्संव्यवहाराश्च, तच्च यथाप्राप्तं अनुष्ठेयम् । **प्रजा च स्वाध्यायप्रवचने च** - सदृशान् दारानुपेत्य तेषु पुत्राश्चोत्पाद्या इति *प्रजननं वै प्रतिष्ठा साधु प्रजायास्तन्तुं तन्वान:* (महा.ना.१४४) इत्यादिषूक्तम् ।

**प्रजन:** - प्रजननं, ऋतौ भार्यागमनमित्यर्थः । यद्वा **जननं** - भूयो भूयो जननम्, पौत्राश्चोत्पाद्याः इति *पौत्रेणानन्त्यं अश्नुते* (म.स्मृ.९-१३७) इत्यादि श्रुतिसिद्धम् । **प्रजाति:** नप्त्रादि, तद्दर्शनमपि कार्यमित्यर्थः । **सत्यमिति सत्यवचा राथीतरः** - रथीतरस्यापत्यं राथीतरः ऋषिः, सत्यमेव विद्यांगत्वे पर्याप्तं साधनं, नार्थस्स्वाध्यायप्रवचनाभ्यामित्याह । **तप इति** - कर्तव्यं इति, **तपो नित्यः** - तपसि नित्यः, पुरुशिष्टस्यापत्यं पौरुशिष्टिः आचार्यो मन्यते । **स्वाध्यायप्रवचने एव** अनुष्ठेये इति नाको नाम्ना मुद्गलस्यापत्यं मौद्गल्यः आचार्यो मन्यते । **तद्धि तपस्तद्धि तपः इति** - स्वाध्यायप्रवचनाभ्यां परं तपो नास्तीति । अत्र सर्वत्रादरार्थं पुनश्श्रुतिः । प्राधान्यख्यापनार्थेति केचित् ।।

**आ.भा.** - प्रणवं सर्वकर्माङ्गभूतमिति स्तुत्वा कर्मोऽपि विद्याङ्गतया अवश्यम् अनुष्ठेयमिति दर्शयितुमाह - **ऋतम्** इति । **ऋतम्** - सूनृतं वचनम् । स्वाध्यायोऽध्ययनं वेदस्याध्यात्मशास्त्रस्य च । **प्रवचनं** - अध्यापनं वेदस्य अध्यात्मशास्त्रस्य च ब्रह्मसूत्रादेः । एतत्त्रयमपि नित्यमनुष्ठेयं ब्रह्मजिज्ञासुभिरपि इत्यर्थः । **सत्यं** - समदर्शनं तस्य वचननिमित्तभूतम् । समदृष्टिरेव सर्वत्र सत्यं वक्तुं शक्नोति, अन्यथा रागद्वेषादिकलुषितोऽसत्यं वदतीति भावः । स्वाध्यायप्रवचने इति पूर्ववत् सर्वत्र व्याख्येयम् । सत्यस्वाध्यायप्रवचनान्यपि अनुष्ठेयान्येव परविद्याङ्गतया इत्यर्थः । ऋतादीनामनुष्ठानेष्वपि स्वाध्यायप्रवचनानुष्ठानं सर्वत्र कार्यमिति नियमयितुं स्वाध्यायप्रवचने च इति सर्वत्रोक्तमिति भावः । **तप:** - कायशोषणलक्षणं कृच्छ्रचान्द्रायणादिकम् । **दम:** - बाह्येन्द्रियाणां चक्षुरादीनां वशीकारः । **शम:** - अन्तरिन्द्रयाणां मनोबुद्ध्यहंकारचित्तानां निग्रहः । **अग्नय:** - गार्हपत्याद्यास्त्रयः आधानीयाः शास्त्रोक्ताः । **अग्निहोत्रं** - हवनात्मकं कर्म यत्र फलविशेषाभिप्रायेण द्रव्यविशेषो हूयते । **अतिथय:** - अभ्यागताः येषां सत्कारः शास्त्रोकर्तव्यतया प्रतिपादितः । **मानुषं** - मनुष्यसम्बन्धि कर्म तच्चाभ्युदयनिमित्तं यज्ञोपवीतविवाहसंस्कारादि प्रेतोद्देश्यकं श्राद्धादि, भृत्यबन्धुजनपोषणादिकञ्च । **प्रजा** - पुत्रादिरूपा धर्मतः सम्पादनाय इत्यर्थः । **प्रजन:** - प्रजननम्

ऋतुकाले निषिद्धवर्जविहितकाले भार्यागमनरूपम् । **प्रजातिः** - प्रजननं पौत्रप्रपौत्राद्यर्थं पुत्रादीनभिनिवेशनद्वारा तज्जननम् । सर्वेष्वपि एतेषु स्वाध्यायप्रवचनयोः आवश्यकतेति तात्पर्यम् । एतेषु सत्यादिषु सत्यमेव प्रधानमिति सत्यमेव वचो यस्य तादृशः सत्यवचा रथीतरस्यापत्यं राथीतरोनामाचार्यो मन्यते । तपो नित्यं यस्य तादृशस्तपोनित्यः तपःपरायणः पुरुशिष्टस्यापत्यं पौरुशिष्टिनामा कश्चिदृषिः तप एव प्रधानं न स्वाध्यायप्रवचने इति मन्यते । मुद्गलस्यापत्यं पुमान् नाकनाम कश्चिदृषिः स्वाध्यायप्रवचने एव प्रधाने सत्याद्यपेक्षया इति मन्यते । **तद्धि तपः** तत् स्वाध्यायप्रवचने एव प्रधानभूतमिति ते एवानुष्ठेये इति स नाको मौद्गलस्यापत्यं पुमान् नाकनामा कश्चिदृषिः स्वाध्यायप्रवचने एव प्रधाने सत्याद्यपेक्षया इति मन्यते । **तद्धि तपः** तत् स्वाध्यायप्रवचने एव प्रधानभूतमिति ते एवानुष्ठेये इति स नाको मोद्गल्यो वदति । तद्धि तपः इति पुनरुक्तिः तत्र आदरातिशयं द्योतयितुम् । सत्यतपःस्वाध्यायप्रवचनानां पुनः कथनं तेषु मतभेदेन प्राधान्यं बोधयितुमादराधिक्यञ्च द्योतयितुमिति भावः ।।

**सु.** - विविदिषोरपि कर्मणामावश्यकतां ज्ञापयन् कर्मणाम् अवश्यानुष्ठेयतामाह **ऋतम्** इत्यादिना । **ऋतम्** - सूनृतवचनम्, **स्वाध्यायप्रवचने** - अध्ययनाध्यापने, इत्येतान्यनुष्ठेयानि । **सत्यम्** - यथादृष्टार्थं भूतहितवचनम्, समदर्शनं वा । तथा च वचनम् - *ऋतं च सूनृता वाणी सत्यं तु समदर्शनम्* (भाग.११-१९-३८) इति । ऋचं सत्यं तपः अन्यञ्च वक्ष्यमाणमनुतिष्ठता स्वाध्यायप्रवचने न त्याज्ये इत्येतदर्थज्ञापनाय प्रत्येकं सत्यादिभिः सह स्वाध्यायप्रवचनयोः निर्देशः । **तपः** - कृच्छ्रचान्द्रायणादिलक्षणम्, **दमः** - बाह्यकरणजयः, **शमः** - अन्तःकरणजयः सम्पाद्यः । **अग्नयः** - आधातव्याः । अग्निहोत्रम् कार्यम् । अतिथयः सत्कार्याः । **मानुषम्** - भृत्यबन्धुजनपोषणादिलक्षणं कर्म यथासम्भवमनुष्ठेयम् । **प्रजा** - धर्मप्रजा सम्पाद्या, तदर्थं **प्रजननम्** - ऋतौ भार्यागमनं कार्यम् । **प्रजातिः** प्रकर्षेण जातिः **जननम्** - पौत्रादिसन्तानसम्पादनं कार्यम् । सर्वमिदम् आश्रमाङ्गं कर्म यथाधिकारं प्रवचनाभ्यां सहैव अनुष्ठेयम् । तथा भूतस्यैव विद्याभिमुख्यौपयिकत्वात् । अत्र सत्यवचा राथीतरो नाम ऋषिः सत्यमेवैषु प्रधानमित्याह । तपोनित्यः पौरुशिष्टिस्तप एव प्रधानमाह - नाको मौद्गल्यः स्वाध्यायप्रवचने एव प्रधाने इत्याह । तदेव स्वाध्यायप्रवचनमेव हि तपः इति स एव नाको मोद्गल्यो मन्यते । आदराद्विर्वचनम् । अत्र अनुष्ठेयतया निर्दिष्टेषु ऋतादिप्रजात्यन्तेषु सत्यतपः स्वाध्यायप्रवचनानाम् आर्षाभिमतप्राधान्यपक्षनिरूपणमितरापेक्षया तेषां प्राधान्यज्ञापनाय ।।

## दशमोऽनुवाकः

[विद्याङ्गमन्त्रः]

**अहंवृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । द्रविणँ [1]सवर्चसम्[1] । सुमेधा अमृतोऽक्षितः । इति त्रिशंकोर्वेदानुवचनम् । अहँषट् ।। १० ।।**

**तै.भा.** - अथ कृत्स्नस्वाध्यायप्रवचनशक्तस्य तत्प्रतिनिधिं शिष्टानुष्ठानं पूर्वमाह - **अहम्** इत्यादि । इह मन्त्रे ब्रह्मात्मभावानुसन्धानमुच्यते । तद्धि सर्ववेदसारभूतं प्रणवे *तत्त्वसमसि* (छां.उ. ६.८.७) इत्यादावपि तथोपदेशात् । अतोऽस्य मन्त्रस्य सर्ववेद - प्रतिनिधित्वम् । **अहं वृक्षस्य** वृश्चतीति, *मासान् तान् मासेभ्यः संवत्सरं संवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवं स एनान् ब्रह्म गमयति* (छां.उ. ४-१५-५६) इति श्रुत्यन्तरोक्तानाम् उपलक्षणम् । एवं प्रासङ्गिकं ब्रह्मोपासनं *सायस्य संसारस्य नौरिव भृशं क्षेपयिता दिनामिद्* (?) व्रश्चेरोणादिकः कसप्रत्ययः - षत्वम् । *षढोः कस्सि* (पा.सू. ८-२-४१) इति कत्वम् । रिङो यङ्लुगन्तात् *अन्येभ्योऽपि दृश्यते* (पा.सू.३-२-७५) इति क्वनिप्। छान्दसं ह्रस्वत्वं इडभावश्च । मोक्षप्रदः इत्यर्थः ; कीर्त्यते इति **कीर्तिः** - वेदवेद्यः इत्यर्थः । **गिरेः पृष्ठमिव** तद्वत् उन्नतः सर्वोत्तमः इत्यर्थः । पूयते अनेन इति **पवित्रः** उत्तमपवित्र इत्यर्थः । वाजी नित्यगतिः आदित्यः तस्मिन्निवसतीति वाजिनी वसि उपसर्गदीर्घः आदित्यान्तर्वर्ती इत्यर्थः । एवं भूतं **अमृतमस्मि-** अमृतशब्देन ब्रह्मोच्यते । पुनः ब्रह्म विशिनष्टि- **सुवर्चसम्** तेजिष्ठं योगविभागादच् समासान्तः । तादृशं **द्रविणं** धनं तद्वत् आपद्रक्षकमित्यर्थः । **सुमेधाः** - सुबुद्धिः सर्वज्ञ इति यावत् । **अमृतोऽक्षितः** - सुधासिक्त इव सर्वसन्तापहारी इत्यर्थः । इत्ययं मन्त्रः **त्रिशंकोः** तदाख्यऋषेः **वेदानुवचनम्** वेदजपः । तस्मात् स्वाध्याय जपाशक्तस्य तन्मन्त्रमात्रमपि जपेदित्युक्तं भवति ।।

**प्र.** विद्याङ्गतया जप्यमन्त्रमाह **अहं** इत्यादिना । **अहंवृक्षस्य रेरिवा** - वृक्षवत् छेद्यस्य अहंकारादेः क्षपयिता । *रेरिवा इति रीङ्क्षये* (धा.पा.?) इत्यस्मात् यङ्लुगन्तात्, *अन्येभ्योऽपि दृश्यते* (पा.सू.३-२-७५) इति क्वनिपि रूपम् । [2]निरस्तसमस्तदेहात्मभिमानः[2] इत्यर्थः । **कीर्तिः पृष्ठं गिरेरिव** । मेर्वादिगिरिपृष्ठवत् श्लाघ्यगुणशालित्वया कीर्तिमान् अस्मि इत्यर्थः । **ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । ऊर्ध्वपवित्रः-** सर्वोत्तरपवित्रोऽहं, **वाजिनि** - वाजम् अन्नमस्यास्तीति वाजी भोक्ता ; सर्वशेषिणि परमात्मनि

---

1. सुवर्चसम् - ग,घ,च । 2. निरस्तदेहात्माभिमानः - अ,क,ख,च ।

**स्वमृतमिवास्मि** - अतिशयेन भोग्योऽस्मि । तत्प्रीतिविषयोऽस्मि इत्यर्थः । **द्रविणं सर्वचसम्** । तस्य समीचीनद्रविणमस्मि । भोगोपकरणमस्मि इत्यर्थः । **सुमेधा अमृतोऽक्षितः** - भगवच्छेषत्वज्ञानदार्ढ्यात् सुमेधाश्च । **अमृतः** - मरणशून्यः असंसारि । **अक्षितः** - अक्षयः षड्भावविकारशून्यः[१] इत्यर्थः । **इति त्रिशंकोर्वेदानुवचनम्** - त्रिशंकुदृष्टोऽयं मन्त्रः इत्यर्थः ।।

**कू.भा.** - **अहंवृक्षस्य** इति विद्यासमृद्ध्यर्थं जप्तव्यो मन्त्रः । इयं षट्पदा जगति । **अहंवृक्षस्य** - व्रश्चनीयस्य अहंकारमहावृक्षस्य । **रेरिवा** - भृशं क्षपयिता । अस्यात्यन्तोच्छेदेन परस्मिन् ब्रह्मणि नारायणे परां भक्तिं प्राप्तः । अत एव - **कीर्तिः** - कीर्तिमान् । मत्वर्थीयस्य लोपश्छान्दसः । शकारो वा मत्वर्थीयः । अथवा **कीर्तिः** - कीर्तनीयस्सर्वैर्वेदैश्च । यद्वा - यथा **कीर्तिः** केनचिदाच्छादयितुं न शक्यते एवमहं महाप्रकाशवानिति । तत्र दृष्टान्तमाह - **पृष्ठं गिरेरिव** - गिरेः पर्वतस्य, पृष्ठं यथा वस्त्रेण आच्छादयितुं न शक्यते, एवं भगवत्प्रसादादहमस्मि सम्पन्नः । **ऊर्ध्व पवित्रः । ऊर्ध्वं** सर्वस्मादुत्कृष्टं **पवित्रं** - सर्वशुद्धिहेतुभूतं परं ब्रह्म प्राप्तवानस्मि, तस्मादहमपि सर्वस्मादुत्कृष्टः सर्वशोधकः इति यावत् । **वाजिनीव स्वमृतमस्मि । वाजिनी** - नित्यविभूतिः तस्मिन्निव वर्तमानोऽस्मि । अत एव - **स्वमृतमस्मि** - नित्यमुक्तवत्परमामृतभोक्तास्मि । **द्रविणं सवर्चसं । द्रविणं** - वरिष्ठं धनं, **सवर्चसं** - महाबलमक्षयं, तदेवाहमस्मि । अत एव अहं **सुमेधाः** - शोभनव्यवसायवानस्मि । **अमृतः** - जन्ममरणादिदुरितदूरः **अक्षितः** - अनपक्षयः । अथवा अमृतत्वहेतुना भगवदानन्देन सिक्तः । **इति त्रिशंकोर्वेदानुवचनं** - त्रिशंकोः क्षत्रियमहर्षेः, **वेदानुवचनं** - उपासने मन्त्रकथनम् । इदं मन्त्रं उपासनांगं सः अन्ववोचत्। ऋषिनिर्देशो मन्त्रस्य माहात्म्य - सूचनार्थः ।।

**आ.भा.** - ब्रह्मविविदिषुणा विद्यासिद्ध्यर्थं मन्त्रः इदानीमुच्यते **अहमिति** । **वृक्षस्य** - संसारवृक्षस्य **रेरिवा** - अतिशयेनोच्छेदकोऽहमस्मि । वृक्षशब्दः छेदनार्थकव्रश्चूधातोः निष्पन्नः । वृश्च्यते इति वृक्षः संसारे वृक्षत्वारोपात् तस्याप्युच्छेद्यत्वं लभ्यते । रेरिवा इति यङ्लुगन्तम् । रीङ्धातुः क्षयार्थः । **कीर्तिः** - मदीयवत्तया विज्ञानवत्तया ख्यातिः **गिरेः** पर्वतस्य हिमवदादेः, **पृष्ठम्** - अग्रप्रदेश इति उन्नता ।

---

१. **षड्भावविकारः** - अस्ति, जायते, विपरिणमते, वर्धते, अपक्षीयते विनश्यति इति षड्भावविकाराः तच्छून्यः ।

ऊर्ध्वाधोलोकव्यापिकीर्तिमानहमस्मीत्यर्थः । **ऊर्ध्वं** - सर्वतोऽधिकं, **पवित्रः** - इतरपवित्रापेक्षयाधिकपवित्रताशाल्यहमित्यर्थः । परमात्मसाक्षात्कारवत्तया आविर्भूतब्राह्मस्वरूपस्य गुणाष्टकाविर्भावात् सकलपाप्मपरिहरणात् पवित्रतमता ममास्तीति भावः । **वाजीनीव स्वमृतम्** वाजम् अन्नमस्ति जन्यं यस्य स वाजी आदित्यः । आदित्यस्य वृष्टिद्वाराऽन्नजनकत्वात् । तस्मिन्नादित्ये वर्तमानो हिरण्मयः पुरुषः परमात्मा स यथा स्वमृतम् सुन्दरममृतम् अमृतवत् ज्ञानिजनैरुपास्यतया भोग्यं तद्वदेवाहमपि स्वस्वरूपाविर्भावेण स्वमृतमस्मि । वास्तविकजीवात्मस्वरूपस्याप्यमृततुल्यत्वादिति भावः । **सवर्चसम्** - वर्चो दीप्तिः सा च ज्ञानरूपा ज्योतिस्स्वरूपा इत्येतत् । वर्चसा सहितं सवर्चसं ब्रह्मसाक्षात्काररूपज्योतिर्विशिष्टं द्रविणं द्रव्यमहमस्मीत्यर्थः । **सुमेधा** सुष्ठु शोभना मेधा यस्य स सुमेधाः परमात्मज्ञानवत्तया सुमेधस्त्वं मयि इत्यर्थः । **अमृतः** - अमरणधर्मा । **अक्षितः** क्षयरहितश्चास्मि । अमृतोऽक्षि इति पदाभ्याम् अपरेषामपि भावविकाराणां राहित्यमुपलक्ष्यते । सकलभावविकाररहितोऽसंसारीत्यर्थः । **इति त्रिशंकोः**- त्रिशंकुनाम्नः ऋषेः **देवनुवचनं** वेदस्य स्वदृष्टस्य मुक्तजीवस्वरूपप्रतिपादकस्योक्तमन्त्ररूपस्य अनुदर्शनानन्तरं **वचनं** - कथनम् । अयं मन्त्रः ब्रह्मविदा त्रिशंकुना दृष्टः इत्यर्थः ।।

**सु.** - अथ विविदिषुणा विद्यासिद्ध्यर्थं जप्यं मन्त्रमाह - **अहम्** इत्यादिना । **अहं** - **वृक्षस्य रेरिवा** छेद्यस्वभावस्य शाखोपशाखासहस्रसंकुलस्य अहंकाराख्यसंसारतरोः क्षपयिता, समुछिन्नदेहात्माभिमान इति यावत् । ममकीर्तिर्विज्ञानजनिता गिरेः पृष्ठवदत्युन्नता । समधिककीर्तिशाल्यहमिति यावत् । यद्वा - देहो ह्येष वृक्ष इव छेद्यस्वभावः, पामरा हि वृक्षेऽस्मिन्निमग्नमात्मानं वृक्षसधर्माणं पश्यन्तो वृद्धिह्रासादिभिरुपश्लिष्टं पश्यन्ति, नाहं तथा मन्ये, किन्तु वृक्षस्यास्या **रेरिवा** - प्रेरकः, जडोऽयं वृक्षो देहः, अजडेन मयाऽधिष्ठात्रा चेष्टते । अजडतामेव द्रढयति **कीर्तिः पृष्ठं गिरेरिव । कीर्तिः** - दीप्तिः सा च नैसर्गिकचैतन्यज्योतिषः, सेयं दीप्तिः **गिरेः पृष्ठमिव** - अप्रकम्प्या समधिकोच्छ्राया च । देहोऽयं मलमयः केवलमपवित्रः । अहं तु - **ऊर्ध्वपवित्रः** - इतरेभ्यः पवित्रेभ्यः ऊर्ध्वं वर्तमानः पवित्रः । पवित्रतमः इति यावत् । न हि ज्ञानघनादन्यत् पवित्रम् । अविजानतां तु आत्मज्योतिः पवित्रतापादनाय जडवस्त्वन्तरान्वेषणम् । न केवलं पवित्रतमत्वम्, किन्तु भोग्यतमता च, मलमयं हि देहाख्यं हेयद्रव्यं किमपि, अहं तु **वाजिनीव स्वमृतमस्मि** । [illegible]- वाजमन्नम्, तदस्येति वाजी आदित्यः, *आदित्याज्जायते वृष्टिः तस्मादन्नं प्रजायते,*

*तदन्नमादित्यस्य हि ।* (जन्यजनकभावलक्षणः सम्बन्धोऽत्र विवक्षितः) तस्मिन् वर्तमानं स्वमृतमिव, अहं स्वमृतमस्मि । आदित्ये हि परमपुरुषः परमानन्दमयः सन्निहितो योगिभिरुपास्यः, स चामृतं ब्रह्मदर्शिनामिति प्रकृष्टामृततया स्वमृतमुच्यते । तद्वदहं स्वमृतमस्मि, न तु तदेवामृतमहम्, किन्तु नैसर्गिकशुद्धस्वभावतस्तत्साधर्म्यात् तत्सदृशोऽहमस्मि । **सुवर्चसं द्रविणम्** - ज्ञानैकघनतया । दीप्तिमद्द्रव्यमस्मि । **सुमेधाः** - आत्यन्तिकदुःखोच्छेदकविज्ञानसम्पन्नतया सुमेधाः । **अमृतोऽक्षितः** - मरणरहितः क्षयवर्जितश्च । **इति** - इत्ययं मन्त्रः त्रिशंकुनामकस्य कस्यचिदृषेः मन्त्रद्रष्टुः, **वेदानुवचनम्** । वेदो वेदनमात्मविज्ञानं तदनुवचनम्, विज्ञानज्ञापकं वचनमित्येतत् ।।

## एकादशोऽनुवाकः

### [आचार्यानुशासनम्]

**वेदमनूच्याऽचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ।। १ ।।**

**देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकँ सुचरितानि । तानि त्वयोपास्यानि ।। २ ।।**

**नो इतराणि । ये के चास्मच्छ्रेयाँसो ब्राह्मणाः तेषां त्वयाऽऽसने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धया देयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ।। ३ ।।**

**ये तत्र ब्राह्मणास्सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणास्सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः ।। ४ ।।**

**एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ।। ५ ।।**

**स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् तानि त्वयोपास्यानि स्यात् तेषु वर्तेरन् सप्त च ।। ११ ।।**

।। इति एकादशोऽनुवाकः ।।

**तै.भा.** - अथ कृताध्ययनस्य कर्तव्याः धर्माः आचार्यमुखादेव ज्ञातव्याः इत्यादिशति - **वेदम्** इत्यादि । वेदम् इत्येकत्वमविवक्षितम् वेदं वेदौ वेदान्वा-

*वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।*
*अविप्लुतब्रह्माचर्यो गृहस्थाश्रममावसेत् ।।* (म.स्मृ.३-२)

इति मनुनोक्तः । **अनूच्य** - अध्याप्य -

*उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः ।*
*सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ।।* (म.स्मृ.२-१४०)

इति याज्ञवल्क्योक्ताचार्यलक्षणलक्षितः[१] । अन्ते वसति इति **अन्तेवासी** - शिष्यः । *हलदन्तात् सप्तम्याः संज्ञायाम्* (पा.सू. ६-३-९) इति अलुक् । आचार्याधीनः तिष्ठेत् इत्युक्तलक्षणमित्यर्थः । **अनुशास्ति** - अनुशिष्यात् शिक्षयेत् । अनुशासनप्रकारमाह - **सत्यम्** इत्यादि । **सत्यं** तत्कृत्यं वद धर्मं श्रुतिस्मृत्यादितं कर्म **चर** - आचर । **स्वाध्यायात्** - स्वशाखाध्ययनात्, **मा प्रमदः** - प्रमत्तो मा भूः । *जुगुप्साविरामप्रमाद.....* (वा.१०७९) इत्यादिना पञ्चमी । प्रमादः अनवधानं कुटुम्बभरणव्यासङ्गेन कदाचिदपि तद्विच्छेदं मा कुरु इत्यर्थः । उक्तं हि -

*वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः ।*
*न ह्यस्यातः परो धर्मः उपधर्मोऽन्य उच्यते ।।* (म.स्मृ. ४-१-४७)

इति । **आचार्याय** - अध्यापयित्रे **प्रियम्** - इष्टम्, **धनम्**, विद्यादक्षिणात्वेन **आहृत्य** - आनीय, समर्प्य, प्रियमित्यनेन यथोपपन्नं **न देयम्** इत्युक्तम् । आह मनुः -

*स्नास्यन्तु गुरुणाज्ञाप्तश्शक्त्या गुर्वर्थमाहरेत् ।*
*क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम् ।।*
*धान्यं शाकं च वासांसि गुरवे प्रियमाहरेत् ।।* (म.स्मृ.२-२४५,२४६) इति ।

मह्यमिति वक्तव्ये आचार्याय इति सामान्योक्तिः अनौद्धत्यात् । **प्रजातन्तुं** - प्रजासन्तानं **मा व्यवच्छेत्सीः** विच्छिन्नं माकार्षीः । सिचि वृद्ध्यभावश्छान्दसः । ब्रह्मचर्यं निवृत्त्य न प्रव्रजितव्यम् । सन्तानार्थं निवेशनं कर्तव्यमित्यर्थः ।

*अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।*
*अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्।।* (म.स्मृ. ३-४)

इति मनूक्तरीत्या पत्योपादानं[१] कर्तव्यमित्युक्तम् । तन्तुम् इत्यनेन अनुवृत्त्या -

---

१. पत्न्युपादानं इति स्यात् ।

*एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।*
*गौरीं वा वरयेत्कन्यां नीलं वा वृषमुत्सृजेत् ।।*

इत्यर्थः उक्तः । अत्र प्रव्रज्या प्रतिषेधेन ब्रह्मचर्यादेव प्रव्रजेत् (प्रमाणकर) इति वचनं पुंस्त्वहीनविषयं मन्तव्यम् । अत एव जाबालोपनिषदि *ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनीभूत्वा प्रव्रजेत्* (४) इत्यनुक्रमेण आश्रमप्राप्तिमुक्त्वा *यदि वा इतरथा ब्रह्मचर्यादेव प्रव्रजेत्* इति गार्हस्थ्यानाधिकारमितरथेत्यनूद्य प्रव्रजेत् इत्युक्तम् । उक्तं च मनुना -

*ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।*
*अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ।।* (म.स्मृ.६-३५)

इति । अत्र मोक्षशब्देन परिव्रज्य लक्ष्यते तस्य मोक्षश्रमत्वोक्तेः *यदहरेव विरजेत् तदहरेव प्रव्रजेत्।* (४) इत्यपाकृतऋणत्रयविषये कालनियमाभावं दर्शयति । न च प्रजातन्तुं मा व्यवच्छेत्सीत् इति एतद्विरक्तविषयमिति वक्तुं शक्यं तत्र रागादेव प्रवृत्तेः विधिवैयर्थ्यात् । कुटुम्बभरणालस्येन प्रव्रजनप्रसक्तं प्रत्येवार्थवत्त्वात् । विहितयोः सत्यधर्मयोः अप्रमादं विदधाति - **सत्यात्** इत्यादिना । आपद्यपि सत्यं वक्तव्यं मनसापि सन्ध्यादिकर्म कर्तव्यम् इत्यर्थः । अत्र कुटुम्बभरणोपयोगिनो योगक्षेमयोः न प्रच्युतिः कार्या इत्याह - **कुशलात्** इत्यादि वाक्यद्वयेन । **कुशलम्** - क्षेमम् *कुशलं क्षेममस्त्रियाम्* (अ.को. १.४-२६ ) इति कोशकारः । लब्धस्य परिपालनम् इति यावत् । तत्र प्रमादः कुटुम्बभरणोपयुक्तस्य त्यागः । तदुक्तं याज्ञवल्केन -

*त्रैवार्षिकाधिकान्नादि स हि सोमं पिबेद् द्विजः*
*प्राक्सोमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत् ।।* (या.स्मृ. १.१२४)

इति । **भूत्यैः** - भूत्याः पञ्चम्यर्थे चतुर्थी । दयादिलब्धार्थाभावे अर्थार्जनं कर्तव्यमित्यर्थः ।

*अभ्युष्णात्सघृतादन्नादच्छिद्राञ्चैव वाससः ।*
*अपरप्रेष्यभावाञ्च भूय इच्छन् पतत्यधः ।।* (म.स्मृ.)

इति मनूक्तेः। तत्र प्रमादो नाम आग्राह्यग्रहणं । तदाह मनुः -

*अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।*
*अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम् ।।* (४-२)
*कृषेश्शिष्यस्य संप्रीत्या सात्त्विकानां प्रसादतः ।*
*लब्धवित्तं सतां पथ्यं लब्धेरन्यत्तु गृह्यते ।*
*अकृत्वा परसन्तापं अगत्वा खलमन्दिरम् ।*
*अक्लेशयित्वा चात्मानं यत्स्वल्पमपि तद्बहु ।।* (  ) इति ।

*ऋतामृताभ्यां जीवेति मृतेन प्रमृतेन वा ।*
*सत्यानृताभ्यामपि वा न जीवेन न श्ववृत्त्या कदाचन ।।*
*ऋतमुच्छशिलं प्रोक्तं अमृतं स्यादयाचितम् ।*
*मृतं तु याचितं प्रोक्तं प्रमृतं कर्षणं स्मृतम् ।।*
*सत्यानृतं तु वाणिज्यं तेन वापीह जीव्यते ।*
*सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ।।* (म.स्मृ. ४-४.५.६) इति च ।।

यत्तु अत्र केनचिज्जल्पितं भूतिशब्देन भस्मधारणं विधीयत इति तन्न, भूतिशब्दस्य वेदे कुत्रापि भस्मन्यप्रयोगात् प्रत्युत ऐश्वर्यमेव प्रयुज्यते - *वायव्यं श्वेतमालभेत भूतिकामः योऽलं भूत्यै सत् भूतिं न प्राप्नोति इति भूत्या इत्थ* (तै.सं.२-१-१) इत्यादि पूर्वकाण्डप्रयोगात् । अत्राप्रमादविधानं च प्राप्तनामेव क्रियते । **सत्यं वद** इत्यादिना सत्यधर्मौ प्राप्तौ कुशालार्थौ तु लोकतः । देवपितृकार्ये च धर्मविशेषौ । न च भस्मात्र प्राप्तम् ।

ननु उपनिषदन्तरे प्राप्तं श्रूयते हि कालाग्निरूद्रोपनिषदि *आग्नेयं भस्म* इत्यारभ्य *तिर्यक्तिस्रो रेखाः प्रकुर्वीत* इति मैवम् ; तत्रैव *व्रतमेतच्छाम्भवम्* इति व्रतविशेषनिष्ठाधिकारिकत्वोक्तेः। तच्च व्रतं न ब्राह्मणस्य *भस्मकेशतुषकपालामेध्यान्यधितिष्ठेत्* इति ब्राह्मणस्य भस्मस्पर्शनिषेधस्य गौतमेन प्रणयनात् । चन्द्रिकायां च उक्तम् -

*त्रिपुण्ड्रँ ब्राह्मणो विद्वान् लीलयापि न धारयेत् ।*
*त्रिपुण्ड्रधारणाद्विप्रः पतत्येव न संशयः ।।*

इति । अत्र च अनुवाके स्नातकधर्मा एवोच्यन्ते न साधारणधर्माः । भस्मधारणं हि सर्ववर्णाश्रमसाधारणमिति भवतोऽभिमतं । ऊर्ध्वपुण्ड्रधारणं तु वक्ष्यति अश्वक्रान्ते इत्यत्र । **स्वाध्यायप्रवचनाभ्याम्** इति प्रवचनार्थतया पुनः स्वाध्यायोक्तिः अनेन ब्रह्मयज्ञः उक्तः । देवयज्ञ-पितृयज्ञे विदधाति - **देवपितृकार्याभ्याम्** इति मनुष्ययज्ञं वक्ष्यति - **अतिथिदेवो भव** इति । भूतयज्ञश्च सिद्धः । *पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति सन्तिष्ठन्ते* (तै.आर.२-१०-१०) इत्यारभ्याम्नातत्त्वात् । **मातृदेवो भव** इत्यादि । **मातृदेवः** देववत् पूजनीयः इत्यर्थः । दृष्टान्तोक्त्या परदेवता पूजा च प्रतिदिनं कर्तव्येत्यर्थसिद्धम् । प्रव्रज्यायामपि मातृशुश्रूषणं कर्तव्यमिति तत्प्राधान्यद्योतयितुं मातुः पूर्वमुपादानां देहकृतो मन्त्रवत्त्वे स एवाचार्यताम् अर्हति नान्य इति ज्ञापयितुं पिता आचार्यात्पूर्वेमुपात्तः । आचार्यातिथ्योः संनिपाते प्रथममाचार्यः पूजनीय इत्याशयेन अतिथेः पूर्वमाचर्यः उक्तः । **धर्मं चर** इति । श्रौतस्मार्तकर्मणां कर्मत्वमुक्तं तत्र श्रौतेषु विशेषमाह - **यानि** इति । **यान्यनवद्यानि** प्रतिषिद्धभिन्नानि **तानि कर्माणि सेवितव्यानि -**

कर्तव्यानि। **नो इतराणि** - प्रतिषिद्धकर्माणि न कर्तव्यानि । यद्यपि इदम् अनवद्यानि इत्यनेनैव सिद्धं विहितकरणापेक्षया प्रतिषिद्धकरणम् आवश्यकम् इत्याशयेन पुनरुक्तम् ।

यद्वा - विहितान्यपि लोकविद्विष्टानि न कर्तव्यानि इत्याशयेन अनवद्यानि इत्युक्तम् । स्मार्तेषु विशेषमाह - **यानि अस्माकम्** इति । **अस्माकं यानि सुचरितानि-** शोभनचरित्राणि **तानि त्वया उपास्यानि** - यत्नतः शिक्षणीयानि । अस्माकम् इत्यनेन स्मृत्याचारद्वैधे अस्मदनुष्ठितान्येव कर्तव्यानि न इतराणि इत्युक्तम् । आचार्यपरिगृहीतस्यैव कर्तव्यत्वमुक्तं शान्तिपर्वणि । *को धर्मः सर्वधर्माणां भवतः परमो मतः* (महा.भा.शां.१३५-३) इति । अस्माकमिति बहुवचनेन गुरुपरम्परया प्राप्तान्येव कर्तव्यानि न तु मध्ये रागादिना परिगृहीतानि, इति दर्शितम् । अयं प्रकारः श्रौतधर्मेष्वपि बोध्यः । व्रीहियवादिषु वैकल्पिकेषु पूर्वपरिगृहीतमेव कर्तव्यमिति। सुचरितानि इत्यनेन व्यतिक्रमसाहसकृतानि दुश्चरितानि न अनुष्ठेयानि इत्युक्तम् । आपस्तम्बः - *दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषां, तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवरजस्तेषां तेजोविशेषेण प्रत्यवायो न विद्यते* (२-६-१३-७.८.९) इति । **नो इतराणि** - अस्मदनाचरितानि अनवद्यान्यपि न कर्तव्यानि । तथाह मनुः

*तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना वचोऽनृषेर्दर्शनोऽस्ति न किञ्चित् ।*
*धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ।।*

इति । ये किं च **ये के च** - ये केचन **अस्मात्** - अस्मत्तः, **श्रेयांसः** - अतिप्रशस्याः, **तेषां आसने** - आस्थाने **न प्रश्वसितव्यम्** - न विश्वासेन व्यवहर्तव्यं न वा प्रागल्भ्यं भावितव्यम्, किन्तु तदुदीरितपुरुषार्थो ग्राह्य इति भावः ।

अथ दानरूपधर्मे हेतुनियमान् दर्शयति - **श्रद्धया** इत्यादि । **श्रद्धया** आदरेण **देयम्, अश्रद्धया** तु **अदेयम्, श्रिया** - युक्तेन **देयम्** - वित्तानुरूपं देयमित्यर्थः । **ह्रिया देयम्** - लज्जया देयं, सुहृद्दुहित्रादेः वस्त्राभरणादि देयम् इत्यर्थः । **भिया देयम्** - अकरणे प्रत्यवायभयादपि देयं **संविदा** - प्रतिज्ञया हेतुना **देयम्** । कस्मैचित् ब्राह्मणाय किञ्चित्प्रतिश्रुतं चेत् तदवश्यं इत्यर्थः । *संविदागूः प्रतिज्ञानम्* (अ.को.१-५-५) इति कोशकारः।

एवं सत्यस्वाध्यायदानधर्माः आचाराश्च विहिताः । तत्र देशकालनियमादिष्वङ्गेषु कुत्रचित् सन्देहे संमर्शित्वादिगुणविशिष्टाः शिष्टा एव प्रष्टव्याः इत्याह - **अथ** इत्यादि । **अथ** अस्मदुपदेशानन्तरं **ते तव कर्मसु** अग्निहोत्रादिषु **विचिकित्सा** सन्देहः वा वृत्तेष्वाचारेषु **विचिकित्सा वा यदि स्यात्** तदा **तत्र** कर्मवृत्तेषु **संमर्शिनः** विचारकुशलाः, **युक्ताः** - युक्तिमन्तः, **आयुक्ताः** - तात्पर्यज्ञाः **अलूक्षाः,** अरूक्षाः रलयोरभेदः

दयालवः इति यावत्। **धर्मकामाः** अदाम्भिकाः ये ब्राह्मणाः **स्युः ते तत्र** क्वचित् विचिकित्सितार्थविषये **यथा वर्तेरन्** - आचरेयुः तदुपदेशादपि तदनुष्ठानमेव ग्राह्यमिति भावः । तत्र **तथा वर्तेथाः** - तथा आचर इत्यर्थः । आचार्यमुखात् श्रवणात् प्राक् अन्येनाभिगन्तव्याः श्रवणानन्तरमेव अनवगतांशनिर्णयाय शिष्टाः अभिगन्तव्याः इत्युक्तं भवति । तथा च अध्यापयितुरर्थोपदेशासामभ्योऽन्येभ्यः[१] तदर्थः श्रोतव्यः । यथा कथञ्चित् तस्य साम......भ्यः(?) ततोऽपि उत्कृष्टाः सन्तीति मन्तव्यः, किन्तु तदवगतार्थं सर्वं तत एव श्रुत्वा अवशिष्टमन्यतः श्रोतव्यम् । सर्वथाऽपि अध्यापयिता नोपेक्ष्यः इति भावः।

**अथ** इत्यादि । **अथ** शब्दः प्रक्रमानन्तरे । **अभ्याख्यातेषु** - निन्दितेषु कर्मसु वृत्तेषु च इत्यर्थः । **ये तत्र** इत्यादि गतम् । **एषः** पूर्वोक्तवाक्यजातम् **आदेशः** शब्दापेक्षया पुल्लिङ्गत्वम्, **आदेशः** विधिः अनतिक्रमणीयार्थः इत्यर्थः । **उपदेशः** - सुहृद्भावेन कथनं **वेदोपनिषत्** । **वेदः** - रहस्यम्, अनुशासनम् पुनः पुनः उपदेशः । एतदतिरेकेण पुनः धर्मविषये उपदेश्यानन्तरं नास्तीत्यर्थः । एवमेव च एतत् पूर्वोक्तार्थजातम् **उपास्यम्**- अनुष्ठेयम् । पुनर्वचनं दाढर्याय ।।

**प्र. - वेदमनूच्य** इति । वेदमध्याप्य आचार्यः शिष्यमनुशिष्यात् इत्यर्थः । **स्वाध्यायान्मा प्रमदः** इति । स्वाध्यायाध्ययने प्रमादं मा कार्षीः । तत्राविहितो भव इत्यर्थः ।

**आचार्याय** इति । गुरवे दक्षिणां दत्वा पुत्रसन्तत्यविच्छेदाय भार्यामुद्वहेः । **कुशलम्** - [1]देवार्चनादिमङ्गलाचरणम्[1] । **भूत्यै न प्रमदितव्यम्** । एश्वर्यार्थं कर्म कुरु । ऐश्वर्यस्य सर्वश्रेयस्साधनत्वादिति भावः । **मातृदेवो भव** - देवमिव मातरं पूजय इत्यर्थः । एवमुत्तरत्रापि ।

**यान्यस्माकम्** इति । शिष्टाचारेष्वपि श्रुतिस्मृति[2]विरोध[2] शून्यतया यानि सुचरितानि, तान्येव होलाकादीनि ग्राह्याणि; न लोभादिमूलचरितानि इत्यर्थः । **ये के च** इति । स्वापेक्षया श्रेष्ठानां ब्राह्मणानां शय्यासनेषु समानतया न विश्रमणीयम् । **श्रिया देयम्** इति । **श्रीः** - मुखशोभा । अविषण्णवदनेन देयमित्यर्थः । **भिया देयम्** इति । सम्यगकरणे प्रत्यवायो भविष्यतीति भिया देयमित्यर्थः । **संविदा देयम्** इति । **संवित्** - संकल्पः । संकल्पपूर्वकं देयम् इत्यर्थः । **अथ यदि** इत्यादि । **कर्म** अग्निहोत्रादि । **वृत्तम्** - शिष्याचारमात्रप्रमाणकहोलाकादि । तत्र यदि सन्देहः इत्यर्थः । **संमर्शिनः** - विचारकुशलाः

---

१. अर्थोपदेशासामर्थ्येभ्योऽन्येभ्यः इति स्यात् ।

1. देवतार्चनादि - अ । 2. विरोधि - अ ।

इत्यर्थः । **युक्ताः** - [1]वेदशास्त्रेष्वभिरताः[1] । **आयुक्ताः** - आ समन्तात् युक्ताः । लौकिकेष्वपि कुशलाः इत्यर्थः । [2]**अलूक्षाः**[2] - क्रोधलोभादिरहिताः । शिष्टं स्पष्टम् । **अथ** इत्यादि । **अभ्याख्याताः** - अभिशस्ताः इत्यर्थः ।

**एष आदेश** इत्यादिः । **आदेशः** - शासनम् । राजज्ञातुल्यमिति भावः । **उपदेशः** पित्रादिहितैषिवचनम् । **वेदोपनिषत्** वेदानां रहस्योपदेशः । एतदनुशासनम् शिष्यं प्रति आचार्यस्य कर्तव्यमनुशासनमेतत् । **एवमुपासितव्यम्** अनुशासनप्रकारेण अनुष्ठेयमित्यर्थः । **एवमु चैतदुपास्यम् इति** । 'उ' शब्दोऽवधारणे । एवमेव उपास्यमित्यर्थः ।।

**कू.भा**. - वेदमनूच्येत्याद्यनुशासनार्थोनुवाकः । प्रमाणान्तरसिद्धानामपि सत्यवचनादीनां उपनिषद्विद्यानुवचनानन्तरं फलाधिक्यार्थमनुवचनम् । **वेदमनूच्याचार्योन्तेवासिनमनुशास्ति** - **अनूच्य** - अध्याप्य, **अन्तेवासिनं** - शिष्यं, **आचार्यः**, **अनुशास्ति** । कथं अनुशासनम् ? एवं । सत्यं **वद** - यथा दृष्टार्थभूतहितवचनं सत्यं, सदा त्वया तदेव वक्तव्यम् । **धर्मं चर** - श्रुतिस्मृत्युदितं वर्णाश्रमनियतं धर्ममनुतिष्ठ । **स्वाध्यायान्मा प्रमदः** - *स्वाध्यायोऽध्येतव्यः* (तै.आर.२-२५) इति विहितात् नित्यस्वाध्यायात्, **मा प्रमदः** - प्रमादं माकार्षीः । **आचार्याय प्रियं धनं** - विद्यानुकूलदक्षिणां, **आहृत्य, प्रजातन्तुं** - प्रजासन्तानं, **मा व्यवच्छेत्सीः** - विच्छिन्नं माकार्षीः । विद्यामधिगम्य त्वरितेन न प्रव्रज्या कार्या, सन्तानार्थं निवेशनं तावत् कर्तव्यम् इत्यर्थः । पुनरपि प्रधान्यख्यापनार्थमाह - **सत्यान्न प्रमदितव्यं** - सत्याच्च प्रमदनं अनृतप्रसंगः, प्रमादशब्दसामर्थ्यात् विस्मृत्यापि अनृतं न वक्तव्यमित्यर्थः । अन्यथा असत्यवदनप्रतिषेधः एव स्यात् । **धर्मान्न प्रमदितव्यं** - धर्मशब्दस्य अनुष्ठेयविषयत्वात् अननुष्ठानं प्रमादः, स न कर्तव्यः, अनुष्ठेयः एव । **कुशलात्** - आत्मरक्षणार्थ कर्मणः, न प्रमदितव्यम् । भूतिः - विभूतिः, तस्यै **भूत्यै** - भूत्यर्थात् मंगळयुक्तात् कर्मणः, न प्रमदितव्यम् । **स्वाध्यायप्रवचनाभ्यान्न प्रमदितव्यम्** ते हि नियमेन कर्तव्यशब्द इत्यर्थः । **देवपितृकार्याभ्यां न प्रमदितव्यम्** - देवयज्ञ-पितृयज्ञाभ्यां न प्रमदितव्यम् । **मातृदेवो भव पितृदेवो भव आचार्यदेवो भव अतिथिदेवो भव** इति। मात्रादीनां देववत् पूजार्थं मातृदेवो भवेत्याद्यनुशासनम् । देवतावदुपास्याः वा ते इत्यर्थः । **यान्यनवद्यानि कर्माणि तानि सेवितव्यानि** । **अनवद्यानि** - अनिन्दितानि अनपवदनीयानि शिष्टाचारलक्षणानि यानि कर्माणि, तानि कर्तव्याणि त्वया । **नो इतराणि** - सावद्यानि न सेवितव्यानि । **यान्यस्माकँ**

---

1. अभियुक्ताः - ग,घ. युक्ताः - अ । 2. अरूक्षाः - ग,घ ।

**सुचरितानि-** शोभनचरितानि आम्नायाविरुद्धानि, **तान्येव त्वयोपास्यानि -** अदृष्टार्थानि यत्नतश्शिक्षणीयानि । **नो इतराणि** - विपरीतानि न कर्तव्यानि । ततोप्यन्यं हितं ब्रूम - **ये के चास्मादित्यादि । ये के च** अविशेषिताः आचार्यत्वादिधर्मैः, **अस्मत्** - अस्मत्तः, **श्रेयांसः -** प्रशस्यतराः, ते च ब्राह्मणाः न क्षत्रियादयः । **तेषां आसनेन** - आसनदानादिना, **त्वया प्रश्वसितव्यं** - प्रश्वसनं प्रश्वसः श्रमापनयः, तेषां श्रमः त्वया अपनेतव्यः इत्यर्थः । यद्वा, तेषां आसने आस्थाने गोष्ठ्यां, त्वया न प्रश्वसितव्यं न विस्रब्धेन त्वया वक्तव्यं, न वाक् प्रगल्भयितव्या । तेषु समुदितेषु प्रश्वासोपि न कर्तव्यः, केवलं तदुक्तसारग्राहिणा भवितव्यमित्यर्थः । किञ्च - दाने श्रद्धादयो वक्ष्यमाणाः षडेते प्रतिपत्तव्याः । यत् किञ्चित् देयं, तत् श्रद्धयैव दातव्यम् । **अश्रद्धया अदेयं -** न दातव्यम् । **श्रिया -** संपदा दातव्यम् । असति विभवे, **ह्रिया -** लज्जामात्रेण, किंचिद्धेयम् । **भिया देयम्** - अदाने प्रत्यवायभयादपि दातव्यम् । **संविदा देयं -** संकेतेनापि दातव्यम् । धर्मादिविचिकित्सायां निर्णयप्रकारमाह - **अथेति । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्,** कर्माण्यग्निहोत्रादीनिवृत्तमाचारः, तत्र विचिकित्सा सन्देहः । तत्र तस्मिन्नर्थे तस्मिन्देशे काले वा । **ये ब्राह्मणाः -** वेदयाथात्म्यविदः । तत्र कर्मादौ । युक्ता इति व्यवहितेन सम्बन्धः कर्तव्यः । **सम्मर्शिनः -** विचारकुशलाः । **युक्ताः** अभियुक्ताः । कर्मणि वृत्ते वा - **आयुक्ताः-** अपरप्रयुक्ताः **अलूक्षाः** - अरूक्षाः अक्रूरमतयः, अलुब्धाः अपरुषवक्तारो वा । **धर्मकामाः** - अकामहताः अदांभिकाः । **ते, यथा, तत्र** तस्मिन् कर्मनिवृत्ते वा, **वर्तेरन्,** तथा त्वमपि वर्तेथाः । **अथाभ्याख्यातेषु** अभ्याख्याताः अभिशस्ताः, अभ्याकृष्टाः निन्दितार्थाः, तेषु यदि विचिकित्सा स्यात् । **ये तत्रेत्यादि**, गतम् । **एष आदेशः -** वेदादेवाज्ञाविधिरित्यर्थः । **एष उपदेशः** पुत्रादीनां वचनम् । आदेश उपदेश इति श्रुतिस्मृत्योः कृत्स्नोर्थस्संक्षेपेणोक्त इति वेदितव्यः । किञ्च - **एषा वेदोपनिषत्** - वेदरहस्यं वेदार्थ इति यावत् । **एतदनुशासनं** - अमोघफलं राजशासनवत् अनतिक्रमितव्यम् । **एवं -** उक्तेन प्रकारेण, **उपासितव्यं** - उपासनं कर्तव्यम् । **एवमु चैतदुपास्यम्** - उक्तमेतदर्थजातमुपास्यम्। नान्यः पन्था अन्वेषणीयः । उ इति निपातोऽवधारणे ।।

**आ.भा. - वेदमनूच्य -** वेदमुपदिश्य । **आचार्यः** - उपदेष्टा गुरुः । **अन्तेवासिनम्-** शिष्यम् **अनुशास्ति -** विद्याङ्गतयाऽवश्यकर्तव्याणि कर्माण्युपदिशति । यदकरणे विद्यासिद्धिप्रत्यूह उपतिष्ठेत् तानि कर्माणि शिक्षयतीति भावः । **सत्यं वद** - प्रमाणपरीक्षितं यद्वस्तु तद्वद ।

अनृतवदने दोषश्रवणादिति भावः । **धर्मं चर** - स्वाधिकारानुसारं श्रुतिस्मृतिप्रतिपादितं धर्ममनुतिष्ठ । **स्वाध्यायान्मा प्रमदः** - स्वाध्यायो वेदः तदुपबृंहणं ब्रह्मसूत्रं पुराणादि च तस्मात् **मा प्रमदः** प्रमादं मा कार्षीः । अप्रमत्तेन स्वाध्यायाध्ययनं कुरुष्व । तस्य विज्ञानसाधनत्वात् । **आचार्याय** इति । **आचार्याय** - गुरवे ब्रह्मविद्योपदेशकाय, **प्रियम्** - इष्टं विद्यानिष्क्रयार्थं वस्तु **आहत्य** - आनीय दत्वा तदनुज्ञां लब्ध्वा सन्तत्यविच्छेदानुरूपां भार्यामुद्वह । न तु तद्विच्छेदं कुरुष्वेत्यर्थः । कदाचिद्दारपरिग्रहेऽपि न पुत्रोत्पत्तिः स्यात् तदा तदर्थं पुत्रेष्ट्यादिरूपं प्रयत्नं कुर्या इत्यभिप्रायो विच्छेदनिराकरणस्य ।

पूर्वं सत्यवदनधर्माचरणादिकं शासितं सम्प्रति तत्र प्रमादनिषेधः क्रियते गृहस्थस्य प्रमादसम्भावनाया विशेषसत्वात् प्रमादतोऽपि असत्यादिप्रसङ्गो यथा न भवेत् तथा वर्त्तनीयमित्यभिप्रायेणाह - **सत्यात्** इति । सत्यवदने प्रमादः न कार्यः इत्यर्थः । धर्माचरणे प्रमादो न विधेयो लोभादिना धर्मानुष्ठानपरित्यागमूलप्रमादस्य अधिकतः सम्भवात् । कुशलमात्मना आत्मीयस्य च रक्षार्थं कर्म धनादिसमुपार्जनरूपं तत्र प्रमादो यथा न भवेत् तथा आचरणीयम् । **भूतिः** ऐश्वर्यं तत्साधकात् कर्मणो न प्रमदितव्यम् । तत्रापि प्रमादः त्याज्य इत्यर्थः । स्वाध्याये वेदाध्ययने तत्प्रवचने अध्यापने च प्रमादो न कार्यः । नियमतस्तदुभयं विधेयमिति भावः । देवकार्यं वैश्वदेवादि, पित्र्कार्यं तर्पणश्रद्धादि, ताभ्यां न प्रमदितव्यम् । वैश्वदेवादिना श्राद्धादिना तर्पिता देवाः पितरश्च विद्योपार्जने शुभाशीर्वादादिना तव साहाय्यकारिणो भविष्यन्ति । तस्मात् तत्र प्रमादो वर्ज्यः इति भावः ।

माता देवो यस्य स **मातृदेवो भव** । देवमिव मातरं मत्त्वा तदीयपूजादिसंविधानपरो भव इत्यर्थः । पिता शास्त्रोक्तः षड्विधो जनको देवतुल्यो यस्य तादृशो भव । देववत् पितरं पूजय इत्यर्थः । **आचार्यो** मन्त्रोपदेष्टा, शास्त्रोपदेष्टा गुरुः स देवो देववत् पूज्यो यस्य तादृशस्त्वं भव । **अतिथिः** - अप्रातर्कितागमनोऽभ्यागतो व्यक्तिविशेषः सोऽपि देववत् पूजनीयः सम्भावितोपचारैः इत्यर्थः । यानि कर्मणि **अनवद्यानि** - दोषरहिततया लोकशास्त्राभ्यां अनिन्दितानि शिष्टाचारतया प्रसिद्धानि **तानि सेवितव्यानि** - समाचरणीयानि । **नो इतराणि** - शिष्टाचारबहिर्भूतानि कर्माणि नाचरणीयानि तदाचरणे प्रत्यवायप्रसक्तेः । यानि गुरूणाम् **अस्माकं सुचरितानि** शोभनान्याचरणानि लोकशास्त्राऽविरुद्धानि इत्येतत् । **तानि त्वयोपास्यानि**- अनुष्ठेयानि **नो इतराणि** - लोकशास्त्रविरुद्धानि तु अस्मदाचरितान्यपि कर्माणि अस्मत् आचरितत्वमात्रेणापि न अनुष्ठेयानि तदाचरणे विद्याप्रतिबन्धक-प्रत्यवायसम्भवात् । **ये के च** - ये केचिद् **अस्मत्तः** अस्मदपेक्षया **श्रेयांसः** - अतिप्रशस्याः **ब्राह्मणाः** - विप्राः ।

विद्यया वयसा वृत्तेन वा श्रेष्ठा ब्राह्मणा इत्येतत् । **तेषाम् आसनेन** आसनप्रदानादिना । **त्वया प्रश्वसितव्यम्** - तदीयः श्रमापनोदो विधेयः । यद्वा, **आसने** इति सप्तम्यन्तं पदम् । **न** इति पृथक्पदमव्ययम् । तादृशानां विप्राणाम् **आसने** शय्याऽऽसनादौ **त्वया न प्रश्वसितव्यं** तत्र विश्रामः त्वया न विधेयः । उपलक्षणमेतत् । स्वापेक्षयापि श्रेष्ठानां श्रमापनोदकरणस्य तदीयासनादौ स्वकर्तृकस्योपवेशनस्य च इति भावः।

**श्रद्धा** आस्तिक्यबुद्धिः तया **देयम्** । आस्तिक्यबुद्ध्यैव दानं कार्यम् । **अश्रद्धया** आस्तिक्यबुद्धिं विना अदेयम् । न दातव्यमित्यर्थः । प्रसज्यप्रतिषेधोऽत्र नञ् । **श्रिया देयम्** - स्वविभवानुसारेण देयम् इत्यर्थः । यद्वा **श्रीः** अत्र प्रसन्नता । तथा च यत्किञ्चित् देयं तत्प्रसन्नतयैव देयं न विषण्णमनसा इति भावः । **ह्रिया देयम् - ह्रीः** अत्र लज्जा, सा च बहुदानेऽपि अत्यल्पमिदं परिहासाय स्यात् इति संकुचितचेतसा देयम् । यद्वा अस्मत्पित्रादिभिः अत्र एतावद् दत्तं ; तत्क्रमपरित्यागे जायमानया लज्जया देयमित्यर्थः । **भिया देयम्** - भीः भयं, तच्च अस्मै प्रार्थिने एतद्दाने नृपादिरोषः स्यात् अस्मै चेन्न दीयते तदा मे प्रत्यवायः स्यात् इत्यादिभयेन दातव्यम् इत्यर्थः । **संविदा देयम्** समानं वेत्तीति संविद्, मित्रादि तया संविदा मैत्र्यादिना प्रयोजनं विनाऽपि देयम् । यद्वा संविद् ज्ञानं, संविदा ज्ञानेन, ज्ञानपूर्वकं देयम् । अत्र तीर्थादो दाने फलमिदं शास्त्रोक्तमिति बुद्ध्या देयम् इत्यर्थः ।

एवं शास्त्रद्वारा निश्चितेषु कर्मसु यदनुशासितव्यं तदुपदिश्य सम्प्रति सन्दिग्धेषु कर्मसु किं कर्तव्यम् इत्यनुशास्ति **अथ** इति । **अथशब्दः** सन्दिग्धार्थविषयकानुशासनोपक्रमार्थः । **यदि ते कर्मविचिकित्सा** कर्मसु श्रौतेषु स्मार्तेषु वा विचिकित्सा, इदं कार्यं न वा ? कार्यञ्चेत् कथं कार्यम् इत्यादिस्वरूपः संशयः **स्यात्** उपस्थितो भवेत् । **वृत्तविचिकित्सा** - वृत्तं लौकिक आचारः तत्र विचिकित्सा । इदं कर्तव्यं न वेति संशयः स्यात्, तदा **तत्र** तस्मिन्प्रदेशे काले च **ये ब्राह्मणाः** विप्राः, **संमर्शिनः** कार्याऽकार्यविवेचनशीलाः **युक्ताः** - श्रुतिस्मृतिषु अभियोगवन्तः श्रुतिस्मृत्यर्थपरिभावनापराः। आयुक्ताः - लौकिकार्थेष्वपि परिपक्वबुद्धयः । अनुभविन इत्येतत् । **अलूक्षाः** - रूक्षप्रकृतिभिन्ना विगतक्रोधादयः । **धर्मकामाः** धर्मं कामयन्ते ये तादृशाः । यद्ययुक्तं कथयिष्यामि, तदा मामेव पापम् एतेनाचरितेन संस्पृशेत् इति पापभीरवः इत्येतत् । **स्युः** उपलब्धा भवेयुः । **ते तत्र** तेषु सन्दिग्धेषु कर्मसु **यथा वर्तेरन्** समाचरन्ति उपदिशेयुर्वा **तथा वर्तेथाः** । तदाचरणानुसारेण तदुपदेशानुसारेण कर्माणि सन्दिग्धानि आचरेः इत्यर्थः । तादृशकर्मसु लौकिकाचारेषु वा सविचारमात्रमनुसृत्य न आचरणीयमिति भावः। एवमसन्दिग्धकर्मविषये

वृत्तविषये च अनुशासनं विधाय सम्प्रति दोषवत्तया सन्दिग्धेषु जनेषु कथं वर्तनीयम् इति अनुशास्ति- **अथाभ्याख्यातेषु** इति । **अथशब्दः** सन्दिग्धापेक्षया अर्थान्तरभूताभिशस्त-विषयककर्तव्योपदेशोपक्रमार्थः । **अभ्याख्याताः** पापितया अभितो लोकैः ख्याता निर्दिष्टा ये तेषु इत्यर्थः । पातकवत्तया सन्दिग्धेषु जनेषु किमत्र कर्तव्यम् अस्मिन् कर्मणि अनियोजनीयो न वा? अस्मै इदं देयं न वा ? इत्यादिरूपः संशयो यद्युपतिष्ठेत् तदा परामर्शप्रवीणाः शास्त्रकुशला लोककुशलाश्च येऽनुभविनो भवेयुः, तत्र देशे काले च तदाचरणं, तदुपदेशं वा अनुसृत्य, तेषु त्वमपि **वर्तेथाः** समाचरे इत्यर्थः । तत्रापि केवलया स्वबुद्ध्यैव न आचरणीयम् इति भावः। शब्दानामर्थः पूर्ववदेव व्याख्यातव्यः।

**एष आदेशः** प्रशासनम् इदमेव। राजाज्ञावत् एतन्नान् न उल्लङ्घनीयम् इति भावः । **एषः उपदेशः** इदमेव पुत्रादिहितचिन्तकानां पुत्रादिकं प्रति उपदेशवाक्यम् इत्यर्थः । **एषा वेदोपनिषत्** वेदानाम् **उपनिषत्** रहस्यार्थबोधकं वाक्यम् एतदेव इत्यर्थः । **एतदनुशासनम्** आचार्यैः शिष्यं प्रतिकरणीयमनुशासनम् एतदेव नान्यत् । एवमुक्तप्रकारेण उपासितव्यं परमात्मनः उपासनं कर्तव्यम् । तदङ्गभूतकर्मानुष्ठानम् अपरित्यज्यैव उपासना विधेया इति भावः । **एवमु चैतदुपास्यम् । उशब्दोऽवधारणार्थकः** । एतत्परमात्मस्वरूपम् एवं पूर्वोक्तरीत्या उपास्यमेव । न उपास्यमिति न इति भावः ; तदनुपासने बन्धविनिर्मुक्त्यसम्भवात् । *नान्यः पन्थाः विद्यतेऽयनाय* (श्वे.उ.६-१५)इति श्रुतेः ।।

**सु.** इदम् आचार्यानुशासनमुखेन प्रवर्तने वेदानुशासनम्, विविदिषोः कर्मकर्तव्यतानियमज्ञापनार्थम् । विद्याप्रकरणे श्रवणाच्चैवं हार्दमुन्नीयते । न विविदिषामात्रेण कर्मभ्यो विरतिरुचिता । अविद्यानिष्पत्तेः अनुष्ठेयं नाम कर्म, विद्या च अपरोक्षलक्षणा, सा हि ध्यानपरिपाकनिष्पाद्या, कर्मभिः उपमर्दित-दुरितान्तरायस्यैव तत्सिद्धिः । यद्यपि निःश्रेयसे विद्यैव साधनम्, अथापि तन्निष्पत्तौ कर्मणामस्त्युपयोगः इति कर्मावश्यमनुष्ठेयम् । श्रूयते च 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ईश. उ. २) इति । अत एव च कर्मणो विद्याङ्गत्वम् । अध्याप्यवेदम् आचार्यो अन्तेवासिनमनुशास्ति । **सत्यं वद** सर्वतः श्रेयानयं धर्मः, यत् सत्यवदनम्, समूलो वा एष परिशुष्यति यः अनृतं वदति । **धर्मं चर**- श्रौतं स्मार्तं च यथाधिकारम् आचार । **स्वाध्यायात्** - अध्ययनात् **मा प्रमदः** अध्ययने तु अनुदिनमवहितेन भाव्यम्, विज्ञानमूलं हि तत्, **आचार्याय** तस्य यत् **प्रियं धनम्** तत्

**आहृत्य** - आनीय समर्प्य तेनानुज्ञातः कृत्वा दारसंग्रहं **प्रजातन्तुम् -** पुत्रपौत्रादिलक्षणं प्रजासन्तानं **मा व्यवच्छेत्सीः** । *सन्तानसम्पत्तये दारानुद्वहेः* इति यावत् । धर्मानुष्ठानशेषतया एतद्विधानम् । **सत्यात् -** सत्याचरणात् **न प्रमदितव्यम्,** प्रमादतोऽपि नासत्यं कुर्याः । पूर्वमनृतवदनं प्रतिषिद्धम् इह तदाचरणं प्रतिषिद्ध्यते प्रमादतोऽपि न कार्यम् इत्यपि विशेषः । **धर्मान्न प्रमदितव्यम्** अत्र प्रमादो निषिद्ध्यते इति विशेषः, अनुष्ठेयेषु एकोऽपि प्रमादेन न त्याज्यः इति यावत् । **कुशलात्** - क्षेमात्, न प्रमदितव्यम् । आपदि गौणधर्माचरणादिभिः आत्मा रक्ष्यः इति यावत् । **भूत्यै न प्रमदितव्यम्** मङ्गलावहं कर्म अवहितः समाचरेः इति यावत् । अध्ययनाध्यापनाभ्यां न प्रमदितव्यम् । अध्ययने प्रमादो निषिध्यते, अध्यापनेऽपि इत्यपि विशेषः । **धर्मान्न प्रमदितव्यम्** इति सामान्यतः समादिष्टमपि विशेषतः समादिशति तदाचरणदार्ढ्याय **देवपितृकार्याभ्यां न प्रमदितव्यम्** - दैवं वैश्वदेवादि पित्र्यं श्राद्धम् । स्वाहाकारस्वधाकारविरहितम् अन्यत् कर्म कृतमपि अकृतप्रायमिति यावत् । मात्रादयः त्वया देवतावदुपास्याः । अथ शिष्टाचारप्राप्तानि **यानि अनवद्यानि** दोषरहितानि **तानि** त्वया **सेवितव्यानि** । **नो इतराणि** - सदोषाणि शिष्टानुष्ठितान्यपि न त्वया सेव्यानि । शिष्टानामपि जातु रजसः समुन्मेषेण भवेदेव निन्दिताचरणम्, तदाचरणं न प्रमाणं कर्तव्ये कर्मणि इति भावः । अस्माकमपि आचार्याणां **यानि सुचरितानि** श्रुतिस्मृत्यविरुद्धानि **तान्येव त्वयोपास्यानि** । **नो इतराणि** । आचार्याणामपि अस्माकम् अवर्जनीयो नाम गुणमयसङ्गात् कामलोभोन्मेषः, तन्मूलकानि प्रामादिकानि असदाचरितानि नैव सेव्यानि[1] । **ये के च अस्मत्** - अस्मत्तः, **श्रेयांसः** - श्रेष्ठाः विद्यया वृत्ततो वा **ब्राह्मणाः, तेषां त्वया आसनेन** - आसनदानादिना **प्रश्वसितव्यम् -** विनयेन वर्तितव्यम् इत्येतत् । यत् **देयं** तत् **श्रद्धयैव** देयम्, **अश्रद्धयाऽदेयम्, श्रियादेयम्** - **श्रीरत्र** मनस्तुष्टिलक्षणा, तया **देयम्** । **ह्रिया देयम्** - लज्जया देयम्, बहु दीयमानमपि इदमत्यल्पमस्मै कथं दद्यम् इति लज्जापूर्वकं देयम्, न तु मया बहु दीयते इत्यभिमतिपूर्वकम् । **भिया देयम्** - अदत्ते तस्करादिभ्य इह भयात् परतश्च प्रत्यवायतो भयात्, देयम् । **संविदा देयम् - संविदा** - मैत्र्या देयम्, प्रयोजननिरपेक्षम् इति यावत् । अथैवं वर्तमानस्य ते कर्मणि **वृत्ते वा विचिकित्सा** संशयः स्यात्, तदा **तत्र** - देशे काले वा, ये वक्ष्यमाणगुणविशिष्टा ब्राह्मणाः स्युः कीदृशाः ? **संमर्शिनः** - सर्वत्र कर्तव्ये कर्मणि

---

१. **वस्तुतस्तु -** कर्माणि त्रिविधानि - सत्कर्माणि, दुष्कर्माणि, उदासीनानि चेति । कण्डूयनादीनि हि न सत्कर्माणि, न वा दुष्कर्माणि इतराणीति उदासीनकर्मविषयं स्वरसम् ।

शास्त्रीये वृत्ते वा विचारक्षमाः । **युक्ताः** न केवलं विचारक्षमाः अपि तु युक्ताः नियमेन कर्मसु युक्ताः, **आयुक्ताः** समन्ताद्युक्ताः, साङ्गोपाङ्गं सकलेषु श्रौतेषु स्मार्तेषु च कर्मसु युक्ताः, **अलूक्षाः** - अरूक्षाः अक्रूरमतयः, क्रोधादिरहिता इति यावत् । धर्मे एव कामः येषां, नार्थे तथाभूताः, त एते ब्राह्मणाः तेषु सन्दिग्धेषु कर्मसु वृत्तेषु वा **यथा वर्तेरन् तथा** त्वं **तत्र वर्थेथाः** । **अथ अभ्याख्यातेषु** - अभिशस्तेषु, दोषग्रस्ततया सन्दिह्यमानेषु, पूर्ववत् तेषु ये संमर्शिनो ब्राह्मणा युक्तत्वाद्युक्तगुणविशिष्टा ब्राह्मणा यथा वर्तेरन् तथा त्वं तेषु वर्तेथाः । तद्विनिर्णयेऽपि तेषां वचनमेव प्रमाणम् ।

**एष आदेशः** - प्रशासनम्, राज्ञः प्रशासनमिव अनतिलङ्घनीयम् इदम् अनुशासनम् इति यावत् । **एष उपदेशः** - पुत्रं प्रति पित्रादेरिव हितैषिवचनम् । **एषा वेदोपनिषत्** - वेदैः क्रियमाणो रहस्योपदेशः हितोपदेशः वा । एतदेव शिष्यं प्रति सर्वैराचार्यैः क्रियमाणमनुशासनम् । **एवम्** - उक्तेन प्रकारेण, **उपासितव्यम्** - अनुष्ठेयम् । **एवमु** - एवमेव, **उपासितव्यम्** - अनुष्ठेयम् । अवधारणार्थं पुनर्वचनम् ।।

## द्वादशोऽनुवाकः

[उपसंहारशान्तिपाठः]

**शं नो मित्रश्शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् । ओं शान्तिः शान्तिः शान्तिः ।।**

**।। इति द्वादशोऽनुवाकः ।।**

**।। इति शिक्षावल्ली समाप्ता ।।**

**तै.भा.** - अथ उत्तरशान्तिः । शं न इत्यादिगतम् । **अवादिषम्** - अध्यगीषम् । **आवीत्** - अरक्षत् इति विशेषः ।।

**।। इति कौशिकगोविन्दराजकृतौ सांहित्युपनिषद्वृत्तिः ।।**

**प्र.** - अधीतानामुपनिषदाम् अन्ते पठितव्यां शान्तिमाह - **शं नो मित्र** इत्यादि । पूर्वमेव व्याकृतमेतत् ऌडादिस्थाने भूतार्थत्वात् लुङ्प्रयोगः इति विशेषः ।।

**।। इति तैत्तिरीयशिक्षावल्लीप्रकाशिका ।।**

**कू.भा**. - एवं सांहित्य उपनिषदः समाम्नाताः, तासामादावन्ते च शान्त्यनुवाकः उक्तः । उक्तयोजनः पुनरधीतः । अयमप्यादिमेन व्याख्यातप्राय एव । **अवादिषम्** इति भूतकालप्रत्ययो विशेषः । एवं त्वत्प्रसादेन अविघ्नेन अवादिषम् । तदधीतं **आवीन्मां** मिथ्याधीतत्वादि दोषप्रसंगेन निर्वर्तिताध्ययनं च यथा तथा अरक्षत् । अन्यत्सर्वं समानम् ।।

**।। इति तैत्तिरीयशिक्षावल्लीकूरनारायणभाष्यम् ।।**

**आ.भा.** अध्यायसमाप्तौ पठनीयः शान्तिपाठः । व्याख्या पूर्ववद्बोध्या । भूतार्थतया स्थाने लुङ्ः प्रयोगः ।।

**।। इति तैत्तिरीयशिक्षावल्लीआनन्दभाष्यम् ।।**

**सु.** - इयमुत्तरशान्तिः । अध्ययनावसाने पठितव्या शान्तिः । व्याख्यातोऽयं मन्त्रः । भूतार्थत्वात् वदिष्यामि इति स्थाने **अवादिषम्** इति अवतु इति स्थाने आवीत् इति प्रयोगः ।।

**।। इति तैत्तिरीयशिक्षावल्लीसुबोधिनी ।।**

* * *

# आनन्दवल्ली[१]

## [गुरुशिष्यसंकल्पः]

**हरिः ओम्**

**सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ओं शान्तिः शान्तिः शान्तिः ।। १ ।।**

**प्र.दी. - सह नाववतु** इति । एतदुपनिषत्प्रतिपादकः परमात्मा नौ आवां गुरुशिष्यौ, **सह अवतु** - उभयोः यथा दोषो न भवति तथा रक्षतु इत्यर्थः । पुनरपि प्रार्थयते **सह नौ भुनक्तु** परमात्मा नौ, **सह** - आवां गुरुशिष्यौ सह **भुनक्तु** परिपालयतु, भुजपालनाभ्यवहारयोः (धा.पा.१४५५) इति धातुः । **सह वीर्यं करवावहै** । सहैव आवां विद्याकृत, **वीर्यम्** - सामर्थ्यं, **करवावहै** करवाव इत्यर्थः । **तेजस्वि नावधीतमस्तु** । **नौ** आवाभ्यां, **अधीतं तेजस्वि अस्तु** वीर्यवत्तरमस्तु, **मा विद्विषावहै** परस्परानुरागयुक्तौ स्याव इत्यर्थः । **शान्तिश्शान्तिश्शान्तिः** अस्मदीयदोषान्तराणम् इत्यध्याहार्यः, शान्तिः इति त्रिरावृत्त्या दोषाणां अत्यन्तनाशो भूयात् इति यावत् ।।

**तै.भा. -** अथ वारुण्य उपनिषदः त्रयोनुवाकाः । तत्रादौ शिष्याचार्ययोः प्रार्थनामन्त्रः **सह नाववतु** इत्यादिना । **आवां -** शिष्याचार्यौ, **सह -** तुल्यमेव, **अवतु -** शिष्यकृतमाचार्यकृतं च ब्रह्मप्रतिबन्धकप्रत्यूहनिवहमपोह्य समग्रं तत् ज्ञानम् उपजनयतु । प्रकरणात् परं ब्रह्म प्रत्यवगम्यते । **सह नौ भुनक्तु** ब्रह्मज्ञानानुकूल-शरीरपोषणादिना पालयतु । किञ्च आवयोः **अधीतम् -** अध्ययनजं ज्ञानं **तेजस्वि -** प्रकाशवदस्तु, **मा विद्विषावहै -** विद्यावृत्तादिविषये द्वेषं मा करवावहै । धर्मतः श्रवणं श्रावणञ्च आवयोः अस्तु इत्यर्थः । आह मनुः -

*[1]यश्चाधर्मेण विब्रूते यश्चाधर्मेण पृच्छति ।*
*तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति ।।* (म.स्मृ.२-१११)

---

१. आनन्दवल्ली - ब्रह्मवल्ली इत्यपि नामान्तरं अस्ति । सायाणाचार्यमते भट्टभास्करमते च आनन्दवल्याः अनुवाकद्वयम् । सहनाववतु इत्येकः अनुवाकः ब्रह्मविदाप्नोति परम् ..........इत्युपनिषत् इत्येतावत्पर्यन्तम् एकोनुवाकः । परन्तु इदानींतन सम्प्रदायानुसारेण आनन्दवल्ली नवानुवाकात्मिका दृश्यते । कूरनारायणभाष्यानुसेरेण अत्र अनुवाक संख्या, खण्डसंख्या च दत्ता । ब्रह्मविदाप्नोति इत्यारभ्य अनुवाकसंख्यागणना ।

1. अधर्मेण च यः प्राह इति पाठान्तरम् ।

इति । **शान्तिः** इत्यस्य पूर्ववदर्थः । अनेन ब्रह्मविद्योपदेशे शिष्याचार्ययोः लक्षणमुक्तम् । परस्परं प्रियहितपरत्वं परस्परमतिशयावहत्वम् आचार्यस्य परवादिजये शिष्यस्य पारतन्त्र्यम् आचार्यवैभवप्रकाशकत्वं अन्योन्यं कर्तव्यम् इत्यादेः सूचितत्वात् ।।

**प्र.** **सह नाववतु** इत्यादि । अधीतो मन्त्रः **नौ** गुरुशिष्यौ सह रक्षतु। अन्यतरस्यापि दोषो मा भूत् इत्यर्थः । पुनरपि तदेव प्रार्थयते - **सह नौ भुनक्तु** इति। भुनक्तु - पालयतु । भुज *पालनाभ्यवहारयोः* (धा.पा.१४५५) इति हि धातुः । अवनार्थत्वात् *भुजोऽनवने* (धा.पा.१४१८) इत्यात्मनेपदाभावः । **सह वीर्यं करवावहै** इति । अधीतैः मन्त्रैः तत्तत्फलनिष्पादनलक्षणं वीर्यं सह करवाव इत्यर्थः । **नौ** - आवयोः, अधीतम्, **तेजस्वि अस्तु** - वीर्यवत्तरमस्तु । **मा विद्विषावहै** इति । परस्परानुरक्तौ स्याव इत्यर्थः । अन्यतरद्वेषे अधीतमन्त्रस्य वीर्यहानिर्भवतीति भावः । **शान्तिः शान्तिः शान्तिः** दोषान्तराणामस्त्विति शेषः।।

**आ.भा.** वक्ष्यमाणविद्याप्राप्तौ सम्भवत्प्रत्यूहव्यूहव्युपशमाय प्रथमं शान्तिपाठं कुरुते *सह* इत्यादिना । वक्ष्यमाणविद्याविषयदेवता **नौ** - शिष्याचार्यौ **सह** - समकालमेव **अवतु** - परित्रायतामनर्थात् । अध्ययनाध्यापनयोः समकालीनतया गुरुशिष्ययोः तत्कालीना अनर्थग्रस्तता राहित्यस्यावश्यकत्वात् सहैव अवनं प्रार्थ्यते इति भावः । एवमुत्तरत्रापि । **सह**- युगपदेव, **नौ** शिष्याचार्यौ, **भुनक्तु** - भोजयतु अर्थप्राप्तिलक्षणं भोगं निष्पादयतु । भुजिः अत्र अन्तर्भावितण्यर्थः । अर्थप्राप्तिलक्षणस्य भोगस्यापि अवनपर्यवसायित्वात् आत्मनेपदाभावः, छान्दसत्वाद्वा । सहैव **वीर्यम्** - विद्याफलभूतं सामर्थ्यम् । उत्कृष्टशक्तिमत्वत् इत्येतत् । **करवावहै** सम्पादयावहै । **नौ** आवयोः, **अधीतं तेजस्वि** - बलवत्तरमर्थज्ञानसम्पादनक्षमम् **अस्तु** भवतु । **आवां** शिष्याचार्यौ **मा विद्विषावहै** - प्रमादकृताः अन्यायजनितो वा विद्वेषाः नावयोः भवतु । परस्परमनुरागवन्तौ भवाव इति भावः । ***ओं शान्तिः शान्तिः शान्तिः*** इति आकस्मिकावान्तरायनिवृत्त्यर्थम् उक्तम् ।।

**सु.** - योऽयमन्नमयादीनामात्मा तेभ्योऽन्य आन्तरः ।
यद्वेदनेन सत्ता स्यात् असत्ता यदवेदनात् ।। १ ।।
वाति वातो यतो भीतः सूर्यश्चोदेति यद्भयात् ।
तमानन्दमयं सर्वप्रशासकमुपास्महे ।। २ ।।

विद्यप्राप्त्यन्तरायप्रशमनाय विद्यारम्भे पठनीयः शान्तिमन्त्रः प्रथमं श्राव्यते **सह नौ** इति । अधीयमानो मन्त्रः अधीयमाना विद्या वा अधीयमानविद्यागम्या वा देवता **नौ** - शिष्याचार्यौ **सहावतु** - रक्षतु अनर्थात् । अन्यतरमात्ररक्षणस्य अनिष्टत्वं गम्यते सहशब्देन । **सह नौ भुनक्तु** - अर्थं भोजयतु, अन्तर्भावितो णिच्। अनर्थाद्रक्षणम् अर्थप्रापणं च इत्युभयम् आशंस्यते । अध्ययनेन अध्यापनेन च **वीर्यं** विद्यायाः फलाधायकं शक्तिप्रकर्षलक्षणं सहैव **करवावहे** । **नौ** इदमधीतं **तेजस्व्यस्तु** परैः अनभिभाव्यम् अस्तु । **मा विद्विषावहै** आवयोः अविद्वेषः सततमनुवर्तताम् । अध्ययनाध्यापनयोः प्रमादतोऽपि धर्मात् प्रस्खलने यो विद्वेषप्रसङ्गः स माभूत् । प्रमादतोऽपि तथाविधं प्रस्खलनं माभूत् इत्येतत् ।।

## प्रथमोऽनुवाकः

### [आनन्दमयविद्या]

**ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता - सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् ।। १ ।।**

**सोऽश्नुते सर्वान् कामान्थ्सह । ब्रह्मणा विपश्चितेति ।। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः ।। २ ।।**

**स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।। ३ ।।**

**।। इति प्रथमोऽनुवाकः ।।**

**प्र.दी. - ब्रह्मविदाप्नोति परम्** इति । **ब्रह्मवित्** - निरतिशयबृहत्त्वाश्रय ब्रह्मशब्दवाच्य श्रियःपत्युपासकः। अत्रत्यविच्छब्दोह्युपासनापरः वेदनम् - उपासनम् इत्युक्तम् । **परम् ब्रह्म** रुद्रादिभ्यः परं, यद्वा चेतनाचेतनविलक्षणं परमात्मानं, **आप्नोति** प्राप्नोति, **तदेषाऽभ्युक्ता** इति । **तत्** ब्रह्माभिमुखीकृत्य, **एषा** ऋक् अध्येतृभिः उक्ता । ब्रह्मशब्दर्थं विशिनष्टि **सत्यं ज्ञानमनन्तं ब्रह्म** इति । **सत्यम्** निरुपाधिकसत्तायुक्तं **ज्ञानम्** असंकुचितज्ञानैकाकारं, **अनन्तम्** देशकालवस्तुपरिच्छेदरहितम्, **ब्रह्म** निरतिशयबृहत्त्वादिगुणाश्रयब्रह्मशब्दवाच्यःश्रियःपतिः अचेतनमुक्तनित्यविलक्षणः इत्यर्थः

फलितः । अथ विच्छब्दार्थमाह - **यो वेद निहितं गुहायाम्** इति । यः - उपासकः, परमात्मानं श्रियःपतिं **परमे व्योमन्** - परमपदे विद्यामानम्, **गुहायाम्** - सर्वजनहृदयाकाशे च विद्यमानं, वेद वेत्ति सः वित् - ब्रह्मवेत्ता इत्यर्थः । अथ **प्राप्नोतिशब्दार्थमाह - सोऽश्नुते सर्वान् कामान् सह** इति । सः पूर्वोक्त श्रियःपत्युपासकः **विपश्चिता** - विविधं पश्यत् चित् ज्ञानं यस्य सः **विपश्चित्** । तेन सर्वज्ञेन **ब्रह्मणा** - श्रियःपतिना, **सह सर्वान् कामान्** - काम्यन्त इति कामाः कल्याणगुणाः तान् **अश्नुते** - अनुभवति, पयसा ओदनं भुङ्क्ते इतिवत् । न अप्राधान्यं ब्रह्मणः, किन्तु सहशब्दः भोग्यत्वम् अवगमयति, इतिशब्दः मन्त्रसमाप्तिद्योतनार्थकः । तथा च सत्यज्ञानानन्तविशेषणविशिष्ट-परब्रह्मभूतश्रियः पत्युपासकः तेन सह कल्याणगुणान् अनुभवति इति यावत् । पूर्वेक्तपरब्रह्मणः सर्वजगत्सृष्टिर्भवति इत्याह - **तस्माद्वा एतस्मादिति । तस्माद्वा** *ब्रह्मविदाप्नोति परम्* इति । व्यवहितब्रह्मणो वा **एतस्माद्वा** *सत्यं ज्ञानमनन्तं ब्रह्मेति* । अव्यवहितमन्त्रोक्तब्रह्मशब्दवाच्यात्, **आत्मनः** - परमात्मभूतश्रियःपतेः, **आकाशः सम्भूतः**- उत्पन्नः इत्यर्थः ।

*विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।*
*स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः ।।* (वि.पु.१-१-३१)

इति इयं श्रुतिः श्रीपराशरेण उपवृंहिता । **आकाशात्** - आकाशशरीरकपरमात्मनः, वायुः उत्पन्नः, **सम्भूत** इति सर्वत्राप्यनुकृष्यते । **वायोरग्निस्सम्भूतः, अग्नेरापः सम्भूताः, अद्भ्यः** - उदकेभ्यः, **पृथिवी सम्भूता** संजाता, **पृथिव्याः ओषधयः** सस्यानि, **सम्भूतानि, ओषधीभ्यः** सस्येभ्यः, **अन्नं** सम्भूतम्, **अन्नात् पुरुषः** अन्नपरिणामभूतं शरीरं सम्भूतमित्यर्थः । *तेजो तस्तथाह्याह* (ब्र.सू.२-३-१०) इत्यधिकरणे *तेज ऐक्षत, ताः आप ऐक्षन्त* (छां.उ.६-२-४) इति तेजः प्रभृतिषु ईक्षणादि श्रवणात् आकाशवाय्वादिशब्दाः तत्तच्छरीरकपरमात्मपराः इति भाष्यकृता उक्तम् । तस्मादाकाशवाय्वादिशरीरकपरमात्मभूत - श्रीविष्णोरेव सर्वं जगज्जातमित्यर्थः । स एष पुरुषः अन्नरसमयः, वै इति वा इत्यर्थबोधकः । स वै पूर्वोक्तः **एषः** पुरोवर्ती अयं पुरुषः, देहः अन्नरसमयः, अन्नरसपरिणामभूतः । **तस्येदमेव शिरः, तस्य** देहरूपपुरुषस्य **इदमेव** प्रत्यक्षतोदृश्यमानमेव **शिरः** । **अयं दक्षिणः पक्षः, अयमुत्तरः पक्षः** । **अयम्** परिदृश्यमानः नाभेः ऊर्ध्वं शिरसोऽधस्तात् विद्यमान हस्तद्वयं दक्षिणोत्तपरक्षौ इत्यर्थः । **अयं** मध्यदेहभागः- देहस्य मध्यभागः, **आत्मा** धारकत्वेन प्रधानभूत इत्यर्थः । **इदं पुच्छं प्रतिष्ठा । इदम्** - नाभेरधोभागे

विद्यमानं चरणद्वयम् पुच्छवत् आधारत्वात्, **इदं पुच्छं प्रतिष्ठा** इत्युक्तम् । अत्र पुरुषशब्दवाच्यमनुष्यदेहस्थपाण्यादेः पक्षत्वादिनिरूपणं शिष्यस्य **तदप्येष श्लोको भवति ।** **तत्** - तस्मिन्नेवाऽर्थे ब्रह्मणोक्ते अयं मन्त्ररूपश्लोकः प्रतिपत्तिसौकर्यार्थम् इति मन्तव्यं भवति इत्यर्थः ।।

**तै.भा -** एवं तावत् साङ्गवेदाध्ययनं अधीतवेदस्य समावर्तनं समावर्तनस्य च गार्हस्थ्यम् गृहस्थस्य च यानि कर्तव्यानि तानि सर्वाणि विहितानि । तत् कुर्वतोऽपि तापत्रयदावानलदह्यमानान् आलोक्य मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रं तेषां सर्वसन्तापनिर्वाहपूर्वकं परमपुरुषार्थप्रापिकां सर्ववेदसारभूतां ब्रह्मविद्याम् उपक्षिपति **ब्रह्मवित् -** इत्यादि । ब्रह्म निरतिशयबृहत् बृह्मणञ्च, *बृहति बंहयति तस्मादुच्यते परं ब्रह्म इति श्रुतेः* । बृहत्वं सर्वपरिबृढत्वं । *ब्रह्म परिबृढं सर्वतः* (१-३-३-११) इति यास्कनिर्वचनात् । बृंहणत्वं परिबृढीकरणं, मोक्षप्रदत्वम् इति यावत् । निर्विशेषब्रह्मवादे तु ब्रह्मशब्दो न मुख्यो नापि लाक्षणिकः ब्रह्मणः सविशेषत्वप्रसङ्गात् । ब्रह्मातिरिक्तस्य निरतिशयबृहत्त्वेन तस्य निकृष्टतापाताञ्च । **ब्रह्मवित् -** ब्रह्मज्ञः **परम् -** सर्वोत्तरं प्राप्यम् **आप्नोति** सर्वशेषी *परमात्मा सर्वरक्षकः । अहं तद्दासोऽस्मि । स एव रक्षिष्यति* इति जानन् निरतिशयपुरुषार्थं प्राप्नोति इत्यर्थः । *यथा कश्चित् कुमारः पतृसदनात् भ्रष्टः दिशिदिशि बम्भ्रम्यमाणः केनचिदाप्तेन त्वं तावदस्य पुत्रः त्वद्रक्षणेऽयं दीक्षितः इत्यभिहितः तत्पुत्रत्वमनुमोदमानः तेन सुखं रक्षितो भवति तथा* इति भावः ।

ननु प्रत्यक्षविरुद्धम् अभिहितेयं न तादृशः । कोऽपि तथा भवन्ननुभूयते । कः पुनः साधोः स्तथाद्राक्षीः । किं दृप्तम् उत आर्तं, यदि तथा दृप्तं दृष्टवानस्मि का नो हानिः । शरीरावसाने हि तस्य तथात्वम् । यद्यार्तः भविष्यति तादृशः स महात्मा । अत्र मुक्तिदशायां प्राप्तप्राप्ययोः भेदोपदेशात् स्वाभाविको जीवपरयोः भेद इति सिद्धम् । *ब्रह्म वेद ब्रह्मैव भवति* (मुं.उ.३-२-९) इति श्रुतिस्तु *निरञ्जनः परमं साम्यमुपैति* (मुं.उ.३-१-३) इति घटकश्रुत्यनुरोधेन परमसाम्यापत्तिम् अभिधत्ताम् ।

ननु किमिदं ब्रह्म कथं तद्वेदनम् । कथं तत् प्राप्यम् इत्यपेक्षायामाह - **तदेषा** इति । तत्पूर्वोक्तत्रयमभिमुखीकृत्य एषा वक्ष्यमाणा ऋगुक्ताऽध्येतृभिः । तामेव ऋचं पठति - **सत्यम्** इत्यादि । ब्रह्मेति लक्ष्यनिर्देशः । **सत्यं ज्ञानम्** इति लक्षणत्रयं तत्र सत्यत्वं निरुपाधिकसत्तायोगित्वं चिदचितोः सत्तानुब्रह्मायत्ता । अतो भवति तद्व्यावृत्तिः । *निरुपाधिकज्ञातृत्वं ज्ञानत्वम् कृत्यल्युटो बहुलम्* (पा.सू.३-३-११३) इति ल्युट् ।

नन्द्यादित्वं वाश्रित्य ल्युः । तद्गुणसारत्वात्तु तद्व्यपदेशः (ब्र.सू.२-३-२९) । ब्रह्मायत्तं तु जीवस्य ज्ञातृत्वं *परात्तु तच्छ्रुतेः* (ब्र.सू.२-३-४०) इति सूत्रात् ततो भवति तद्व्यावृत्तिः । अनन्तत्वं - त्रिविधपरिच्छेदरहितत्वं, देशतः कालतो परिच्छिन्नौ चेतनाचेतनौ ; अतः तौ एतेन व्यावृत्तौ । निर्विशेषवादे तु इदं लक्षणं न सम्भवति । न च सत्यादिपदानि अनृतजडपरिच्छिन्नवस्तुव्यावृत्तब्रह्मस्वरूपमात्रपराणि इति शक्यं वक्तुम्, असाधारणधर्मस्यैव लक्षणत्वात् । सत्यं ब्रह्म इत्येवं सामानाधिकरण्यं च न स्यात् ; विशेषणतो भिन्नार्थानां विशेष्यतश्च अभिन्नार्थानां हि शब्दानां सामानाधिकरण्यम् उपलब्धचरम् । यथा नीलोत्पलयोः, न तु घटपटयोः, नापि घटकुम्भयोः । *प्रकृष्टप्रकाशश्चन्द्र* इत्यत्रापि विशेषणभेदः अवश्याश्रयणीयः ; अन्यथा, सामानाधिकरण्यासम्भवात् ।

एवं ब्रह्मस्वरूपं विशदीकृत्य वेदनस्वरूपं विशदयति - **यो वेद** इति । **गुहायाम्** - हृदयगुहायाम्, **निहितम्** - सन्निहितं *आविस्सन्निहितं गुहायाम्* इत्यन्यत्रोक्तेः । कदा अयं अस्मदनुकूलो भविष्यतीति रक्ष्यापेक्षाप्रतीक्षतया हृदयकमलकोशे सदा सन्निहितं ब्रह्म **यो वेद** - अस्मद्विवादाय संनिहितोऽयमिति विदित्वा अनुमोदते । **स परमे** - सर्वोत्तरे, **व्योमन्** - व्योम्नि, *सुपां सुलुक्* (पा.सू.७-१-३९) इत्यादिना सप्तम्या लुक्, परमपद इत्यर्थः । इममर्थं *परेण नाकम्* (महा.ना.उ.८६) इत्यादिना स्पष्टीकरिष्यति । **विपश्चिता** - विविधं पश्यच्चिता, पृषोदरादित्वात् वर्णलोपः । चेतनापेक्षां चिरकालमन्विष्यता इत्यर्थः । **ब्रह्मणा** हेतुना *एष ह्येवानन्दयाति* इति हि वक्ष्यति तृतीया । सह *श्रोत्रियस्य चाकामहतस्य* इति वक्ष्यमाणरीत्या ब्रह्मानन्दतुल्यान् काम्यमानान् इमान् लोकानित्यादिना दर्शयिष्यमाणान् भोगान् **अश्नुते** - प्राप्नोति । परमे व्योमन् इत्यादिना परशब्दार्थो विवृतः उक्तमर्थत्रयं पुनर्विस्तरेण प्रतिपादयति अनुवाकशेषेण ।

ननु कथं ब्रह्म स्वज्ञानमात्रेण जीवान् मोक्षयेत् इत्याक्षेपे सर्वस्वामित्वात् सर्वरक्षकत्वाच्च इत्युत्तरं विवक्षुः जगत्कारणत्वमाह **तस्माद्वा** इत्यादिना **अन्नात् पुरुषः** इत्यन्तेन ।

यथा लोके कश्चित् कर्षकः किञ्चित् क्षेत्रं समीकृत्य कृष्टया कलमादीन् उप्त्वा परिपोष्य तेषु विषमेषु पुनः उपसंहृत्य भूयस्तादृशव्यापारानारभते; तमवलोक्य, समीपस्थः इत्थं अवधारयति अयं अस्य क्षेत्रस्य अधिपतिः अतोऽस्य पालने पुनः पुनः प्रयतत इति । एवं ब्रह्मणो जगत्कारणत्वे अभिहिते अवगम्यते अयं अस्य स्वामी पालयितुम् एतदाकाङ्क्षति इति । **तस्मात्** - ब्रह्मशब्देन प्रथमं शेषितयोक्तात् **एतस्मात् ब्रह्मणा विपश्चिता** इति

रक्षकतयोक्तात् **आत्मनः** - चिदचिच्छरीरकात् ब्रह्मण इत्यर्थः । *अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपां* (महा.ना.उ.७०) इत्युत्तरत्राभिहितत्वात् । अन्यथा आत्मशब्दप्रयोगवैयर्थ्यात् । वै इति अन्तर्यामिंब्राह्मणप्रसिद्धिं द्योतयति । तत्र हि *यस्य अव्यक्तं शरीरम्* (सुबा.उ.७) इत्युच्यते । केवलचेतनात् अचेतनकार्यसम्भवश्च विरुद्ध्यते उपादानोपादेययोः सालक्षण्यदर्शनात् । यथा मृद्धटयोः आकाशादिक्रमेण स्थूलावस्थोत्पत्ति-कथनेन आकाशापेक्षया सूक्ष्मावस्थाचिद्विशिष्टशब्दमात्रशब्दार्थ इत्यवधार्यते ।

**आत्मनः** इति पञ्चम्याः तस्य उपादानत्वं प्रत्याय्यते *जनिकर्तुः प्रकृतिः* (पा.सू.१-४-३०) इत्यनुशासनात् । यद्यपि वृत्तिन्यासादौ प्रकृतिपदं हेतुमात्रपरं व्याख्यातं तथापि उपादानपरत्वं न प्रत्याख्यातम् आकाशादिसाहचर्येण अत्र पञ्चम्युपादानरूपं हेतुं आचष्टे ।

उपादानत्वं च तस्य प्रकृतिविशिष्ट इत्युक्तम् - शक्तिविशिष्टस्य मायाविशिष्टस्य वा उपादानत्वे प्रकृतहानाप्रकृतकल्पने स्याताम् ।

ननु विशिष्टं ब्रह्मणोतिरिक्तम् अनतिरिक्तं वा ? आद्ये न ब्रह्मणो उपादानत्वसिद्धिः । अन्त्ये तस्य विकारिता स्यात् । मैवम् ब्रह्मणोपि वैशिष्ट्यान्यथाभावविकारस्य इष्टत्वात् । सूक्ष्मचिदचिद्विशिष्टं हि ब्रह्म स्थूलचिदचिद्विशिष्टं सम्पद्यते । निर्विकारश्रुत्या तु स्वरूपस्वभावान्यथाभावरूपविकाराः प्रकृत्यादेरिव प्रतिषिध्यते । **आत्मनः आकाशः सम्भूतः** इत्युक्त्या वियदिति प्रपञ्चो ब्रह्मणि कल्पित इति पक्षः प्रतिक्षिप्तः । न हि शुक्तौ कल्पितं रजतं शुक्तेः सम्भूतम् इत्यनुन्मत्तो ब्रवीति । *आकाशस्सम्भूतः* इत्येतत् महदादीनां प्रदर्शनार्थः । श्रुत्यन्तरे तेषामपि उत्पत्तिदर्शनात् । तथा च आत्मनो महान् सम्भूतः, महतोऽहंकारः, अहङ्कारात् सात्त्विकात् राजसाहंकारसहकृतात् एकादशेन्द्रियाणि सम्भूतानि । तत्सहकृतादेव तामसाहंकारात् आकाशः सम्भूतः इति क्रमः अनुसन्धेयः ।

प्रकृतिविशिष्टं ब्रह्म मध्ये कचिन्महदवस्थं सम्भूतम् । महदवस्थं ब्रह्म मध्येऽहंकारावस्थं सम्भूतम् । अहंकारावस्थं ब्रह्म मध्ये आकाशावस्थं सम्भूतम् । उत्तरत्रापि सम्भूतशब्दो यथायोगमनुषञ्जनीयः ।

**आकाशाद्वायुः** - आकाशावस्थं ब्रह्म मध्ये वाय्ववस्थं सम्भूतम् । **वायोरग्निः** - अग्निशब्दोऽत्र तेजोमात्रपरः, *तत्तेजोऽसृजत* (छां.उ.६-२-३) इति समानप्रकरणे श्रवणात् । वाय्ववस्थं ब्रह्म मध्ये तेजोऽवस्थं सम्भूतम् । **अग्नेरापः** - तेजोऽवस्थं ब्रह्म मध्ये अबवस्थं सम्भूतम् । **अद्भ्यः पृथिवी** - अबवस्थं ब्रह्म मध्ये पृथिव्यवस्थं सम्भूतम् इत्येवं योजना कार्या । तेन -

*एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।*
*खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।।* (मुं.उ.१-२-३)

इति श्रुत्यन्तरानुग्रहः अनन्ताण्डजनिः अण्डानां दशोत्तरसप्तावरणवत्त्वं च निर्व्यूढम् । अत्र पृथिवीसृष्ट्यनन्तरं भूतानां पञ्चीकरणं; पञ्चीकृतैः भूतैः अण्डसृष्टिः तदन्तरे चतुर्मुखसृष्टिश्च श्रुतिस्मृतिसिद्धा अनुसन्धेया । एवं समसृष्टिरुक्ता ।

अथ व्यष्टिसृष्टिम् अण्डसृष्ट्यन्तरभाविनीं दर्शयति **पृथिव्या ओषधयः, ओषधीभ्यो अन्नम्, अन्नात् पुरुषः** इति । *ओषध्यः फलपाकान्ताः* (अ.को.२-४-६) इदम् उपलक्षणम् वनस्पतीनाम् । चतुर्मुखस्य मुखपादोरुपजातानां ब्रह्म-क्षत्र-वैश्य-शूद्राणाम् देवानां तिरश्चां च पञ्चीकृतपृथिव्या जीवानुप्रवेशो वक्ष्यते । पञ्चीकृतपृथिव्यवस्थं ब्रह्म ओषध्याद्यवस्थं सम्भूतम् । अन्नशब्देन अत्र तत्कार्यं रेतः उच्यते । *अन्नरसमयः* इत्युत्तरत्र विवरणात् । ओषध्याद्यवस्थं ब्रह्म रेतोवस्थं सम्भूतम् इत्यर्थः । रेतोवस्थं ब्रह्म पुरुषावस्थं सम्भूतम् । तथा च अचेतनवाचकास्सर्वे शब्दाः अचिद्विशिष्टजीवविशिष्टपरमात्मवाचकाः इति सिद्धम् । सर्वसिद्धानां परमात्मवाचकत्वम् । कोसौ पुरुष इत्यपेक्षायां प्रसिद्ध शिरःपाण्यादिविशिष्टः पुरुष इत्याह - **स वा** इत्यादि । **वै** प्रत्यक्षप्रसिद्धौ । **अन्नरसमयः** - अन्नरसः भूतरेतोविकारः, विकारार्थे मयट्, पुरुषलक्षणमाह **तस्य** इति । तस्य अन्नमयपुरुषस्य **इदम्** - अग्रेः दृश्यमानमेव शिरः, **अयं** प्रत्यक्षसिद्धो **दक्षिणः पक्षः** - दक्षिणः पार्श्वः । **अयम् उत्तरः पक्षः** - उत्तरपार्श्वः । **अयम्** - ऊरुद्वयमारभ्य कण्ठपर्यन्तो भागः **आत्मा** - मध्यप्रदेशः । **इदम्** - अधोभागरूपं **पुच्छं** - पश्चात्प्रदेशः । प्रतितिष्ठति इत्यस्मिन् इति प्रतिष्ठा - सर्वाधारभूतं शिरः पाण्यादिविशिष्टपिण्डविशेषः पुरुषः इति लक्षणमुक्तम् भवति ।

अथ इदम् अन्नमयम् आकाशादिपञ्चकवैलक्षण्येन प्रशंसति **तदप्योष** इत्यादिना । तस्मिन् अन्नमये विषये, अविभक्तिकनिर्देशः ।।

**प्र.** - परमतत्त्वहितपुरुषार्थप्रतिपादिका आनन्दवल्ली प्रस्तूयते **ब्रह्मविदाप्नोति परम्** इति । निरतिशयबृहत्त्वाश्रयवस्तूपासकः सर्वेभ्य [1]उत्कृष्टं[1] प्राप्नोति इत्यर्थः । *आवृत्तिरसकृदुपदेशात्* (ब्र.सू.४-१-१) इत्यधिकरणोक्तन्यायेन वेदनोपासनादिशब्दानाम् एकार्थत्वात् *ब्रह्मवित्* इत्यत्र [2]विच्छब्दोऽपि[2] उपासनपरः । तत्क्रतुन्यायेन प्राप्यस्यैव उपास्यत्वात् । **ब्रह्मविदाप्नोति परम्** इति परस्य ब्रह्मणः प्राप्यत्वकथनात् तस्यैव उपास्यत्वम् इति द्रष्टव्यम् । अत्र ब्रह्म, तद्वेदनं, प्राप्तिः, प्राप्यं चेति चतुष्टयमुक्तम् ।

---

1. उत्कृष्टं ब्रह्म - अ.ग.घ । 2. विच्छब्दः - अ.ग.घ ।

किं तत् ब्रह्म ? कीदृशं तद्वेदनम् ? कीदृशी प्राप्तिः ? कीदृशं च प्राप्यम् ? इत्याकाङ्क्षायां मन्त्रमुखेन विवरीतुं मन्त्रम् अवतारयति - **तदेषाऽभ्युक्ता** इति । **तत्** - ब्रह्म अभिमुखीकृत्य- (प्रतिपाद्यतया परिगृह्य) **एषा** - ऋक् अध्येतृभिः उक्ता । ब्राह्मणोक्तस्यार्थस्य वैशद्यम् अनेन मन्त्रेण क्रियत इत्यर्थः । एवमेव हि मान्त्रवर्णिकसूत्रे भाषितम् । **सत्यम्** इति । अत्र जन्मादिसूत्रे, *यतो वा इमानि* (तै.भृ.उ.१-२) इत्यादिकारणवाक्येन [1]प्रतिपन्न[1]जगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपम् अभिधीयते **सत्यं ज्ञानमनन्तं ब्रह्म** इति । तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माऽऽह । तेन विकारास्पदं अचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः । नामान्तरभजनार्हावस्थान्तरयोगेन तयोः निरुपाधिकसत्तायोगरहितत्वात् । **ज्ञानपदं** नित्यासंकुचितज्ञानैकाकारमाह । तेन कदाचित् संकुचितज्ञानत्वेन मुक्ताः व्यावृत्ताः । **अनन्त**पदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह । सगुणत्वात् स्वरूपस्य स्वरूपेण गुणैश्चाऽऽनन्त्यम् । तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणाः नित्याः व्यावृत्ताः; । विशेषणानां व्यावर्तकत्वात् इति भाषितम् ।

ननु अत्र ज्ञानपदस्य विषयावगाहिज्ञानत्वं प्रवृत्तिनिमित्तं चेत्, स्वरूपस्य अतादृक्त्वात् ज्ञानम् इत्यस्य [2]ज्ञानगुणकत्व[2]मित्यर्थः पर्यवस्येत् ; न तु स्वरूपस्य ज्ञानत्वम् । स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तं चेत् [3]स्वरूपस्य[3] [4]ज्ञानत्वमात्रं[4] सिद्ध्येत् ; न तु ज्ञानगुणकत्वम् । न चेष्टापत्तिः । *तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्* (ब्र.सू.२-३-२९) इति सूत्रे यथा *सत्यं ज्ञानम्* इति ब्रह्मणो ज्ञानगुणसारत्वात् ज्ञानमिति व्यपदेशः इति भाष्यं विरुद्ध्येत इति चेत्, उच्यते - [5]स्वप्रकाशत्वमेव[5] हि प्रवृत्तिनिमित्तम् । तत्र ज्ञानत्वाश्रयत्वम् असंकोचात् स्वरूपतो गुणतश्च सिद्ध्यति; ब्रह्मशब्दात् प्रतीयमानं बृहत्त्वं यथा स्वरूपतो गुणतश्च सिद्ध्यति तद्वदिति व्यासार्यैः उक्तम् । वस्तुतस्तु सत्यं ज्ञानम् इत्यस्य अन्तोदात्तत्वात् अर्श आद्यजन्तत्वेन ज्ञानगुणकत्वमेवार्थः । *प्रज्ञानघन एवाऽऽनन्दमयः* (रामो.ता.२-३), *नित्यं विज्ञानम्* (रामो.ता.२-३) इति श्रुत्यन्तरात् ब्रह्मणो ज्ञानस्वरूपत्वमपि अस्तीति द्रष्टव्यम् ।

### [श्रुतिस्थानन्तशब्दार्थः]

इहेदम्, नान्यत्र इति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः । इदमिदानीम्, नान्यदा इति परिच्छेदायोग्यत्वं कालापरिच्छेदः । इदं इदं न इति परिच्छेदानर्हत्वलक्षणं सर्ववस्तु

---

1. प्रतिपन्नस्य - ग, घ । 2. ज्ञानगुण अ,क,ख । 3. स्वस्वरूपस्य - घ । 4. ज्ञानमात्रं - अ । 5. स्वप्रकाशत्वमेव - ग,घ ।

[1]सामानाधिकरण्यार्हत्वरूपं[1] वस्त्वपरिच्छेदः । यद्वा वस्तुस्वभावतः परिच्छेदो वस्तुपरिच्छेदः । [2]यथा[2] तुल्यकालत्वेऽपि तुल्यपरिमाणत्वेऽपि दशवर्णसुवर्णापेक्षया कलधौतादेः अपकर्षः; तद्राहित्यं वस्त्वपरिच्छेदः । *समाभ्यधिकराहित्यनिदानभूतो गुणैः निरतिशयप्रकर्षो वस्त्वपरिच्छेदः* इत्युक्तं भवति इति व्यासार्यैः व्याख्यातम् । *नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते* (वि.पु.२-५-२४) इति स्मरणात् गुणानन्त्यम् अनन्तशब्दार्थः । अत्र रूढिवशात् देवताविशेषनिर्णयः । न च अनन्तपदस्य नारायणवाचिनः पुल्लिङ्गत्वं स्यादिति वाच्यम् ; इष्टापत्तेः; तस्य द्वितीयान्तत्वेन पुल्लिङ्गत्वस्य इष्टत्वात् । द्वितीयान्तत्वाभावे च, *यो वेद निहितं गुहायाम्* इत्यत्र तच्छब्दाद्ध्याहारप्रसङ्गात् । अनध्याहारेण उपपत्तौ अध्याहारस्याऽन्याय्यत्वात् । यदि च अनन्तपदयौगिकार्थस्य त्रिविधपरिच्छेदराहित्यस्य नारायणात् अन्यत्र अप्रसक्त्या श्रीपत्यादिशब्देष्विव न रूढिः कल्पनीय इत्युच्येत तदाऽपि न नः क्षतिः ।

अत्र *सत्यं ज्ञानमनन्तं ब्रह्म* इत्यनेन ब्रह्मशब्दार्थो विवृतः । हृदयगुहानिहितत्व [3]प्रकारकज्ञान[3] [4]प्रतिपादकेन[4] *यो वेद निहितं गुहायाम्* इत्यनेन विच्छब्दार्थ उक्तः । परमे व्योमन् सोऽश्नुते इत्यंशे च आप्नोति शब्दार्थ उक्तः । **परमे व्योमन्** अप्राकृताकाशशब्दिते परमपदे इत्यर्थः । **सर्वान् कामान् सह ब्रह्मणा विपश्चिता** इत्यनेन प्राप्यम् उक्तम् । काम्यन्त इति कामाः कल्याणगुणाः । मुक्तस्य सर्वविषयविरक्तस्य तद्व्यतिरिक्तकाम्यान्तरासम्भवात् । *अथ य इहात्मानमनुविद्य व्रजन्ति, एतांश्च सत्यान् कामान्* (छां.उ.८.१-६) इत्यादौ कामशब्दस्य कल्याणगुणेष्वेव प्रयोगात् । विविधं पश्यति चित् यस्येति बहुव्रीहिः । निरुपाधिकानन्याधीनासंकुचित - सर्वविषयक [5]ज्ञानवत्त्वं हि[5] विपश्चित्त्वम् । अयं च गुणो नित्यमुक्तादिव्यावर्तकः ।

ब्रह्मापेक्षयाऽपि तद्गुणानां फलदशायां प्राधान्यं प्रतिपादयितुं **ब्रह्मणा सह** इति निर्देशः । *सहयुक्तेऽप्रधाने* (पा.सू.२-३-१९) इति हि पाणिनिस्मृतिः । न च भोग्यतायां गुणापेक्षया ब्रह्मणोऽप्राधान्यं दोषायेति शंक्यम्, *श्रियं त्वत्तोऽप्युच्चैर्वयमिह भणामः शृणुतराम्* (श्री.गुण.९) इतिवत् परमात्मापेक्षयापि तत्कल्याणगुणानां भोग्यतातिशयप्रतिपादनस्य परमात्मातिशयपर्यवसायित्वेन एतादृशाप्राधान्यस्य गुणत्वेन दोषत्वाभावात् । अत एव हि, *पुत्रेण सह ओदनं भुङ्क्ते* इतिवत् भोक्तृसाहित्यपरत्वे ब्रह्मणो अप्राधान्यप्रसङ्गात्

---

1. समानाधिकरण्यार्हत्वम् ग,घ । 2. तथा - ग,घ । 3. ज्ञानमात्रं - अ । 4. प्रकारज्ञान - ग । 5. प्रतिपादकत्वेन - ग.घ ।

तत्परित्यज्य, *पयसा सह ओदनं भुङ्क्ते* इतिवत् भोग्यसाहित्यपरत्वमेव, नात्र च पक्षे ब्रह्मणोऽप्राधान्यं दोषायेति भोग्यसाहित्यपक्षः एव भगवता भाष्यकृता समाश्रितः ।

ननु *तेषामृक् यत्रार्थवशेन पादव्यवस्था* (पू.मी.२-१-३२) इति, जैमिनिना अर्थवशाधीनपादव्यवस्थावत्त्वस्य ऋग्लक्षणतयोक्तात् *सह* इत्यस्य पादान्तरस्थस्य *ब्रह्मणा* इति पादान्तरस्थेन अन्वयो न सम्भवति । ततश्च ब्रह्मणा इति न सहयोगे तृतीया । अपि तु इत्थंभूतलक्षणे तृतीया । सह इत्यस्य च युगपदित्यर्थः । सर्वान् कामान् युगपदनुभवति **ब्रह्मणा** ब्रह्मभूत इति यावत् । अत एव स्कान्दे

*सोऽश्नुते सकलान् कामान् अक्रमेण [1]सुरर्षभाः[1] ।*
*विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः ।।*

इत्युपबृंहितमिति चेत् न । तेषामृक् यत्रार्थवशेन इत्यस्य उपलक्षणमात्रत्वात् । उपलक्षणत्वम् अभ्युपगम्यैव तद्व्याख्यातृभिरपि, अर्थवशेन वा वृत्तवशेन वा पादव्यवस्था इति व्याख्याततत्वात् । अभियुक्तानां मन्त्रप्रसिद्धिम् [2]विषयत्व[2] मन्त्रत्वमितिवत् अभियुक्तानां ऋक्पदप्रसिद्धिविषयत्वमेव ऋक्त्वम् । ततश्च पादान्तरस्थेनापि पादान्तरस्थपदान्वयो युक्तः । *ब्रह्मणा* इत्यस्य इत्थंभूतलक्षणत्वाश्रयणे ब्रह्मभूतः इत्यर्थोऽपि न सम्भवति । *श्वेतच्छत्रेण राजा* इत्यादौ तथा अभेदादर्शनात् । त्वदुक्तस्कान्दवचनस्य पूर्वैः सम्प्रतिपन्नैः अनुदाहृतत्वाच्च भाष्यकृदुक्त एवार्थः । *इति* शब्दो मन्त्रसमाप्तिद्योतनार्थः ।

*सत्यं ज्ञानमनन्तम्* इत्युक्तं वस्त्वपरिच्छेदलक्षणम् आनन्त्यं सर्वोपादानत्व-सर्वान्तरत्वमुखेन प्रपञ्चयति-**तस्माद्वा** इत्यादिना । *तस्मात्* इत्यनेन *ब्रह्मविदाप्नोतिपरम्* इति व्यवहित ब्राह्मणोक्तं परामृश्यते । **एतस्मादिति** सत्यं ज्ञानम् इत्यव्यवहितमन्त्रोक्तं परामृश्यते । ततश्च मन्त्रब्राह्मणोक्तात् एतस्मादात्मनः आकाशः उत्पन्नः इत्यर्थः । अत्र *तत्तेज ऐक्षत* (छां.उ.६-२-४), *ता आप ऐक्षन्त* (छां.उ.६-२-४) इति तेजः प्रभृतिषु ईक्षणादिश्रवणात् आकाशवायुतेज आदिशब्दाः तत्तच्छरीरकपरमात्पराः इति, *तेजोऽतस्तथा ह्याह* (ब्र.सू.२-३-१०) इत्यधिकरणे स्थितम् । पुरुषः शरीरमित्यर्थः । शिष्टं स्पष्टम् । **स वा** इति । **स वै एष पुरुषः** - अयं देहः अन्नरसस्य परिणामः । अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुः तत् पुरीषं भवति; *यो मध्यमः तन्मांसम्* (छां. उ. ६-५-१) इत्याद्युक्तरीत्या जाठराग्निपच्यमानान्तरसांशनिर्वर्त्य-मांसादिमयत्वाच्छरीरस्य इति भावः । **तस्य** इति । **तस्य** - देहरूपस्य पुरुषस्य, **इदम्** प्रत्यक्षतो दृश्यमानमेव शिरः । [3]पाणिद्वयं[3] पक्षौ ।

---

1. सुरर्षभिः - अ.क,ख । 2. विषयत्वं - अ.क,ख । 3. बाहुद्वयं - अ ।

अधस्तात् ग्रीवायाः, नाभेः ऊर्ध्वं परिदृश्यमानः **अयं** मध्यमो देहभागः अङ्गानाम् **आत्मा** । *मध्यं ह्येषामङ्गानामात्मा* (ऐ.उ.३-५-४) इति श्रुतेः धारकत्वेन प्रधानभूतः इत्यर्थः । **इदम्** - नाभेः अधस्तात् परिदृश्यमानं चरणद्वयं पुच्छवत् आधारत्वात् पुच्छम् इत्यर्थः । अत्र पुरुषशब्दितमनुष्यपाण्यादेः [1]पक्षत्वादिरूपणं[1] प्रतिपत्तिसौकर्यार्थम् इति द्रष्टव्यम् । **तदपि** इति । **तत्** - तस्मिन्नेवार्थे ब्राह्मणोक्ते अयं मन्त्ररूपः **श्लोकोऽपि**[१] **भवति** इत्यर्थः ।।

**कू.भा.** परमपुरुष परमात्म परब्रह्मादिशब्दवाच्यपरतत्त्वज्ञानमेव मोक्षोपायः । *नान्यःपन्था विद्यतेऽयनाय* (श्वे.उ.३-८) इत्यत्र सर्वोपनिषदेककण्ठ्यमेवेत्याह **ब्रह्मविदाप्नोति परम्** इति । स्वरूपस्वभावशक्तिभिः निरतिशयबृहत् बृह्मणं च ब्रह्म ; *[2]बृहत्वात्[2] बृह्मणत्वाच्च तद्ब्रह्मेत्यभिधीयते* (वि.पु.१-१२-५५) इति विष्णुपुराणे । सर्वतस्स्वयमनन्तम् उपासकानां च आनन्त्यावहं ब्रह्म इत्यर्थः । **ब्रह्मवित्** - ब्रह्मज्ञः । *आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते* (वि.पु.६-५-६१) इति द्विविधे ब्रह्मज्ञाने विवेकजं अत्रोक्तं, प्रापकत्ववचनात् । सांहितीषु उक्तं बहुविधं तपस्तप्त्वा *आनन्दो ब्रह्मेति व्यजानात्* इत्यस्यामेव विद्यायां विवेकजं स्वयमेव वदति । परविद्याजनकं तपश्च बहुविधमुक्तं सांहितीषु *तद्धितपस्तद्धिंतपः* (तै.उ.शि.९) इत्यादिना । वक्ष्यति च *तद्धि तपः तद्धि तपः* इत्यादिकम् । अस्मिन् अनुवाके च *श्रद्धर्तं सत्यं योगः* (श्रद्धा, ऋतम्, सत्यम्) इति वदति । आगमोत्थन्तु *यतो वा इमानि भूतानि जायन्ते* (तै.उ.भृ.१) इत्यादि वाक्यजन्यज्ञानम् इति वक्ष्यति । **आप्नोति परं** - सर्वतो व्याप्नोति, निश्शेषगुणविभूतिकं ब्रह्म अनुभवतीत्यर्थः । **परम्** - बद्धमुक्तनित्येभ्यः परं सर्वकारणं षड्विंशमेकीभूतमपि तस्मात् उपरिष्टात् परमव्योम्नि वर्तमानं च । जीवस्य परिशुद्धस्वरूपमेवात्र परमिति प्राप्यतया उक्तं इति न शंकनीयम् ; वक्ष्यमाणब्राह्मणः प्रतिपाद्याक्षरपरमव्योमाधिपत्य निरुपाधिक विपश्चित्त्वाकाशादिनिखिलजगदेककारणत्वादि-वैभवानुपपत्तेः । मुक्तस्यापि जगद्व्यापारवर्जत्वं सर्वसम्मतम् । परब्रह्मवित् परब्रह्म प्राप्नोति इत्यर्थः । परप्राप्तिकामो ब्रह्म विद्यात् इत्यर्थः । नान्तरीयकतया तत्सायुज्यं च उक्तमेव ; *यथा सम्पद्याविर्भावः* (ब्र.सू.४-४-१) इति । *ब्रह्मविदाप्नोति परम् इति* चतुरोंऽशान् चतुर्भिर्वाक्यैः व्याकुर्वाणो मन्त्र आम्नायत इत्याह **तदिति - तदेषाभ्युक्ता**

---

१. श्लोक्यते स्तूयते अनेन इति श्लोकः प्ररोचनार्थं ब्राह्मणमुच्यते इति भट्टभास्करभाष्यम् ।

1. पक्षादित्वरूपणम् - ग,घ । 2. बृहत्त्वाद् बृह्मणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम् इति पाठान्तरम् ।

**तत्** ब्रह्म अभिमुखीकृत्य प्रतिपाद्यतया ऋगेषा अध्येतृभिः उक्ता । ब्राह्मणोक्तस्य अर्थस्य वैशद्यम् अनेन क्रियत इत्यर्थः । **सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता** इत्ययं साक्षिमन्त्रः । ब्रह्मसिद्धिः द्वेधा । उपलब्धिः लब्धिश्च । उपलब्धिश्च लक्षणतः प्रमाणतश्च द्विविधा । लक्षणमपि द्विविधम् सर्वज्ञत्व-सर्वशक्तित्व-सत्यकामत्व सत्यसंकल्पाद्यनन्तमंगळगुण-उपस्थापकेन इतरसकलसमयाभ्युपगततत्त्वव्यावर्तक-निखिलहेयप्रत्यनीकत्वोपस्थापकेन स्वाभ्युपगतबद्धमुक्तनित्यव्यावर्तनात् शोधनं चेति । तत्र प्रथमलक्षणम् उत्तरानुवाके संक्षिप्य उच्यते *यतो वा इमानि* (तै.उ.भृ.१) इत्यादि । तस्य जगज्जन्मादिकारणस्य सर्वशक्तेः सकलेतरव्यावृत्तं स्वरूपमभिधीयते **सत्यं ज्ञानम् अनन्तं ब्रह्म** इति । तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्म आह । तेन विकारास्पदम् अचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः ; नामान्तरभजनार्हावस्थान्तरयोगेन तयोः निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं नित्यासंकुचितज्ञानैकाकारम् आह ; तेन कदाचित् संकुचितज्ञानत्वेन मुक्ता व्यावृत्ताः । *तमक्रतुं पश्यति वीतशोकः, धातुः प्रसादात्* (क.उ.२-२०) *बहवो ज्ञानतपसा पूताः मद्भावमागताः* (भ.गी.४-१०) *आविर्भूतस्वरूपस्तु* (ब्र.सू.१-३-१८) *सम्पद्याविर्भावः* (ब्र.सू. ४-४-१) इत्यादिषु मुक्तानां ज्ञानविकासस्य कालावच्छेदं दर्शयति ; अत्र तु दहरवाक्यवत् स्वतोऽनवच्छिन्नज्ञानत्वम् उक्तम् । ननु ज्ञानमात्रं ब्रह्मेति किमिति नाभ्युपेयते ? प्रथमं तावत् ब्रह्मसूत्रलंघनभयात् ; *तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्* (ब्र.सू.२-३-२९) इति हि सूत्रम् ; सत्यपदेनैव जडव्यावृत्तेः पुनरुक्तिप्रसंगाच्च । ज्ञानपदस्य स्ववाक्ये एव विपश्चित्पदेन अनुभाषणं च निरपेक्षं प्रमाणम् । सर्वज्ञत्ववचनेन प्रत्यक्त्वमपि उक्तमेव । *विज्ञानघनः* (बृ.उ.२-४-१२) इत्यादिना स्वप्रकाशत्वम् अभ्युपगम्यत एव । न तत्र अस्माकं प्रद्वेषः । **अनन्त**पदं देशकालवस्तुपरिच्छेदरहितम् आह । *परास्य शक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञानबलक्रिया च* (श्वे.उ.६.८) इति स्वाभाविकज्ञानबलाद्यनन्तकल्याणगुणकत्वात् स्वरूपेण गुणैश्च आनन्त्यम् । तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपरूपगुणाः *सदा पश्यन्ति सूरयः* (सुबा.उ.६) इति सदा दर्शनवन्तो व्यावृत्ताः ; विशेषणानां व्यावर्तकत्वात् । विष्णोः पदं सदा पश्यन्तीति नित्यनिर्दोषत्वं तेषां सातिशयत्वं च प्रतीयते । अतोऽनेन वाक्येन जगन्निमित्तोपादानं वस्तु सकलेतरवस्तुविसजातीयम् इति लक्षितम् । तथा हि - अन्तशब्दः समाप्तिवचनः ; *देवदत्तः अयम् इहैव* इति देशावच्छेदः, *इदानीमेवम् अयम्* इति कालतस्समाप्तिः, एवमेवायम् इति स्वरूपतः परिच्छेदः उक्तः । ब्रह्म तु सर्वत्रैव भवति सर्वदैव भवति ; सर्वं च भवति । नैवं प्रकृतिपुरुषकालाव्यक्तनित्याख्यानि अस्य रूपाणि इति तानि व्यावृत्तानि तथापि

स्वरूपलक्षणे अपि अन्तर्भूतम् एतत्सर्वम् । कुतः ? सर्वत्रास्ति सदास्ति सर्वं च भवति इति देशकालवस्तुभिरेव आनन्त्यसिद्धेः । तत्र च यथा न देशकालयोरभावेन देशकालाभ्याम् अपरिच्छेदः उक्तः, किन्तु ताभ्यां विशिष्टतया, एवं न वस्त्वन्तराभावेन वस्त्वपरिच्छेदः इति स्थितम् । *वासुदेवस्सर्वम्* (भ.गी.७-१९) *न तदस्ति विना यत्स्यात्* (भ.गी.१०-३९) *सच्च त्यच्चाभवत्* (तै.उ.आन.६) *सर्वं खल्विदं ब्रह्म* (छां.उ.३-१४-१) इति वस्त्वपरिच्छेदः उच्यते ।

ननु अनन्तपदेनैव सर्वं व्यावृत्तं किं सत्यज्ञानपदाभ्याम् ? उच्यते । सत्यज्ञानपदे तु आनन्त्योपपादके ; सत्येन हि कालानन्त्यसिद्धिः । अनन्तदेशगतस्य वस्तुनोऽवच्छेदोपि ज्ञानस्वरूपस्यैव सम्भवति ; न जडस्य, अतः सत्यज्ञानपदाभ्याम् व्यावृत्ततया नित्यसूरयः एव अनन्तपदेन व्यावृत्ताः इत्युक्तम् । यथा *गुणवत् क्रियावत् समवायिकारणम् इति* परीक्षकैः उक्तं द्रव्यलक्षणं द्रव्यरूपाणामेव गुणकर्मसामान्यादीनां व्यावर्तकम् उच्यते, एवं ब्रह्मगुणानामेव सजातीयविजातीयानां व्यावृत्तिलक्षणम् एतत् । *किम् एकं दैवतम्* (स.ना.पू.पी.२) इत्यस्य अनन्तम् इत्युक्तम् । तर्हि अनन्तशब्दस्य पुल्लिङ्गता स्यात् ; बाढम् । तर्हि अनन्तः ब्रह्म इति निर्देशविपर्ययः स्यात् । नैवं देवानां प्रिय! यो वेद इत्यस्य कर्मतया अनन्तम् इति निर्देशात् । अतः सर्वथा व्यावर्तकं स्वरूपलक्षणम् इत्युक्तम् । एते सत्यज्ञानानन्दादिगुणाः सर्वपरविद्यासु उपसंहार्याः, ब्रह्मस्वरूपनिरूपणान्तर्गतत्वात् इति *आनन्दादयः प्रधानस्य* (ब्र.सू.३-३-११) इत्यधिकरणे उक्तम् । अतः सत्यादीनि पदानि कल्याणगुणप्रतिपादनपराण्येव निखिलहेयव्यावर्तकानि। *सत्यात्मप्राणारामम्* (तै.उ.शि.६) इत्यादावपि लक्षणम् उक्तम् । कथञ्चित् वचनसौष्ठवात् एतल्लक्षणवाक्यं प्रसिद्धम् । इत्थं *ब्रह्मवित्* इत्यत्र वेदनकर्मवाचि ब्रह्मपदं व्याख्यातम् । वेदनांशस्य विवरणम् *यो वेद निहितं गुहायां परमे व्योमन्* इति । उत्तरत्र *स यश्चायं पुरुषे यश्चासावादित्ये स एकः* (तै.उ.आन.८) इति हृदयगुहायां निहितस्य *हिरण्यवर्णं पुण्डरीकाक्षं महारजताम्बरं रूपमिति निर्दिश्यते । अन्तर्हृदय आकाशः, तस्मिन्नयं पुरुषो मनोमयः, अमृतो हिरण्मयः* (तै.उ.शि.६) इति चोक्तम् । *गुहायां निहितोस्य जन्तोः* (महा.ना.६६) *पद्मकोशप्रतीकाशं* (महा.ना.उ.९५) *नीलतोयदमध्यस्था* (महा.ना.उ.१००) इत्यादि च वक्ष्यति । *तमसः परमो धाता* (रा.यु.११४-१५) *श्रद्धा सत्यो महस्वान्* (महा.ना.उ.१४७) इति च परमव्योम्नि निहितं रूपम् । एवं परमव्योम्नि निहितमादित्यवर्णं स्वहृदयगुहायां *सेन्द्रयोनिः* (तै.शि.६) इत्युक्तमार्गेण अनुकम्पया तेनैव रूपेण प्रविष्टं सत्यादिलक्षणं च यो वेद इत्यर्थः । *गुहां प्रविष्टावात्मानौ हि* (ब्र.सू.१-२-११) *गुहायां निहितोस्य जन्तोः* (महा.ना.उ.६६) इत्याद्यैकार्थ्यात् न परमव्योम्नि गुहा ; न च गुहायां परमव्योम । *अस्माल्लोकात्प्रेत्य* (तै.उ.आन.८;भृ.१०) *अमुं लोकं प्रेत्य* (तै.उ.आन.६) *एतत्ततो भवति*

(तै.उ.शि.६) *नाकस्य पृष्ठमारुह्य* (महा.ना.उ.४०) *अक्षरे परमे व्योमन्* (महा.ना.उ.२) *तमसोपरिष्टात् यद्यतयो विशन्ति* (महा.ना.उ.८६) *सूर्यद्वारेण* (मुं.उ.१-२-११) *स एतान् ब्रह्म गमयति* (छां.उ.४-१५-५) *सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्* (क.उ.३-९) *अश्वत्थस्सोम*[१]*सहितः तेह नाकम्* (पु.सू.१८) इत्यादि अनन्तोपनिषदैकार्थ्यात् । *श्रुतोपनिषत्कगत्यभिधानात्* (ब्र.सू.१-२-१७) । प्राप्तिमपि विशिनष्टि **सोऽश्नुते सर्वान् कामान् सहेति । अश्नुते** प्राप्नोति । **सर्वान् कामान्** काम्यन्त इति कामाः, *दहरविद्यायां तस्मिन् यदन्तस्तदन्वेष्टव्यं* (छां.उ.८-१-२) *किं तदत्र विद्यते यदन्वेष्टव्यं,* (छां.उ.८-१-२) *तस्मिन् कामास्समाहिताः, एष आत्मापहपाप्मा सत्यकामः सत्यसङ्कल्पः (छां.उ.८-१-५) य इहात्मानं अनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्* (छां.उ.८-१-६) इति अपहतपाप्मत्वादयो गुणाः कामशब्देन उच्यन्त इति श्रुत्यैव व्याख्यातम् । वाक्यकारश्च *तस्मिन्यदन्तरिति कामव्यपदेश* (वाक्यग्रन्थ) इत्यादिना विस्पष्टमाह । *कामादीतरत्र तत्र च आयतनादिभ्यः* (ब्र.सू.३-३-३८) इति हृदयायतनत्व-सत्यसंकल्पत्वविशेषरूप-वशित्वादिभ्यः तत्सहचारिणः सत्यकामादेः प्रत्यभिज्ञानात् इति गुणोपसंहारसूत्रं च । अतः विद्याविकल्पवचनाच्च सर्वविद्यासु उक्तस्वाभाविकज्ञानबलादि अनन्तगुणान्, **ब्रह्मणा** सत्यज्ञानादिलक्षणेन, **सहाश्नुते** - सर्वगुणान्वितं ब्रह्मानुभवति इत्यर्थः । तत्क्रतुन्यायात्[२] गुणोपासनं च युक्तमेव । दहरविद्यायां गुणप्राधान्यं वक्तुं सहशब्दप्रयोगः । यथा *ब्रह्मणो महिमानमाप्नोति* (महा.ना.उ.३६) इत्यस्मिन् प्रकरणे । प्रकरणान्तरेषु च सत्यज्ञानानन्त्यं विपश्चित्त्वं सत्यकामसत्यसंकल्पत्वादयो गुणाः मुमुक्षुणा काम्यन्त इति निर्दिश्यन्ते, तान् सर्वान् अनन्तगुणस्वरूपगतत्वात् आप्नोति । परम् इत्यंशं विवृणोति **ब्रह्मणा विपश्चितेति** । ब्रह्मशब्दस्य पुनः प्रयोगः उपास्यस्यैव प्राप्यत्वकथनार्थम् । विविधं पश्यच्चित्त्वं हि विपश्चित्वम् । पृषोदरादित्वात् पश्यच्छब्दावयवस्य यकारलोपेन व्युत्पादितः । वेद्यतया उक्तेन तेनैव सर्वज्ञेन सह इत्यर्थः । सत्यस्यैव सर्वज्ञत्वं परविद्यायामपि उक्तम् *यस्सर्वज्ञस्सर्ववित्* (मु.उ.१-१-९) इत्यारभ्य *तदेतत्सत्यम्* (मुं.उ.२-२-२) इति । वक्ष्यमाणसृष्ट्यखिलप्रकार प्रशासनानुकूलं *बहुस्याम्* (छां.उ.६-२-३) इति ईक्षणक्षमं च विपश्चित्त्वं द्रष्टव्यम् । इतिकरणं मन्त्रसमाप्तिद्योतकम् ।

अयमर्थः - परमे व्योम्नि असंकुचितेन आनन्त्येनावस्थितं उपासकानुग्रहेण अत्यल्प-हृदयगुहायां तेनैव रूपेण *सत्यं ज्ञानम् अनन्तं ब्रह्म* इति यो वेद स विपश्चिता निखिलकारणभूतेन ब्रह्मणा सत्यज्ञानादिलक्षणेन सह सर्वान् उपासनविषयभूतान् प्राप्यान् गुणान् अश्नुते इति ।

---

१. सवनः इति छान्दोग्योपनिषत् पाठः । (८-५-३)

२. **तत्क्रतुन्यायः -** *यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति* (छां.उ. ३-१४-१) इति श्रुत्युक्तः यथोपासनं फललाभः इति ।

केचिदाहु: कामशब्दनिर्दिष्टाः पुत्रादय इति; तदा दहरादिगतिसामान्यविरोधः; *परमाप्रोति* इत्येतद्विवरणविरोधः ; तत्क्रतुन्यायविरोधः; सूत्रविरोधश्च । ननु ज्ञानस्वरूपस्य कथं ज्ञानादिगुणकत्वं संभवति ? तदेतत् सूत्रकारेण परिहृतं *एवमपि उपन्यासात् पूर्वभावात् अविरोधं बादरायणः* (ब्र.सू.४-४-७) इति । एवम् विज्ञानस्वरूपस्यैव पूर्वेषाम् अपहतपाप्मत्वादिसत्यसंकल्पत्वादिपर्यन्तानामपि यः *आत्मापहतपाप्मा* (छां.उ.८-७-१) इत्युपन्यासात् । पूर्वेषाम् - अपहतपाप्मत्वादीनामपि सद्भावावगमात् उभयश्रुत्यवगतोभयस्वरूपस्य परस्परविरोधाभावात् रूपद्वयं नान्योन्यपरिहार्यम् इत्युभयरूपसमुच्चयं भगवान् बादरायणो मन्यते। *यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्* (ब्र.सू.२-३-३०) ज्ञानस्य यावदात्मस्वरूपभावित्वाच्च तेन तद्व्यपदेशे न दोषः; खण्डादिषु तथा दर्शनात् खण्डादौ हि यावत्स्वरूपभाविधर्मत्वेन गोत्वस्य गौरित्येव व्यपदेशो दृश्यते । एवं परमकारण-परमव्योमनिलय-परब्रह्मवेदनया परमकारण-सर्वगुणान्वित-विपश्चित्प्राप्ति वचनात् निर्विशेषब्रह्मत्वं वेदनमन्त्रोक्तम् इति सुस्पष्टं द्रष्टव्यम् ।

हृदयगुहायां कथमवस्थानम् इत्यपेक्षां पूरयति *तस्माद्वा एतस्मात् आत्मनः* इत्यारभ्य *तस्माद्वा एतस्मात् विज्ञानमयात् ; अन्योन्तर आत्मानन्दमयः* (तै.उ.आन.५) इत्यन्तेन । तत्र परमव्योम्नि निहितस्य च परमत्वमेव दर्शयितुं भूताकाशस्य तदन्तर्वर्तिनां ब्रह्माद्य विपश्चिताम् असत्यत्वम् असार्वज्ञत्वम् अन्तवत्वम् अल्पानन्दादिगुणकत्वं तत्प्रशासनाधीनधारणत्वं तत्संकल्पायत्त-स्वरूपस्थितिप्रवृत्तित्वं तदनुप्रविष्टत्वं तदधीनप्राणानन्दादिकत्वम् इत्यादिकं सर्वात्मना एषां त्याज्यत्वप्रदर्शनाय । **तस्माद्वा एतस्मादात्मन आकाशस्सभूत** इत्यादिना जीवस्य परमप्राप्यतया निर्दिष्टस्य परत्वमेव सर्वत्र अस्मिन् अनुवाके प्रतिपाद्यते । तथाहि अण्डकारणानाम् आकाशादीनामपि स्रष्टृत्वं, तेषां सर्वेषां च अब्रह्मत्वं, वाङ्मनसागोचर-निरतिशयदशापन्नानन्दत्वं आत्मसत्तानाशहेतु-ज्ञानाज्ञानविषयत्वं, कामादेव निखिलजगत्स्रष्टृत्व-तदनुप्रवेश-तद्भावादिकं, सर्वावस्थासु च स्वाधीनत्वं, निखिलहेयप्रयनीकत्वं, निखिलप्राणनानन्दादिहेतुत्व-निखिलभयाभयहेतुत्वं, अदृश्यत्वानात्मत्वानिरूक्त - अनिलयनत्व-निखिलवाय्वादि-प्रशास्तृत्वादिकं, स्वप्रतिष्ठानाम् उपासकानां सर्वतोऽभयप्रदत्वं अकर्मनिमित्त-दिव्यरूपत्वं, निखिलपुण्यापुण्यनाशकत्वम् इत्यादि वैभवम् उपपद्यते ।

सत्यज्ञानादिलक्षणस्य आत्मनो विपश्चित एव जगदुपादानत्वम् आह - **तस्माद्वा एतस्मादात्मन आकाशस्संभूत इति । तस्माद्वा एतस्मादात्मन** इति पदत्रयेण मन्त्रवर्णोक्तरूपं सर्वम् अनूद्य निरूपाधिकसत्यं परमकारणत्वात् परम् इत्युच्यते । वै

इति सकलोपनिषत्प्रसिद्धिः । तथाहि, मनुना प्रक्रान्ता सुबालोपनिषत् । *तद्विष्णोः परमं पदम्* (ब्र.उ.६-१) *तदेतन्निर्वाणमनुशासनम्* (सुबा.उ.५-१४) *तमः परे देव एकी भवति* (सुबा.उ.२-२) *तस्मात् तमः संजायते तमसोऽक्षरं, अक्षरात् अव्यक्तम्* (सुबा.उ.१-१) इत्यारभ्य *अद्भ्यः पृथिवी तदण्डमभवत्* (सुबा.उ.१-१) इति सर्वशाखा[1]प्रत्ययः प्रदर्शितः। तर्हि किमर्थं अत्र तमःप्रभृति सृष्टिर्नोक्ता ? स्वशाखाया अन्यत्रोक्तत्वात् । *तम आसीत् तदानीम् अजामेकाम्* (महा.ना.उ.७०) *यदेकमव्यक्तम्* (महा.ना.उ.५) इत्यादौ पृथिवी लोकात् आरभ्य सर्गक्रमप्रकारः सांहितीषु उक्तः । अत्र अक्षरपरमव्योम्नः प्रस्तुतत्वात्, तदपेक्षया अस्य व्योम्नः परैः अनन्ततया अभ्युपेतस्य अत्यल्पम् अन्तवत्वं तत्क्रोडीकृतानां उदुंबरमशकन्यायं च दर्शयितुम् आकाशात् आरभ्य सृष्टिः उच्यते । परभागेन वा सर्वं सुस्पष्टम् इति भवति । *त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्वं उदैत्पुरुषः । पादोऽस्येहाभवात् पुनः* (पु.सू.३-४) *आदित्यवर्णं तमसः परस्तात्* (महा.ना.उ.४-३) *यत्र पूर्वे साध्याः सन्ति देवाः* (पु.सू.१८) *यत्रामृतः सपुरुषो हि अव्ययात्मा* (मुं.उ.१-२-११) इति परभागस्सर्वत्रोच्यते । तद्वदत्रापि परमव्योमापेक्षया कियान् अयम् आकाशः अण्डोदरगतः, कियती वा पृथिवी पञ्चाशत्कोटिविस्तीर्णा, सूरिपरिषदपेक्षया कियन्त एते ब्रह्मादयो जीवाः । *एते वै निरयाः तात स्थानस्य परमात्मनः* (महा.भा.शां.१९६-६) इति पञ्चमवेदः । प्रकृति-महदहंकारादि-शरीरात् आकाशः सम्भूतः । *यस्य अहंकारः शरीरम्* (सुबा.उ.७-१) इत्यादि द्रष्टव्यम् । सर्वत्र शरीरप्रतिसम्बन्धिनि आत्मशब्दप्रयोगः । यद्यपि चेतनात् अन्यत्रापि क्वचित् आत्मशब्दः प्रयुज्यते, तथापि प्रयोगप्राचुर्यात् तज्ज्ञेयम् ; यथा गवि ; गो शब्दस्य अर्थान्तर प्रतीतिस्तु, तदसाधारणापेक्षया । *सोऽकामयत* (तै.उ.आन.६) *विज्ञानमयः* (तै.उ.आन.५) *अन्योऽन्तरात्मा आनन्दमयः* (तै.उ.आन.५) *तस्यैष एव शारीर आत्मा* (तै.उ.आन.६) इत्यादि वाक्यशेषाश्च स्थिरीकुर्वन्ति । सम्भूत इति सर्वत्रानुवर्तते । ब्रह्माण्डकारणानां पञ्चभूतानां ब्रह्मादिभ्यः कारणतया महत्त्वं च प्रशस्यते । **आकाशाद्वायुः** स्पर्शमात्रगुणकः संभूतः । एवं **वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः** इति सृष्टिक्रमः उक्तः । ब्रह्मणः अचिन्त्यशक्तित्वं तद्व्यतिरिक्तस्य सर्वात्मना क्षुद्रत्वं च सृष्टिप्रळयकारणवाक्यानां तात्पर्यार्थः ; *तत्तेजः ऐक्षत* (छां.उ.६-२-३) *ताः आपः ऐक्षन्त* (छां.उ.६-२-४) इति छान्दोग्यैककण्ठ्यात् । तद्रूपेणावस्थितः परमात्मैव साक्षात्स्रष्टा इति सूत्रोक्तं *तदभिध्यानादेव तु तल्लिङ्गात् सः* (ब्र,सू.२-३-१४) इति । तु शब्दः पक्षव्यावृत्त्यर्थः । न तेजः प्रभृतयः स्वानन्तराणां कारणानि, अपि तु तच्छरीरकः परमात्मैव,

---

१. **सर्वशाखा प्रत्यय न्यायः** - अनेक शाखासु प्रत्यभिज्ञायमानानां कर्मणां ऐक्यप्रतिपादको न्यायः । *सर्वशाखोक्तमेकं कर्म* इतिवत् ।

कुतः ? परमात्मसृष्टिलिंगात् तथाविधाभिध्यानात् । यथा *तदैक्षत बहुस्यां प्रजायेयेति* (छां.उ.६-२-३) बहुभवनसंकल्परूपाभिध्यानं दृश्यते । ईदृशं अभिध्यानं तेजः प्रभृतिशरीरकस्य परमात्मन एव सम्भवतीति सूत्रार्थः ।

*ब्रह्मविदाप्नोति* इति प्रस्तुतं ब्रह्म *सत्यं ज्ञानमनन्तं ब्रह्म* इति व्याख्यातम् । अथ *तस्माद्वा एतस्मादात्मन* इति तदेव आत्मशब्देन निर्दिष्टम् । तस्यैव इतरसमस्तात्मत्वाभिधानं दर्शयितुं अन्तरात्मपरम्पराम् आह - *स वा एष पुरुषोन्नरसमयः* इत्यादिना *अन्योऽन्तर आत्मा आनन्दमयः* (तै.उ.आन.५) इत्यन्तेन । तेन निखिलजगदेककारणत्वं निखिललोकान्तरत्वं च लभ्यते, उभयमेव हि परमात्मासाधारणलक्षणम् । **अन्नात्पुरुषः** इति अन्नविकारत्ववचनात् *अन्नरसमयः* इति न प्राचुर्यार्थं मयट् । सर्वान्तरप्रतिपत्त्यर्थं प्रथमम् अन्नरसमयं देहं बुद्धौ आरोपयति **स वै पुरुषः** इति । **तस्येदमेवशिरः** यदेव लोकवेदयोः सिद्धं तदेव शिरः ; न प्रमाणान्तरविरुद्धं किमपि श्रुतिशिरोभिः स्वीक्रियते, इत्युत्तरेष्वपि अनुसन्धानार्थम् उच्यते । **अयं दक्षिणः पक्षः, अयमुत्तर पक्षः** - बाहू । **अयमात्मा** - तयोः मध्ये, अधस्तात् ग्रीवायाः, उपरिष्टात् नाभेः यो मध्यकायः स आत्मा - प्रधानभागः, इतराङ्गानां धारकश्च । **इदं पुच्छं प्रतिष्ठा** गोपुच्छमिव अधस्तात् आलम्बते य आधस्त्यःकायः, पादद्वयरूपः तदिदं पुच्छमिव पुच्छं, प्रतितिष्ठते अनेनेति प्रतिष्ठा च । वैश्वानरविद्यायां पादयोः गुणनामत्वेन प्रतिष्ठशब्दः प्रयुक्तः । **तदप्येष श्लोको भवति** - यथा तदेषाभ्युक्ता इति ब्रह्मसाक्षिमन्त्रः एवं तद्रूपतया जगत्कारणकोटिनिविष्टान्नमयं अभिमुखीकृत्य तस्य कारणत्वादि वैभवविषयः एषः वक्ष्यमाणः श्लोकः आम्नातो भवति ।।

**आ.भा.** - प्राधान्येन ब्रह्मण एव प्रतिपादकत्वात् इयं ब्रह्मवल्ली इत्युच्यते ब्रह्मणश्च निरतिशयानन्दरूपस्य अत्रैव मीमांस्यत्वात् *आनन्दवल्ली* इत्याख्या समुपयुक्तैव । तत्र सूत्रभूतेन प्रथमवाक्येन ब्राह्मणात्मकेन मुख्यं प्रतिपाद्यं, तत्प्राप्तिसाधनं, प्राप्तिं, प्राप्यञ्च संक्षेपतो निर्दिशति **ब्रह्मवित्** इत्यादिना । ब्रह्मपदेन निरतिशयबृहत्त्वविशिष्टं वस्तूच्यते, तद्वेत्तीति **ब्रह्मवित्** । वेदनञ्च उपासना पर्यायम् तथा च ब्रह्मोपासनावान् इत्युक्तं भवति । **स परम् आप्नोति** । **परशब्दः** सर्वतः समुत्कृष्टवचनः तेन सर्वतः समुत्कृष्टं वस्तु ब्रह्मोपासको लभते इति वाक्यार्थः सम्पद्यते । मुख्यप्रतिपाद्यं ब्रह्म, तद्वेदनं प्राप्तिसाधनम्, परशब्दितं प्राप्यम्, तल्लाभ एव प्राप्तिः इत्युक्तं भवति । एतस्यैव अर्थजातस्य विशेषतो विवरणाय मन्त्रमवतारयितुम् आह - **तदेषाऽभ्युक्ता** इति । **तत्** - **ब्राह्मण**वाक्योदितम् अर्थजातं ब्रह्मादि । **अभि** - अभिलक्ष्य तदर्थजातस्य विशेषतः प्रतिपादनाय इत्येतत् ।

एषा वक्ष्यमाणा ; ऋक्। **उक्ता** - कथिता इत्यर्थः । ब्राह्मणध्वनिर्दिष्टब्रह्मपदस्यार्थं विवरीतुम् ऋक्पादमाह - **सत्यं ज्ञानमनन्तं ब्रह्म** इति । **सत्य**पदं स्वरूपतो गुणतश्च विकारराहित्यं बोधयति । सर्वविकाररहितत्वात् सत्यस्वरूपं ब्रह्म इत्यर्थः । अनेन अचिद्भ्यो व्यावृत्तिः सिद्ध्यति; तेषां स्वरूपविकारवत्वात् । बद्धजीवेभ्यश्च व्यावृत्तिः सिद्ध्यति ; तेषां स्वरूपविकाररहितत्वेऽपि गुणविकारवत्वात् । **ज्ञान**पदं नित्याऽसंकुचितज्ञानवत्वं सूचयति । अनेन मुक्तेभ्यो व्यावृत्तिः सिद्ध्यति तेषां बद्धतादशायां ज्ञानसंकोचस्य भूतपूर्वत्वेन तज्ज्ञाने नित्यासंकोचस्याभावात् । न चैवं ज्ञानरूपता ब्रह्मणो न सिद्ध्यति इति शंक्यम् । *नित्यं विज्ञानं प्रज्ञानं ब्रह्म प्रज्ञानघनः* इत्यादि श्रुतिभ्यो नित्यज्ञानरूपताया अपि ब्रह्मणः सिद्धत्वात् । **अनन्त**पदं त्रिविधपरिच्छेदशून्यत्वं बोधयति । परिच्छेदश्च देशतः, कालतो, वस्तुतश्च भवति । यथा इदमत्र वर्तते तत्र तु नास्तीति वक्तुं शक्यते घटादिषु, तस्मात् तेषु वस्तुपरिच्छिन्नत्वमस्ति ; ब्रह्मणि तु नैवं शक्यते वक्तुं ; तस्य सर्वदेशव्यापित्वात् अतः देशपरिच्छिन्नत्वशून्यता ब्रह्मणः । अस्मिन् काले वर्तते ; अयं कुम्भकारव्यापारात् पूर्वं तु नासीत् इति वक्तुं शक्यते घटादिषु, तस्मात् कालपरिच्छिन्नता तेषु । न चैवं ब्रह्मणि कालविशेषे सत्वं कालविशेषे च असत्वं शक्यं वक्तुं तस्य नित्यत्वेन सर्वकालीनसत्तावत्वात्; अतः कालापरिच्छिन्नं ब्रह्म । वस्तुपरिच्छेदः हि वस्तुकृतोऽपकर्षः । स तु अनेकविधः । क्वचित् परिमाणसापेक्षः यथा - समानकालीनयोः समानस्वभावयोः समानगुणान्तरयोः अपि कयोश्चित् सव्येतरविषाणयोः एकत्र अपरकृतः अपकर्षः तस्य ; - अपरमपेक्ष्य अल्पपरिमाणत्वात् । क्वचित् कालसापेक्षः यथा समशरीरयोः समपरिमाणयोः समस्वभावयोः समगुणान्तरयोः अपि कयोश्चिद् युग्मजातयोः एकत्र अपरकृतः अपकर्षः ; तस्य पश्चाद्भावित्वात् । क्वचिच्च स्वभावसापेक्षः यथा - समानकालयोः समानपरिमाणयोः समानगुणान्तरयोरपि कयोश्चिद् हीरकखण्डयोः एकत्र अपरकृतोऽपकर्षः, तस्य वस्त्वैक्येऽपि स्वभावभेदात् । एवम् अन्यविधोऽपि ऊहितुं शक्यः । तेषु अभ्यूहितेषु अभ्यूहनीयेषु वा अपकर्षेषु न कतमोऽपि ब्रह्मणि नास्तीत्यतः अतः अवस्तुपरिच्छिन्नं ब्रह्म अनन्तम् इत्युच्यते । एतेन नित्यमुक्तेभ्यो व्यावृत्तिः सूचिता भवति, तेषां ब्रह्मस्वभावकृतपरिच्छेदवत्त्वस्य शास्त्रसमधिगम्यत्वात् । *जगद्व्यापारवर्जम्* (ब्र.सू.४-४-१७) इत्यादि च शास्त्रं तेषां अपकर्षबोधकं भवति । एवमेतैः सत्यज्ञानानन्तपदैः त्रिभिरपि ब्रह्मशब्दार्थः एव वर्णितो भवति । एवं मन्त्रभागेन ब्रह्मशब्दार्थं विवृत्य वित्शब्दस्यार्थं विवरीतुम् आह - **यो वेद निहितं गुहायाम्** इति । **गुहायाम्** हृदयगुहायां, **निहितं** निगूढम् ; स्थितमित्येतत् । **इदं परं ब्रह्म यो वेद** - समुपास्तः इत्यर्थः ।

हृदयगुहानिहिततया परस्योपासनमेव विच्छब्दार्थः इति सूचितम् । अतः परम् आप्नोतिशब्दास्यार्थं प्रदर्शयितुमाह **परमे व्योमन् सोऽश्नुत** इति । व्योमन्शब्दे छान्दसत्वात् सप्तम्याः लुक् । **परमं व्योम** साकेताभिधं परमपदम् । तदेव अप्राकृताकाशशब्दवाच्यम् । तत्र साकेते गतस्सन् **सः** - उपासकः **ब्रह्म** - परमितिपदेनोक्तं श्रीरामाख्यं ब्रह्म । **अश्नुते** अनुभवति । ब्रह्मानुभव एव देशविशेषगतस्योपासकस्य परब्रह्मप्राप्तिः इत्यर्थः **आप्नोति** इत्यस्य वर्णित इति भावः । ब्राह्मणगतस्य च रामपदस्य परमित्यस्यार्थं प्रदर्शयितुं आह - **सर्वान् कामान्** इत्यादिना । **सर्वान्** - सकलान्, **कामान्** - काम्यन्ते इति कामाः । अनुभवितुम् अभिलष्यमाणाः परब्रह्मणः कल्याणगुणा एव कामाः ; ब्रह्मतदीयगुणातिरिक्तविषयकानुभवाभिलाषायाः मुक्तेषु अभावात् । तान् **विपश्चिता ब्रह्मणा सह** - विविधं पश्यतीति विपश्चित्, सर्वविषयकज्ञानवान् तेन ब्रह्मणा सह वा अश्नुते इत्यर्थः । ब्रह्मतदीयगुणांश्च कल्याणान् सर्वमेतत् समकालमेव अनुभवति हृदयगुहानिहितपरोपासक इति भावः ।

न च ब्रह्मणा सह इति कथनात्, *पुत्रेण सहागतः पिता* इत्यत्र पुत्रस्येव ब्रह्मणोऽपि गौणता समापद्यते इति शंकनीयं ; कारकसाहित्यविवक्षायां हि तथा । अत्र तु क्रियासाहित्यविवक्षा ; *मिष्टान्नेन सह जलं पिबति* इत्यत्र जलापेक्षया मिष्टान्नस्येव ब्रह्मणोऽपि प्रधानताया अक्षतत्वात् । अस्तु वा गुणानामेव प्राधान्यं ; न तेनाऽपि ब्रह्मणः अप्रधानता शक्यः अध्यवसितुं तदीयगुणानाम् अतिशयभोग्यत्वे तस्य तदीयगुणापेक्षया अतिशयभोग्यत्वस्य कैमुतिकन्यायसिद्धत्वात् । **इति** शब्देन मन्त्रसामाप्तिः सूचिता ।

ब्राह्मणोक्त एवार्थ ऋचा किञ्चिद्विवृतः । स एवातः परं पूर्वापेक्षया विशेषरूपेण विव्रियते **तस्मात्** इत्यादिना । **तस्मात्** - *ब्रह्मविदाप्नोति परम्* इति ब्राह्मणवाक्योक्तात् । **एतस्मात्** - *सत्यं ज्ञानम्* इत्याद्यृचा विवृतात् । **आत्मनः** सर्वात्मभूतात् परब्रह्मणः । **आकाशः** - शब्दगुणकोऽवकाशदाता द्रव्यविशेषः । **सम्भूतः** - समुत्पन्नः । **आकाशाद्वायुः** - शब्दस्पर्शगुणः सम्भूतः । **वायोरग्निः** शब्दस्पर्शरूपगुणकः समुत्पन्नः । **अग्नेः** शब्दस्पर्शरूपरसगुणवत्यः **आपः** - समुत्पन्नाः । **अद्भ्यः** - शब्दस्पर्शरूपरसगन्धगुणवती पृथिवी समुत्पन्ना । **पृथिव्या ओषधयः** - अन्नफलकोद्भिज्जातयः उत्पन्नाः । ओषधीभ्योऽन्नम् उत्पन्नम् । अन्नात् भुक्तात् जाठराग्निपरिपच्यमानतया रेतःस्वरूपेण परिणामम् उपगतात् शिरः पाण्यादिमान् पुरुषः पुरुषाधिष्ठानशरीरम् उत्पद्यते ।

सोऽयं **पुरुषः** शिरः पाणिपादादिलक्षणः शरीरस्वरूपः । **अन्नरसमयः** - अन्नरसपरिणामभूतः । अन्नरसविकार इत्येतत् । **तस्य** - शरीरात्मकस्य पुरुषस्य, **इदम्** - प्रत्यक्षतोऽवगम्यमानं प्रसिद्धं शिर एव शिरो मूर्धा । **अयम्** प्रत्यक्षतो दृश्यमानो दक्षिणो वामेतरो बाहुरेव **दक्षिणःपक्षः** । **अयम्** - प्रत्यक्षतो दृश्यमानो उत्तरो वामो बाहुरेव उत्तरो वामः पक्षः । **अयम्** - प्रसिद्धो दृश्यमानः शरीरमध्यभाग एव आत्मा । *मध्यं हि एषामङ्गानामात्मा* (ऐ.उ.३-५-४) इति श्रुतेः । **इदम्** प्रत्यक्षतो दृश्यमानं **पुच्छम्** - पुच्छवन्नाभेरधस्तात् लम्बमानं चरणद्वयरूपमङ्गमेव **प्रतिष्ठा** - आधारः । प्रतितिष्ठति अनया इति **प्रतिष्ठा** । पुरुषोऽपि चरणद्वयेन प्रतितिष्ठति तस्मात् चरणद्वयं प्रतिष्ठा । पुरुषशब्देन कथितस्य बाहुप्रभृतिषु अङ्गेषु पक्षत्वादिरूपणं सुकरतया बोधम् उत्पादयितुम् । **तदप्येषश्लोको भवति ।** तस्मिन्नेव ब्राह्मणप्रोक्तेऽर्थेऽन्नमयात्मप्रदर्शक **एषः** - वक्ष्यमाणः **श्लोकः** - मन्त्रो भवति । वक्ष्यमाणमन्त्रेण ब्राह्मणोक्त एवार्थः प्रकाश्यत इत्यर्थः ।।

**सु.** - ब्रह्मविद्या प्रस्तूयते - तत्रादौ साधनफले निर्दिशति - **ब्रह्मवित्** इति । एतेन प्रथमम् अभिधेयप्रयोजननिर्देशात् अधिकारिणां शुश्रूषायामभ्युपायः प्रदर्शितो भवति । **ब्रह्मवित् परमाप्नोति** - यत् अन्यतो ब्रह्मविद्यायाः तत् अखिलम् अपरम्, विद्यया यदाप्यते तदेव तु परम् । स्वरूपतः स्वभावतश्च यन्निरतिशयबृहत् तदेव ब्रह्म, **यस्तद्वेद** - उपास्ते स परं तदेव आप्नोति, यदेव निरतिशयबृहत्तदेव हि परम् । यदुपास्यते तदेव च प्राप्यते, तत्क्रतुन्यायात् । न हि अन्यदुपास्यम् अन्यत् प्राप्यम् । तत् ब्रह्माधिकृत्य **एषा** ऋक् **अभ्युक्ता** - समाम्नाता । ब्राह्मणोक्तमर्थं मन्त्रोऽयं व्याचष्टे इत्येतत् । सकलेतरव्यावृत्तं ब्रह्मणः स्वरूपम् अभिधीयते **सत्यम्** इत्यादिना । **सत्यम्** निरुपाधिकसत्तायोगि, रूपान्तरनामान्तरभजनानर्हमेव तु तथाभूतम् । एतेन अचेतनात् प्रधानात् तत्तत्संसृष्टात् जीवाच्च व्यावृत्तिर्गम्यते । **ज्ञानम्** नित्यासङ्कुचितज्ञानगुणसारत्वम्, एतेन मुक्तेभ्यो व्यावृत्तिः गम्यते । ते हि आविमुक्तेः सङ्कुचितज्ञानाः प्राक् । **अनन्तम्** देशतः कालतो वस्तुतो वा योऽन्तः परिच्छेदः, तद्रहितम् । अस्मिन् देशे नास्तीत्येष देशतः परिच्छेदः, तद्रहितम्, सर्वत्र व्याप्तेः । अस्मिन् समये नास्तीत्ययं कालपरिच्छेदः, तद्रहितम्, नित्यत्वात् । वस्तुस्वभावतो योऽन्तः स वस्तुतः परिच्छेदः, सा च सातिशयता, तद्रहितम् निरतिशयस्वभावम् इत्येतत् । एतेन नित्या व्यावृत्ताः । यद्वा इदमिदं न भवति इति प्रतीत्यनर्हता वस्तुतोऽपरिच्छेदः, सर्वान्तर्यामितया सर्वप्रकारत्वेन सर्ववस्तुसामानाधिकरण्यार्हम् । सर्वात्मत्वात् सर्वं ब्रह्म भवति इति हि निर्देशः ।

यद्वा - अस्मिन् देशे नास्ति, अस्मिन् काले नास्ति, इतिवत् अस्मिन् वस्तुनि नास्ति इति निषेधो वस्तुतः परिच्छेदः, तद्रहितम्, सर्ववस्तुषु अन्तर्यामितयाऽनुप्रवेशात् । तदिदं परं ब्रह्म **गुहायां** - हृदयगुहायां निहितं **यो वेद** - उपास्ते । एतेन *ब्रह्मविदाप्नोति परम्* इत्यस्मिन्वाक्ये ब्रह्मवित् इत्येतत् व्याख्यातम् । अथ **आप्नोति परम्** इत्येतद्व्याख्यायते - **परमे व्योमन्** इत्यादिना । **सः** - उपासकः, **परमे व्योमन्** - परव्योम्न्यक्षरे दिव्यस्थाने **सर्वान् कामान्** - काम्यन्ते इति कल्याणगुणाः, ते च परस्य ब्रह्मणः, तान् **ब्रह्मणा सह अश्नुते** अनुभवति, ब्रह्म तदीयदिव्यगुणांश्च अनुभवति इति यावत् दध्ना सह ओदनं भुङ्क्ते इतिवत् कर्मसाहित्यम् इह विवक्षितम् । न च सहशब्दयोगात् अनुभवे ब्रह्मणोऽप्राधान्यं गम्येत, न हि तदीयैः गुणैरनुभूयमानैः तस्य अप्राधान्यम् । ब्रह्मणो निर्विशेषत्वं प्रतिक्षेप्तुं ब्रह्म विशिनष्टि - **विपश्चिता** इति । सर्वज्ञत्वं सर्वशक्त्यादिकल्याणगुणानाम् उपलक्षकम् । नन्वयम् अन्वयोऽनुपपन्नः ? ऋक्लक्षणानन्वयात् । अर्थवशेन पादव्यवस्था हि ऋचो लक्षणम् उच्यते । वाक्यार्थश्च अयम् उपपाद्यमानः श्रूयमाणपादव्यवस्थाननुगुणः। नैतत् । यत्रार्थवशेन पादव्यवस्था इत्येतत् उपलक्षणमात्रम् । अत एव व्याख्यातारः अर्थवशेन वृत्तवशेन वा पादव्यवस्था इत्याचक्षते । अर्थवशेन पादव्यवस्थायाम् आग्रहे त्वयमर्थः हृदयगुहायां **यद्व्योम** - आकाशम्, **परमम्** प्रकृष्टं बाह्याकाशात्, परब्रह्मणोऽभिव्यक्तिस्थानं तदिति तस्य परमता, तत्र निहितं यो वेद, सः उपासकः **सह** - युगपदेव **सर्वान् कामान्** - तैस्तैः काम्यन्ते ये मानुषानन्दादयो हैरण्यगर्भानन्दपर्यन्ताः, तान् सर्वान् आनन्दान् युगपदेव अनुभवति, न तु पुण्यविशेषनियन्त्रिताः कर्मपरिपाककालभेदेनेव । कथम् इदम् उपपद्यते ? आह - **ब्रह्मणा** - अनुभूयमानेन ब्रह्मणा साधनेन, स हि आनन्दमयः, सर्व एव मानुषानन्दप्रभृतय आनन्दाः समुद्रे गोष्पदवदन्तर्गता एव, तत् अनवधिकानन्दमयेन तेन अनुभूयमानेन युगपदेव सर्वान् आनन्दान् अनुभवन्ति । ब्रह्मानन्दे सर्वानन्दसमन्वयं सैषाऽऽनन्दस्य मीमांसा भवति इत्यादिना श्रावयिष्यति श्रुतिः । पराभिमतान्वयानुसारेण अयमर्थः उन्नीतः । प्राचां व्याख्यानम् अनुसृत्य प्रदर्शितः पूर्वं वाक्यार्थः श्रेयान् । ब्रह्मविदाप्नोति इत्यत्र प्रस्तुतं ब्रह्म मन्त्रे सत्यं ज्ञानम् अनन्तम् इत्यनेन ईषद्विवृतम् । अधुना तद्विस्तरेण व्याख्यातुं प्रवर्तते - **तस्माद्वा एतस्मात्** इत्यादिना । **तस्मात्** ब्रह्मविदाप्नोति इति ब्राह्मणे प्रस्तुतात्, **एतस्मात्** *सत्यं ज्ञानम् अनन्तं ब्रह्म* इति मन्त्रोक्तात्, **आत्मनः** सर्वान्तरात्मनः, **आकाशः सम्भूतः, आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी**, आकाशादीनाम् उपादानम् आत्मा यत्प्रस्तुतं ब्रह्म इत्युक्तम् भवति । आत्मनोऽर्थान्तरमाकाशादि, कथं

तस्य आत्मोपादानं भवितुमर्हति । नैतत् । अनन्यदेव कार्यमाकाशादि, आत्मन इत्युपादानताश्रुतेः ।

ननु व्याहतमेतत्, अचेतनं हि आकाशादिशब्दैः श्रूयते । नैतत्; आकाशादिशरीरकं ब्रह्मैव आकाशादिशब्दैः बोध्यते । सर्वान्तर्यामिणः स्वेतरसर्वप्रकारतया तत्तद्रूपेण प्रकारविशेषेण निर्देशो हि सूपपन्नः, तत्त्वस्थित्यानुगुण्यात् । सद्विद्यायां *तत्तेज ऐक्षत* (छां.उ. ६-२-३) इति चेतनधर्मेणैव निर्देशः । **पृथिव्या ओषधयः, ओषधीभ्य अन्नम्, अनन्नात् पुरुषः** शिरः पाण्यादिलक्षणः, सोऽयं **पुरुषः अन्नरसमयः** - अन्नरसप्रचुरः, अस्थिमांसादयो हि अन्नरसविकृतय एव । तस्य अस्य पुरुषस्य शिरः पाण्यादिलक्षणतां प्रदर्शयति - **तस्य** इति । **तस्य इदमेव शिरः** यदिदं दृश्यते प्रसिद्धं शिरः इदमेव शिरः । इदमेव इत्यवधारणात् प्राणमयादिषु कल्प्यमानेभ्यः शिरः प्रभृतिभ्यो व्यावृत्तिः गम्यते । **अयं दक्षिणः पक्षः** - दक्षिणः पाणिः । **अयमुत्तरः पक्षः** वामः पाणिः । अयमेव प्रसिद्धः **आत्मा** मध्यकायः । धारकत्वेन प्राधान्यात् आत्मा इत्युच्यते । यदिदं प्रसिद्धं चरणद्वयम् आधारत्वात् **पुच्छम्** उच्यते । प्रतितिष्ठति नया इति **प्रतिष्ठा** । चरणेन हि पुरुषः प्रतितिष्ठति । **तत्** - अन्नमयमधिकृत्य **एष** वक्ष्यमाणः श्लोको भवति ।।

## द्वितीयोऽनुवाकः

### [अन्नमयकोशमहिमा]

**अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीँश्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नँ हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नँ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते ।। १ ।।**

**अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति । तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः ।। २ ।।**

**तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।। ३ ।।**

।। इति द्वितीयोऽनुवाकः ।।

**प्र.दी - अन्नाद्वै प्रजाः प्रजायन्ते** इति । **याः काश्च** - ये केचन, **पृथिवीं श्रिताः प्रजाः** - भूमौ वर्तमानाः सर्वाः प्रजाः **अन्नात्** - अन्नादेव, **प्रजायन्ते** - उत्पन्ना भवन्ति । **अथो** - अनन्तरं जाता अपि प्रजाः, **अन्नेनैव जीवन्ति** - प्राणान् धारयन्तीत्यर्थः । **अथ** - अनन्तरम्, **अन्ततः** - अन्तकाले, **एनत्** - अन्नम्, **अपियन्ति** - अपि गच्छन्ति, अपिशब्दः प्रतिशब्दार्थकः, अन्नं प्रतिलीयन्ते । तत्रैव सर्वे जनाः लयं यान्ति इत्यर्थः । **अन्नँ हि** इति । अन्नस्य सर्वभूतोपकारकत्वेन प्रथमजत्वेन च **अन्नमेव ज्येष्ठम्** - श्रेष्ठमित्यर्थः । **तस्मात्** इति । **तस्मात्** - सर्वजनसंबन्धि अशनायादिव्याधिनिवर्तकत्वात् सर्वौषधपरिणामत्वात्, **सर्वौषधम्** - सर्वविधभेषजम् इत्युच्यते । **सर्वं वै** इति । **ये** जनाः अन्नं ब्रह्म इत्युपासते ; अन्ने ब्रह्मदृष्टिं कुर्वन्ति, **ते** - जनाः, **सर्वम्** - अपेक्षितं सर्वमन्नम्, **आप्नुवन्ति** प्राप्नुवन्ति इत्यर्थः । **अन्नं हि** इति । **अन्नं भूतानां ज्येष्ठम्** - भूतेभ्यः पूर्वम् उत्पन्नत्वाद्धि । **तस्मात्** सर्वप्राणिदेहदाहप्रशमनत्वात्, **सर्वौषधमुच्यते** - सर्वेषां प्राणिनां सर्वविधौषधम् इत्युच्यते ।

**अन्नादिति । अन्नात् - सर्वभूतानि जायन्ते** - जातानि भूतानि **अन्नेन वर्धन्ते** - प्रवर्तन्ते । जनैः अद्यत इत्यन्नम्, जनान् अत्तीति च अन्नम् इति । अन्नशब्दनिर्वचनमाह - **अद्यते अत्ति च** इति । जीवनदशायाम् एतदन्नम् भूतैः स्वयमद्यते नाशदशायां - विपरीतपरिणामेन अजीर्णरोगादिहेतुभूतं सत् स्वयम्भूतानि, **अत्ति च** - मृत्युभूतं भवतीति यावत् । **तस्मात्** अद्यत इति अत्ति इति उभयव्युत्पत्तेः आधारभूतत्वात् । **तत्** - अन्नम् इत्युच्यत इत्यर्थः । **तस्माद्वा** इति । **वा** इति एवार्थकः, **तस्मात्** - पूर्वमन्त्रनिर्दिष्टादेव, **एतस्मादन्नरसमयात्** - परिदृश्यमानदेशात्, अन्नमयकोशात् इत्यर्थः । **अन्यः यः प्राणमयः** - **यः** - स एव **अन्तरः आत्मा** - अन्नमयकोशस्य *आत्मन आकाशः* सम्भूतः इति । आकाशादिसर्वभूतोपादानकत्वसर्वान्तर्यामित्वेन च निर्दिष्टः । परमात्मैव अन्नमयकोशे अन्तरात्मत्वेन निर्दिष्टः । **तेन** इति । **तेन** - प्राणमयेन परमात्मना **एषः** - अन्नरसमयः - अन्नमयकोश इत्यर्थः । **पूर्णः** व्याप्तः । **स वा** इति । पूर्वोक्त **एषः** - प्राणमयकोशः **पुरुषविध एव** - पुरुषाकृतिरेव इत्यर्थः । **तस्य** इति । **तस्य** - अन्नमयकोशस्य पुरुषाकारत्वम्, **अनु** - अनुकृत्य, **अयं** - प्राणमयकोशोऽपि **पुरुषविधः** - शिरःपक्षपुच्छादिदेहविशिष्टः, तदेवाह **तस्य** इति । **तस्य** - प्राणमयकोशस्य, **प्राण एव शिरः** - पञ्चवृत्तेः प्राणस्य प्राणनवृत्तिप्रचुरत्वात् प्राण एव प्रधान इत्युच्यते । **व्यानः** - व्याननामकवायुः **दक्षिणः पक्षः । अपानः** - एतन्नामकवायुः **उत्तरः पक्षः । आकाश आत्मा** इति । **आकश**

**आत्मा** - *यथाकाशस्थितो नित्यं वायुस्सर्वत्रगो महान्* (भ.गी.९-६) इति । वायुविकारभूतप्राणादीनां धारकत्वेन आकाशस्य आत्मत्वम्; **पृथिवी** इति । *पृथिव्यामाकाशः प्रतिष्ठित* इति पृथिव्याम् । आकाशस्य प्रतिष्ठितत्वात् । आकाशविकारप्राणस्य पृथिव्याः आधारकत्वात् । **पृथिवी** पुच्छत्वेन प्रतिष्ठिता आधारभूतेत्यर्थः । **तत्** इति; **तत्** - तस्मिन्नेवार्थे ब्राह्मणोक्ते **एषः** - प्राणमयात्मबोधक **श्लोको भवति** ।।

**तै.भा.** - एष उदाहरिष्यमाणः श्लोकस्तुतिरपि भवति, स्तुतिमेव उदाहरति **अन्नात्** इत्यादिना । **अन्नात्** - रेतोरूपात् प्रजाः **प्रजायन्ते** - उत्पद्यन्ते । देवादीन् व्यावर्तयति - **याः काश्च** इति । **अथो अन्नेन** - अनेन अन्नेन, तृतीयार्थे तसिः, **जीवन्ति** - प्राणान् धारयन्ति । **अथ** - जीवनानन्तरं **अन्ततः** - अन्ते, शरीरविनाशकाले **एतत्** - इदं पृथिवीरूपम् अन्नमपि **यन्ति** - संश्लिष्यन्ति । तस्मात् **अन्नं भूतानां ज्येष्ठम्** - प्रशस्यतमम् । **सर्वौषधम्** - सर्वप्राणितापशमनं च उच्यते ।

ननु अत्र नान्नमयस्तुतः, किन्तु तत्कारणानि । नैष दोषः । *आपो वै शान्ता* इत्यपां स्तुत्या वेतसावकयोः स्तुतिदर्शनात् । लोके च काश्मीरेषु स्तुतेषु काश्मीराभिजनो देवदत्तस्तु तम् आत्मानं मन्यते । अथ प्रसङ्गात् अन्ने ब्रह्मदृष्टिः विधीयते फलाय - **सर्वम्** इति । **ये अन्नम्** - अन्नरसमयं शरीरं **ब्रह्मोपासते** - ब्रह्मत्वेन निरन्तरप्रत्ययविषयं कुर्वन्ति । **ते सर्वं** खाद्य-पेयादि-षड्विधमपि अन्नम् आप्नोति ।

उपास्यत्वे पूर्वोक्तं हेतुमाह - **अन्नं हि** इति प्रसङ्गात् अन्नशब्दं निर्वक्ति - **अद्यत** इति । भूतैः इति शेषः । **अत्ति** - हन्ति **तस्मात्** - तत् पूर्वोक्तम् ओषध्यादिकम् अन्नमुच्यते । इतिशब्दः स्तुतिवचनसमाप्तौ । अथ स्थूलारुन्धतीन्यायेन जगत्कारणभूतम् आत्मानं दर्शयितुं प्रत्यक्षसिद्धस्थूलान्नमयात् सूक्ष्मं प्राणमयम् उपदिशति - **तस्मात्** इत्यादि । **तस्मात्** - अन्नजन्यात् **एतस्मात्** - पुरुषत्वेन दर्शितात् अन्नरसमयात् **अन्यः** - तस्मात् सूक्ष्मः **अन्तरः** - अन्नमयात् अन्तर्वर्ति **प्राणमय आत्मा** अस्ति । अत्र मयट् स्वार्थिकः । प्राणविकारस्य अन्यस्य अभावात् ननु कथं प्राणस्य अन्नमयानन्तरात्मत्वं तत्राह - **तेन** इति । **तेन** - प्राणमयेन **एषः** - पूर्वोक्त अन्नमयः, **पूर्णः** - वायनेवद्रुतिः । (?)

अथ अस्मात् सूक्ष्मं मनोमयम् उपदेष्टुं अस्य प्राणमयस्य बुद्ध्यारोहाय पुरुषविषयत्वम् दर्शयति - **स वा** इति । **स एषः** - प्राणमयः **पुरुषविधः** - पुरुषाकार एव । भूत

इत्याह **तस्य** इति । **तस्य** - प्राणमयस्य या **पुरुषविधता** - शिरः पाण्यादिमत्तां तां **अनु** - तेनैव हेतुना **अयं** - प्राणमयोऽपि **पुरुषविधः** । हेतौ अनोः कर्मप्रवचनीयत्वं, मूषानिक्षिप्तद्रुतताम्रादिवत् अन्नमयपुरुषविधतां प्राणमयोऽनुविधत्त इत्यर्थः । **तस्य** - पञ्चवृत्तिप्राणस्य **प्राणः** - हृदयसंस्थितः कञ्चन विशेषमापन्नो वायुः **शिरः व्यानः** - प्राणवृत्तिविशेषः तथाऽपानोपि । **आकाशो** - हृदयकमलसुषिरम् । **पृथिवी** - हृदयकमलम् ।

अन्नमयात् प्राणमयः श्रेष्ठः इति प्रशंसति **तदप्येष** इति । देवादयः सर्वे प्राणमनुप्राणेन हेतुना प्राणेन जीवन्ति । हेतौ कर्मप्रवचनीयत्वम् ।।

**प्र. - अन्नाद्वा** इति । पृथिव्यां वर्तमानाः सर्वाःप्रजा अन्नादेव उत्पद्यन्ते । उत्पन्नाश्च अन्नेनैव जीवन्ति । [1]अन्तकाले च[1] तत्रैव लयं यान्ति इत्यर्थः । **अन्नं हि** इति । सर्वभूतोपकारकत्वात् अन्नमेव ज्येष्ठम् । अत एव अशनायादिव्याधिनिवर्तकत्वात् तदेव सर्वौषधम् उच्यते इत्यर्थः । *ओषधीभ्योऽन्नम्* इति ओषधिपरिणामत्वं निमित्तीकृत्य अन्ने प्रयुक्तम् ओषधिशब्दं भेषजत्वनिमित्तकतया श्रुतिः व्यपदिशति इति द्रष्टव्यम् ।

**सर्वं वा** इति । अन्ने ब्रह्मदृष्टिं कुर्वन्तः यावदपेक्षितम् अन्नं प्राप्नुवन्ति इत्यर्थः । ब्रह्मदृष्टिहेतुभूतं ब्रह्मसाम्यमाह **अन्नं हि** इति । ब्रह्मणोऽपि सकलरोगनिवर्तकतया सर्वभेषजत्वस्य सत्त्वात् इति भावः । **अन्नात्** इति । जननवृद्धिहेतुत्वम् अन्नब्रह्मणोः सममित्यर्थः । अन्नस्य निर्वचनमाह **अद्यतेऽत्ति च** इति । जीवनदशायां स्वयमद्यते । नाशदशायाम् [2]अलभ्यमानतया वा[2] विपरीतपरिणामहेतुतया वा, अन्नं *मृत्युं तमु जीवातुमाहुः* (तै.ब्रा.२-८-८) [3]इति श्रुत्युक्तरीत्या[3] अत्तृत्वलक्षणं संहर्तृत्वं द्रष्टव्यम् । एवम् आकाशादेः अन्नरसमय-स्थूलशरीरपर्यन्तस्य [4]मन्त्रब्राह्मणोक्त[4] ब्रह्मोपादानकत्वम्, *आत्मन आकाशः* इति आत्मशब्दश्रवणात् तदन्तर्यामिकत्वञ्च उक्तं भवति ।

एवम् आकाशादेः अन्नमयशब्दित-स्थूलशरीरपर्यन्तस्य ब्रह्मैव आत्मा, उपादानञ्च इत्युक्त्वा, स आत्मा कः ? इत्यपेक्षायाम्, आनन्दमय एव स आत्मा इति दर्शयितुं स्थूलारुन्धतीन्यायेन स्थूलदेहान्तर्वर्तिनं प्राणमयम् आत्मत्वेन दर्शयति । सूक्ष्मारुन्धतीं दर्शयितुं [5]प्रवृत्तः पुरुषः[5] प्रथमत एव सूक्ष्माया अरुन्धत्याः प्रदर्शनासंभवं पर्यालोच्य तत्समीपवर्तिनीं स्थूलतारकाम्, *इयमेवारुन्धती* इति प्रदर्शयति । तस्यां स्थूलतारकायां श्रोतुः अरुन्धतीत्वबुद्धौ

---

1. अन्तकाले च - अ,क,ख । 2. लयाधारतया वा - ग,घ । 3. इत्युक्तरीत्या - ग ।
4. मन्त्रब्राह्मणोदित - अ,ख । 5. प्रवृत्तः पुरुषः - अ,क,ख ।

दृढायां तत्समीपवर्तिनीं वस्तुतोऽरुन्धतीं सूक्ष्माम्, *इयमेवारुन्धती* इति प्रदर्शयति । सोऽयं स्थूलारुन्धतीन्याय इत्यर्थः । **तस्माद्वा** इति । देहान्तर्वर्ती देहादन्यः यः प्राणमयः, स एव, *आत्मन आकाशः सम्भूतः* इति आकाशादिसर्वोपादानत्वेन तदन्तर्यामित्वेन च निर्दिष्टः आत्मा इत्यर्थः । भगवता भाष्यकृता - *अन्वयादिति चेत् स्यादवधारणात्* (ब्र.सू.३-३-१७) इति सूत्रे, अन्नमयान्तरे प्राणमये प्रथमं परमात्मबुद्धिः अवतीर्णा, तदनन्तरञ्च प्राणमयादन्तरे मनोमये, ततो विज्ञानमये, तत आनन्दमये इति भाषितम् । अत्र पञ्चवृत्तेः प्राणस्य [1]प्राणनवृत्ति[1]प्रचुरत्वात् प्राणमयत्वम् । **तेन** इति । **तेन** प्राणमयेन आत्मना [2]अयम् अन्नरसमय[2] आत्मा पूर्ण इत्यर्थः । व्याप्त इति यावत् । सर्वस्यापि देहस्य [3]प्राणव्याप्यत्वादिति[3] भावः । **स वा** इति । प्राणमयोऽपि पुरुषाकृतिरेव इत्यर्थः । हस्तपादादिमत्त्वेन पुरुषविधत्वभ्रान्तिं व्युदस्यति **तस्य** इति **तस्य** - अन्नमयस्य पुरुषविधत्वमनुकृत्य प्राणमयोऽपि [4]पुरुषविध[4] इत्यर्थः । ततश्च तद्वदेव शिरः पक्षपुच्छादिमत्तया [5]पञ्चविध[5] इत्यर्थः । **आकाश आत्मा** इति । *यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान्* (भ.गी.९-६) इति स्मृत्युक्तरीत्या वायुविकारभूत प्राणापानादि-धारकत्वात् आकाशस्य आत्मत्वम् । **पृथिवी** इति । पृथिव्याम् आकाशस्य प्रतिष्ठितत्वात् तस्याः पुच्छत्वम् ।।

**कू.भा. - अन्नाद्वै प्रजाः प्रजायन्ते, याः काश्च पृथिवी श्रिताः** । अत्र अन्नमिति अन्नसमष्टिः उच्यते । अन्नरसस्य अवस्थान्तरमात्रं हि शरीरं, अतोऽन्नस्तोत्रम् अन्नमयस्तोत्रम् भवति । **अन्नात्** - अण्डावच्छिन्नात् पञ्चीकृतात् *पञ्चभूतात् । अन्नमसृजत* (छां.उ.६-२-४) इति छान्दोग्ये पृथिव्यण्डम् अन्नम् इत्युच्यते । **वै** प्रसिद्धम् । **प्रजाः** - जरायुजाण्डजस्वेदजोद्भिज्जाः सुरनरतिर्यक्स्थावरान्तभूताः । पाञ्चभौतिकानामपि शरीराणाम् अन्नप्राचुर्यात् अन्नमयत्वम् । अन्नरसव्याप्तिमात्रभवाःताश्चात्यन्तोत्कृष्टाश्च ब्रह्मादिस्थावरान्ताः । **पृथिवीं** - अद्भ्यः पृथिवीत्युक्तं जलावरणम् । **आश्रिताः** । ब्रह्मादिशरीरमपि अनेकसंहननत्वात् पृथिव्यवष्टब्धम् । **अथो अन्नेनैव जीवन्ति** - घटादेः मृदपेक्षा केवलमुत्पत्तिकाले, नैवमत्र, सुहुतेन अन्नेनैव ब्रह्मादयो जीवन्ति, अपहुतेनासुराः, यज्ञशिष्टेन वयं, अस्मदनुपयुक्तेन पश्वादयः, केवलमृदा वृक्षजळूकादयः । **अथैनदपियन्त्यन्ततः** - **एनत्** - एतत्, **अपियन्ति** - अपीति - अप्ययः, अन्नपरिणामेन हि मरणमपि, **अन्ततः** । **अन्नं हि भूतानां ज्येष्ठम्** - इतरभूतेभ्यो

---

1. प्राणवृत्ति ग,घ । 2. अन्नरसमय ग,घ । 3. व्याप्तत्वादिति - ग,घ । 4. पुरुषविधः - ग,घ ।
5. पुरुषविधः - अ ।

बहुतरम् उपजीव्यं च प्राणिनाम् उपजीव्येषु अग्र्यं च । **तस्मात् सर्वौषधम् उच्यते** सर्वप्राणिनां धातुसाम्यकरम् औषधम् आयुर्वेदैरपि उच्यते *न हि पथ्याशनस्य आमैः व्याधिः अन्तरमाविशेत्* इति । श्रीभागवते च *नाश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति च* (भाग.६-१-१२) इति । **सर्वं वै तेऽन्नमाप्नुवन्ति, येऽन्नं ब्रह्मोपासते** - यावदपेक्षितमन्नं प्राप्नुवन्ति, ये जन्म-स्थिति-लयहेतुत्वसाम्यात् अन्नं ब्रह्मदृष्ट्या उपासते ते हि अन्नाधिपतयोऽपि भवन्ति । उत्तरानुवाके अन्नमयादीनाम् उपासनं प्राप्तिश्च उच्यते *अन्नमयं आत्मानम् उपसंक्रम्य* इति । ब्रह्मदृष्टिप्रकारश्च उत्तरानुवाके स्पष्टमेव वक्ष्यमाणः । ब्रह्मदृष्टेः हेतुं ब्रह्मणा साम्यप्रकारं स्मारयति । **अन्नं हि भूतानां ज्येष्ठं तस्मात् सर्वौषधमुच्यते** इति । *भेषजं भगवत्प्राप्तिः* (वि.पु.६-५-५९) इत्यादिवचनात् ब्रह्म च सर्वभेषजम् । **अन्नाद्भूतानि जायन्ते जातानि अन्नेन वर्धन्ते** । एतच्च समानं ब्रह्मणः । निर्वचनेन चाह *अद्यतेऽत्ति च भूतानि* सृष्टिस्थित्योः स्वयमेव अद्यते ; संहारे अत्ति च । **तस्मादन्नं तदुच्यते इति** - इत्थं ब्रह्मादिभिः अनन्तप्रकारभेदैः अनन्तप्रकारभेदं भुज्यते भुनक्ति इति च अन्नमुच्यते, ब्रह्म च एवम् । **इति** इति साक्षिश्लोकसमाप्तौ । **तस्माद्वा एतस्मात् अन्नरसमयात्, अन्योन्तर आत्मा प्राणमयः** अन्नरसमयात् इति शब्दादिगुणकसर्वभूतग्रहणम् । तस्मादन्यो विसजातीयः, **अन्तरः** भूतसूक्ष्ममयः इत्यर्थः । **आत्मा** आप्नोति इति हि आत्मा प्रधानभूतः धारकश्च । **प्राणमयः** पञ्चवृत्तेः प्राणवत्तामात्रेण प्राणत्वं पञ्चवृत्तिषु प्राणवृत्तेः पञ्चमत्वाद्वा । यथा पाञ्चभौतिकस्यापि शरीरस्य अन्नरसप्राचुर्यात् अन्नरसमयत्वम् । **तेनैष पूर्णः** बहिरन्तश्च तेन आप्यायकेन व्याप्तः अन्नरसमयः पुष्कलः भवति । प्राणवियोगे हि विरूपो विकलो भवति दुर्दशोऽपि मरणे च उपक्रान्ते । **स वा एष पुरुषविध एव** प्राणमयोऽपि पुरुषाकारः । **तस्य पुरुषविधतां अन्वयं पुरुषविधः** **तस्य** - अन्नमयस्य पुरुषविधत्वम् अनुकृत्य अयं प्राणमयः पुरुषविधः । **पुरुषविधः,** पुत्रमनुकृत्य पिता भवतीति ज्ञाप्यते । अथवा **तस्य** इति प्राणमयः उच्यते । यथा पितुः सदृशः पुत्रः एवं प्राणस्य पुरुषविधताम् अनु प्रागुक्तोऽयं अन्नरसमयः इति । एवमुत्तरेषु अपि ।

**तस्य प्राण एव शिरः** प्राणवृत्तिः प्रधानमङ्गम् । यो व्याप्य नयति अशितपीतं सदक्षिणबाहुः इत्याह **व्यानः दक्षिणः पक्षः अपानः उत्तरपक्षः** । ऋजीषनिगरणात् सव्यबाहुः । **आकाशः आत्मा** समानवायुव्याप्तः प्राणापानादि मध्यवर्ति आकाशः मध्यकायः। *यथाकाशस्थितो नित्यं वायुस्सर्वत्रगो महान्* (भ.गी.९-६) इति समानस्य अवकाशप्रदत्वात् आकाशाख्या वा । **पृथिवी पुच्छं प्रतिष्ठा** पृथिवीप्रधानः उदानः इति तदाख्यः आधस्थ्यः पादः । *पृथिव्यामाकाशः प्रतिष्ठितः* इति च । **तदप्येष श्लोको भवति ।** पूर्ववत् ।।

**आ.भा.** वै शब्दो निश्चयार्थः । **अन्नात्** रसाद्यात्मना परिणामं प्राप्तात् **प्रजाः** स्थावरा लतागुल्मादयः, जङ्गमाश्च मनुष्यादयः, **प्रजायन्ते** समुत्पद्यन्ते । ताः का इत्यत्राह **याः काश्च** इति । **पृथिवीं श्रिताः** पृथिवीमाश्रित्य वर्तमाना **याः काश्च** सर्वाः अपि, **प्रजाः - अन्नेनैव**, भुक्तेन, **जीवन्ति** प्राणधारणं कुर्वन्ति । अद्यते इति अन्नम् इति व्युत्पत्या पृथिवीविकारस्य घासादेः अपि ग्रहणम् । तेन पशुप्रभृतीनामपि अन्ननिमित्तकं प्राणधारणम् इत्यर्थः । **अथ** - अनन्तरम् **अन्ततो** - जीवनकारणीभूतादृष्टपरिसमाप्तौ सत्याम् **एनम् अपि यन्ति** अन्ते प्रलीयन्ते इत्यर्थः । **अन्नं हि भूतानां ज्येष्ठम्** । सर्वभूतोपकारकत्वम् अन्नस्य जीवनसाधनत्वात्; तस्मात् भूतेभ्यः सर्वेभ्यो अन्नं श्रेष्ठमिति भावः । तस्मात् अन्नस्य सर्वभूतोत्पत्तिकारणत्वात् जीवनहेतुत्वात् बुभुक्षादिजनित-शरीरतापशामकत्वाच्च **सर्वौषधम्** अन्नमुच्यते । ओषधिभ्यो जातम् औषधम् । सर्वेषां भूतानाम् औषधं सर्वौषधं शरीरारोग्यकारकत्वात् अन्नाभावप्रयुक्त व्याध्युपशमहेतुत्वाच्च ओषधत्वम् इति भावः ।

अन्ने ब्रह्मदृष्टिं कृत्वा **ये** - जनाः **अन्नं ब्रह्म** इत्येवम् **उपासते** । **ते** जनाः, **सर्वमन्नं प्राप्नुवन्ति** । वै शब्दोऽवधारणार्थः । निश्चितमेतत् इत्यर्थः । अन्ने ब्रह्मोपासनं सर्वान्नप्राप्तिफलकम् इति समुदितार्थः । अन्ने ब्रह्मदृष्टिकरणे हेतुभूतम् अन्नब्रह्मणोः साम्यमाह - **अन्नं हि** इत्यादिना । ब्रह्म यथा सर्वापेक्षया **ज्येष्ठम्** तथाऽन्नमपि सर्वभूतापेक्षया ज्येष्ठम् इति ज्येष्ठत्वधर्मसाम्यात् अन्ने ब्रह्मदृष्टिः कार्या इत्यर्थः । **तस्मात्-सर्वौषधम्** इति ब्रह्म सकलरोगनिवारकत्वात् सर्वौषधं तद्वत् अन्नमपि सर्वौषधमित्यर्थः । सर्वौषधत्वम् अन्नब्रह्मणोः समानो धर्मः अन्ने ब्रह्मदृष्टिप्रयोजक उक्तो भवतीति भावः । अन्नाद् भूतानि इति भूतजन्मवृद्धिहेतुत्वमपि समानो धर्मः अन्नब्रह्मणोः इति भावः । सम्प्रति अन्नशब्दस्य निर्वचनं श्रुतिः स्वयमेव कुरुते **अद्यते** इति । भूतैः भक्ष्यते इत्यन्नम् । **अत्ति** भक्षयति **भूतानि** - स्वस्मिन् प्रविलापयति इत्येतत्, तस्मादन्नम् । भूतैः अद्यमानत्वं भूतसंहर्तृत्वं च अन्नशब्दप्रवृत्तिनिमित्तम् इत्यर्थः । *अन्नं मृत्युं तमु जीवातुमाहुः* (तै.ब्रा.२-८-८) इति श्रुतिरपि तदर्थं दृढयति । **इति**शब्दः प्रथमस्य अन्नमयकोशस्य उपदेशपरिसमाप्तिद्योतकः । अन्नमयकोशप्रतिपादनं परिसमाप्तमिति तदर्थः ।

*ब्रह्मविदाप्नोति परम्* इति सूत्रभूतब्राह्मणोपदिष्टात् आत्मनः एव आकाशादिक्रमेण अन्नरसमयशरीरपर्यन्तस्य उत्पत्तिः प्रदर्शिता **तस्मात्** सर्वोपादानभूतः **स एव पर आत्मा** इति अन्नमयादि आनन्दमयान्तैः पञ्चभिः कोशैः स्थूलारुन्धतीन्यायेन प्रदर्शयितुम्

अन्नमयान्तर्गतं प्राणमयं प्रस्तौति - **तस्माद्वा** इति **तस्माद्** - ब्राह्मणोक्तात् एतस्मात् मन्त्रोक्तात् **अन्नरसमयात्** शरीररूपात् पुरुषादन्यो भिन्नः, **अन्तर** अन्नरसमयस्य अन्तर्गतः **आत्मा** सर्वेषाम् आकाशादीनाम् उपादानरूपतया यः उक्तः स आत्मा इत्यर्थः । कः स इत्याकांक्षायामाह **प्राणमयः** । एतेन अन्नरसमयात् प्राणमये परमात्मबुद्धिः सङ्क्रामिता अन्नरसमयस्य अनात्मत्वं च ध्वनितं भवति । **तेन** प्राणमयेन अन्तर्भूतेन **एषः** अन्नरसमयः, **पूर्णः** व्याप्तः । अन्नरसमयशरीरस्य सम्पूर्णस्य प्राणमयाभिव्याप्तत्वात् । **एषः** प्राणमयः, **पुरुषविध एव** - पुरुषस्य अन्नरसमयस्य विधा इव विधा प्रकारो यस्य सः पुरुषाकारः एव इत्यर्थः । **तस्य** अन्नरसमयस्य, **पुरुषविधताम्** शरीराकारतां शिरः पाण्यादि आकारविशिष्टताम् **अनु** अनुलक्ष्य **अयम्** प्राणमयः **पुरुषविधः** पुरुषाकारः, शिरःपक्षादिविशिष्टतया पञ्चप्रकारः इत्येतत् । स्वतोऽयं प्राणमयः पुरुषाकारो नास्तीति भावः । प्राणमयस्य प्राण एव शिरः, वायुविकारभूतस्य प्राणमयस्य वायुविकारभूता मुखनासिकाभ्यां निर्गमनशीलः **प्राण एव शिरः** शिरस्त्वेन कल्पितः । **व्यानः** - सर्वशरीरगमनशीलः, प्राणविशेषः एव **दक्षिणः** - दक्षिणपक्षत्वेन कल्पितः । **अपानः** गुदप्रदेशस्थोऽपानवायुः प्राणविशेषः एव **उत्तरः पक्षः** वामपक्षत्वेन रूपितः । **आकाश** - आकाशस्थितः समानाख्यो वायुः प्राणविशेषः एव **आत्मा** मध्यस्थत्वात् मध्यमाङ्गस्य आत्मत्वश्रवणात् । **पृथिवी** - पृथिव्यभिमानिनी देवता शरीरगतस्य प्राणस्य आधारभूतत्वात् **प्रतिष्ठा** धारयित्री ; अन्यथा प्राणमयस्य उदानवृत्त्या उर्ध्वगमनापत्तेः । **तदप्येष श्लोकः** वक्ष्यमाणः श्लोकः **भवति** । प्राणमयरूपः आत्मा वक्ष्यमाणेन श्लोकेनापि प्रतिपाद्यत इत्यर्थः ।।

**सु.** अन्नमयः स्तूयते । **अन्नाद्वै** रसात्मना परिणतात् **प्रजाः प्रजायन्ते** । काः ताः ? **याः काश्च पृथिवीं श्रिताः** न संङ्ख्याताः, किन्तु असङ्ख्याताः पृथिव्याश्रयाः सर्वा एव प्रजाः । जाताश्च ता **अन्नेनैव जीवन्ति । अन्ततः** - अवसाने **एतदेवान्नम् अपियन्ति** - अभिसंविशन्ति । अन्ने विलीयन्ते इति यावत् । भूतानां पार्थिवानां सर्वेषाम् अन्नमेव हि - **यस्मात् ज्येष्ठम्, तस्मात् सर्वौषधमुच्यते** सर्वविधमौषधम् देहारोग्यकरम् उच्यते । **ये अन्नं ब्रह्मेत्युपासते ते सर्वमन्नमाप्नुवन्ति** । अन्ने ब्रह्मदृष्टौ निमित्तं समानगुणयोगमाह **अन्नं हि** इत्यादिना । ब्रह्म सर्वतो ज्येष्ठम्, इदं च भूतेभ्यः, ब्रह्म तापत्रयदाहनिवारकत्वांत् परमम् औषधम्, इदं च प्रायो देहोपचायकमिति सर्वौषधम् । भूतज्येष्ठत्वमुपपाद्यते **अन्नात्** इत्यादिना । ब्रह्मदृष्टिनिमित्तभूतगुणसाम्यमेव वा । **अन्नाद्भूतानि जायन्ते**

जीवन्ति, वर्धन्ते च । भूतजननादिहेतुत्वसाम्यात् अन्ने ब्रह्मदृष्टिः युक्ता इति भावः। अन्नशब्दनिर्वचनमाह - **अद्यते** इति । इदमपि स्तुतिशेषभूतम् । यस्मात् अनुदिनं सर्वैः भूतैः अद्यते, अत एव अदनकर्मत्वात्, स्वयमत्ति च अन्ते भूतानि, तस्मात् अदनकर्तृत्वाच्च अन्नमुच्यते । इतिः समाप्तौ । आकाशादिक्रमेण आत्मनः सम्भूतो यः पुरुषः प्रस्तुतः सोऽयम् अन्नरसमयो निरूपितः । यद्वेदनात् आप्नोति परम्, यतः तस्मात् आत्मन इदम् आकाशादिपुरुषान्तं जगत्, तम् आत्मानं स्थूलारुन्धतीन्यायेन प्रदर्शयन् उपक्रमते **तस्माद्वा** इति । यः सर्वस्य उपादानम् आत्मा स एतस्मिन्नेव अन्तर्वर्तते, अस्मात् अन्नरसमयात् अन्यः स कः ? प्राणमयः, सर्वान्तरस्य सर्वतः सूक्ष्मतमस्य आत्मनः सहसा सोऽयम् इति बोधयितुम् अशक्यतया प्राणमयादिक्रमेण तदवबोधनम् । यद्यपि पामराः अन्नरसमयात् न अपरं मन्येरन् आत्मानम्, परम् अस्मात् अन्नरसमयात् अन्य एव स इति अन्नरसमयात् प्रच्याव्य आत्मदृष्टिं तस्यान्तरे क्वचित् सा दृष्टिः प्रथमं सङ्क्रामिता, क्रमशः ततः ततः प्रच्याव्य साक्षादन्तरात्मनि आनन्दमये परब्रह्मणि तां दृष्टिं व्यवस्थापयिष्यति । योऽयं पञ्चवृत्तिः प्राणः स प्राणवृत्तिप्राचुर्यात् प्राणमयः उच्यते । **तेन** प्राणमयेन, **एषः** अन्नरसमयः, **पूर्णः** व्याप्तः । सोऽयं प्राणमयोऽपि **पुरुषविध एव** - पुरुषाकृतिरेव। न वास्तवं पुरुषाकृतित्वम् । किन्तु तस्य अन्नरसमयस्य पुरुषविधताम् **अनु** - अनुकृत्य अयमपि पुरुषविधः । अत्रापि शिरःपाण्यात्मपुच्छात्मना पुरुषविधता निरूप्यते इति भावः । किं शिरः ; कौ पक्षौ ; कः आत्मा, किं पुच्छम् ? आह **प्राण**ः इत्यादि । **प्राणः** प्राणवृत्तिः । **आकाश आत्मा** मध्यकायः, आकाशाधारो हि अयं वायुः प्राणः, **पृथिवी पुच्छं प्रतिष्ठा** मध्यकायस्थानीयस्य आकाशस्य हि पृथिव्याः उपरिस्थितिः । तत् मध्यकायाश्रयत्वेन पुच्छत्वेन निरूपणम् । यद्वा **आकाशः** आकाशस्थो वायुवृत्तिविशेषः समानाख्यः । **पृथिवी** - पृथिव्यधिष्ठिता देवता । सा हि आध्यात्मिकस्य प्राणस्य धारयित्री इति । **तत्** तस्मिन् प्राणमये, **एष** - वक्ष्यमाणः, **श्लोको भवति** ।।

## तृतीयोऽनुवाकः

**[प्राणमयकोशमीमांसा]**

**प्राणं देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यत इति ।**

**तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात् प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तर पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।।**

।। इति तृतीयोऽनुवाकः ।।

**प्र.दी. - प्राणं देवा** इति । **देवाः** - ब्रह्मरुद्रादिदेवाः, **प्राणम् अनु** - अनुसृत्य, **प्राणन्ति** प्राणाधीनजीवनाः भवन्ति इत्यर्थः । **मनुष्याः** इति । **ये मनुष्याः ये च पशवः** ते सर्वे प्राणिनः **प्राणन्ति** जीवन्ति । **प्राणो हि** इति । **भूतानाम्** सर्वभूतानाम्, **प्राणः आयुः** उच्छ्वसन निश्वसनलक्षणहेतुः इत्यर्थः । **तस्मात्** उच्छ्वसननिश्वसनहेतुत्वात् प्राणस्य, **सर्वायुषमुच्यते** इति - सर्वभूतायुः इत्युक्तं भवति । **सर्वमेव त** इति । **ये** - एवंलक्षणं, **प्राणम् ब्रह्म** इति **उपासते** प्राणे ब्रह्मदृष्टिं कुर्वन्ति । **ते** सर्वमेव **आयुः यन्ति** - प्राप्नुवन्ति । **प्राणो हि** इति । **प्राणः** भूतानामायुः खलु । **तस्मात्** आयुर्भूतत्वात् । **प्राणः सर्वायुषमुच्यत** इति सर्वभूतानामायुः इत्युक्तः ।

**तस्यैष** इति । **यः** - आत्मा, **पूर्वस्य** - अन्नमयस्य, **शारीरः** - शरीरप्रतिसम्बन्धी, **आत्मा** सः प्राणमयस्यापि शारीरः शरीरप्रतिसम्बन्धी आत्मा इत्यर्थः । अनेन आत्मशब्दस्य स्वरूपार्थत्वभ्रान्तिः निरस्ता भवति । ततश्च अन्नमय-प्राणमयौ एकात्मकौ । न तु अन्नमयस्य प्राणमयः आत्मा इत्यर्थः । तर्हि अन्नमय-प्राणमययोः आत्मा कः इत्याकाङ्क्षायामाह **तस्माद्वा** इति । **तस्माद्वा** - पूर्वमन्त्रनिर्दिष्टादेव, **एतस्मात्** - प्राणमयकोशात् **अन्यः** - यः, **मनोमयः** स एव, **अन्तरः आत्मा** परमात्मा । **तेन** इति । **तेन** मनोमयपरमात्मना, **एषः** - प्राणमयकोशः, **पूर्णः** - व्याप्तः । **स वा** इति । **स वा** प्रसिद्धः, **एषः** मनोमयकोशोऽपि, **पुरुषविध एव** - पुरुषाकृतिरेव इत्यर्थः । **तस्य** इति । **तस्य** - प्राणमयकोशस्य, **पुरुषविधताम्** पुरुषाकारत्वम्, **अनु** अनुकृत्य, **अयम्** प्राणमयकोशोऽपि **पुरुषविध एव** शिरःपक्षपुच्छादिदेहविशिष्टः । तदेव आह **तस्य** इति । अत्रत्यमनोमयशब्दः प्राचुर्यार्थे मयट् । **तस्य** - मनोमयकोशस्य **यजुरेव शिरः** यजुर्वेदविषयकज्ञानक मनोव्यापारः शिरःस्थानं मुख्यस्थानम् । यजुर्वेदस्य मनस्सम्बन्धाभावे मनसः शिरस्त्वारूपणासम्भवात् इति मन्तव्यम् । एवम् ऋग्वेदसामवेदयोरपि

दक्षिणोत्तरपक्षत्वेऽपि तत्तद्वेदविषयकमनोव्यापार इति द्रष्टव्यम् । **आदेश आत्मा** इति । इदं *कुरु, इदं मा कुरु* इत्यनुशासनरूपः **आदेशः** इत्युच्यते । तज्जन्यज्ञानहेतुः अन्तःकरणवृत्तिः आदेशः इत्युच्यते । **अथर्व** इति । **अथर्वाङ्गिरसः** अथर्वणवेदमन्त्राः, **पुच्छं प्रतिष्ठा** - पुच्छवत् आधारभूता इत्यर्थः । तन्मन्त्रजन्यज्ञानहेतुभूतमनोव्यापारः पुच्छं प्रतिष्ठा इत्युच्यते । **तत्** इति । **तत्** - तस्मिन्नेवार्थे ब्राह्मणोक्ते **एषः** - मनोमयात्मबोधक **श्लोको भवति** - अयमेव प्राणमयकोशान्तर्वर्तिमनोमयः परमात्मा अयमेव मनोमयकोशः इत्युच्यते ।।

**तै.भा.** - तत्र हेतुमाह **प्राणो हि** इति । **भूतानाम्** - उक्तदेवादीनाम् **आयुः** - आयुः हेतुः । तदेतत् प्राणसंवादे व्यक्तम् । उक्तेऽर्थे पूर्वसंवादं दर्शयति **तस्मात्** इति । **तस्मात्** - प्राणनात् हेतोः **सर्वायुषम्** - सर्वमायुः, योगविभागात् समासान्तः, **उच्यते** सद्भिरिति शेषः । प्रसङ्गात् तद्विषयोपासनं विधत्ते **प्राणो हि** इत्यादि । पुनर्वचनम् उपासनफलप्रापकत्वदर्शनाच्च । आत्मनः आकाशः इत्यादिना परमपुरुष एव कार्यसमापनापुरुषपर्यन्तस्यैव आत्मा ब्रह्मेति प्रतीयतेऽपि अवधानाच्च न प्राणस्येति ताम् इमां प्रतीतिं वारयितुं आह **तस्येति** ।

यः पूर्वस्य अन्नमयस्य आत्मा एष एव तस्य प्राणमयस्यापि आत्मा । तत्र हेतुविवक्षया आह **शारीर** इति । शरीरसम्बन्धी **शारीरः** । प्राणात् आकाशादिकमेव शरीरमित्यवगम्यते । आकाशादिशरीरक एव अस्यापि शरीरमित्यर्थः ।

अथ प्राणमयात् सूक्ष्मं तदन्तरात्मानम् उपदिशति **तस्माद्वा** इत्यादि । मनोमयः इत्यत्रापि मयट् स्वार्थिकः । अन्तरात्मत्वम् उपपादयति **तेन इति** । अस्मादपि सूक्ष्मम् उपदेष्टुमस्य बुद्ध्यारोहाय पुरुषविधत्वमाह **स वा** इति । संसारात्मना यजुरादिधारणस्थानत्वात् मनसो यजुरादिशिरस्कत्वं आदेशो यजुरादित्रयस्य ब्राह्मणम् । **अथर्वाङ्गिरसः** चतुर्थो वेदः......(?) च्छब्दम् । तदेतत् यज्ञमयादि वैलक्षण्येन प्रशंसति **तदप्येष** इत्यादि ।।

**प्र.** - **प्राणम्** इति । देव-मनुष्य-पशवः **प्राणम् अनुप्राणन्ति** - प्राणाधीनजीवना इत्यर्थः । **प्राणो हि** इति । यस्मात्सर्वेषां भूतानां *यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः* (कौ.उ.३-१५) इति प्राणस्य उच्छ्वसन-निश्वसनादिलक्षण सर्वभूतायुर्हेतुत्वम्, अत एव *प्राण एव सर्वेषामायु*ः इत्युच्यते इत्यर्थः । **सर्वमेव** इति । एवं लक्षणे प्राणे [1]ब्रह्मबुद्धिं[1] कुर्वन्तः सर्वमायुः प्राप्नुवन्ति इत्यर्थः ।

---

1. ब्रह्मबुद्धिम् - अ,क,ख ।

एवं प्राणमये आकाशादि अन्नमयान्तस्य [1]अन्तरात्मत्वबुद्धिं[1] अवतार्य तां बुद्धिं निवर्तयति **तस्यैष** इति । **पूर्वस्य** अन्नमयस्य यः आत्मा एष एव तस्य प्राणमयस्यापि आत्मा इत्यर्थः । **शारीरः** शरीरप्रतिसम्बन्धी आत्मा इत्यर्थः । अनेन **आत्म** शब्दस्य स्वरूपार्थत्वभ्रान्तिः व्युदस्ता भवति । ततश्च अन्नमय-प्राणमयौ एकात्मकौ । न तु अन्नमयस्य प्राणमयः आत्मा इत्यर्थः । तर्हि अन्नमयप्राणमययोः कः आत्मा इति आकाङ्क्षायाम् आह **तस्माद्वा** इति । अत्र **मनोमय** इत्यत्र प्राचुर्यार्थे मयट् । मनोबुद्ध्यहंकारचित्ताख्यान्तः-करणवृत्तिषु मनोवृत्तेः प्रचुरत्वात् । **तेनैष** इत्यादि । पूर्ववदर्थः । **तस्य** इति । **तस्य** - अन्तःकरणस्य यजुर्वेदविषयज्ञानजनकमनोव्यापारः शिरः इत्यर्थः; मुख्यार्थस्य यजुर्वेदस्य मनस्सम्बन्धाभावेन मनश्शिरस्त्वरूपेण असम्भवादिति द्रष्टव्यम् । एवम् उत्तरत्रापि । **आदेश आत्मा** इति । *इदं कुरु, इदं मा कार्षीः* इति विधि-निषेधरूपं रहस्यानुशासनं आदेशशब्देन उच्यते । **अथर्व** इति । अथर्वाङ्गिरोभिः दृष्टा मन्त्राः प्रतिष्ठाहेतुभूतं **पुच्छम्** इत्यर्थः । अत्रापि **अथर्वङ्गिरश्शब्दः** तज्जन्यज्ञानहेतुभूतमनोव्यापारपरः।।

**कू.भा. प्राणं देवा अनुप्राणन्ति** पञ्चधावस्थितप्राणम् अनुसृत्य ब्रह्मादयश्च उच्छ्वसन्ति । **मनुष्याः पशवश्च ये** न विशेष इत्यर्थः । **प्राणो हि भूतानां आयुः** स्थावरजङ्गमानाम् आयुश्च स एव । *यावदस्मिन् शरीरे प्राणो वसति तावदायुः इति* (कौ.उ.३-१५) । **तस्मात्सर्वायुषमुच्यते** मारुतो जगत्प्राणः उच्यते । स्वार्थे तद्धितः । यद्वा सर्वेषाम् आयुः । **सर्वमेव त आयुर्यन्ति** - यावदपेक्षितमायुः तत्सर्वम् आप्नुवन्ति । **ये प्राणं ब्रह्मोपासते** - प्राणसमष्टिविषये ब्रह्मदृष्टिं ये कुर्वते, ब्रह्मदृष्ट्या ये तम् उपासते ते तथा भवन्ति इत्यर्थः । **प्राणो हि भूतानामायुः तस्मात्सर्वायुषमुच्यत इति** ब्रह्मसदृशतया अध्येयरूपमिति समानम् एतदित्यर्थः । *को ह्येवान्यात्कः प्राण्यात्* (तै.उ.आन.७) इति हि द्वयमपि वक्ष्यति । **इतिः** श्लोकसमाप्तौ । **तस्यैष एव शारीर आत्मा । यः पूर्वस्य** अन्नमयस्य आकाशादिपंचभूतमयस्य आत्मत्वेन यो निर्दिष्टः *तस्माद्वा एतस्मादात्मन आकाश* (तै.उ.आन.१) इति स एव प्राणमयस्यापि शारीरः आत्मा । शारीरः शरीरसंबन्धी । *मनोमयः प्राणशरीरः* (छां.उ.३-१४-२, मैत्रा.उ.२-९) इति श्रुत्यन्तरं च ।

कथम् अन्नमयस्य परमात्मा आत्मा इत्यवगम्यते ? इत्थं, *तस्माद्वा एतस्मादात्मन* (तै.उ.आन.१) इत्याकाशादि सकलकारणत्वेन प्रज्ञातजीवव्यतिरिक्तस्य ब्रह्मणः

---

1. आत्मत्वबुद्धिं - ग,घ ।

एवात्मत्वव्यपदेशात् व्यतिरिक्त आकाशादीनां तत्संघातरूपस्य अन्नमयस्य च सुबालमाध्यन्दिनकाण्वादिपठिततत्त्वानां तच्छरीरकत्व-तदात्मकत्वादि अवगमाच्च । अतः तस्माद्वा एतस्मादित्यत्रैव अन्नमयादि आनन्दमयपर्यन्तानां परमात्मा एव आत्मा इत्यवगम्यते । अतः श्रुत्यन्तरैश्च यः पूर्वस्य आत्मा इत्यवगतः स एव प्राणमयस्यापि आत्मा इति समंजसम् ।

कथं तर्हि प्रस्तुतम् आत्मानं परित्यज्य अप्रकृतजीवस्य यः पूर्वस्य इत्यनुवादः ? उच्यते, *तस्माद्वा एतस्मात्प्राणमयात्* इति श्रेष्ठप्राणग्रहणेन सर्वबाह्येन्द्रियसंग्रहश्च । *सप्तप्राणाः प्रभवन्ति* (महा.ना.उ.६७) *सप्त वै शीर्षण्याः प्राणाः* (तै.उ.सं.७-३-१०), *तथा प्राणा* (ब्र,सू.२-४-१) इति श्रुतिसूत्रेषु प्राणशब्देन इन्द्रियवचनात् । प्राणसंवादाच्च । उत्तरानुवाकेन *अन्नं प्राणं चक्षुश्श्रोत्रमिति* (तै.भृ.१) कण्ठोक्तत्वाच्च ।

*भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।*
*आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ।।* (वि.पु.५-१८-५०)

इति श्रीविष्णुपुराणैककण्ठ्याच्च ।

ननु अन्नमयशब्देन भूतानां ग्रहणं चेत् कथं पंचवृत्तेः प्राणस्य पृथक् ग्रहणम् ? उच्यते, वायुकार्यतया अन्तर्वायुमात्रं प्राण इति सूत्रकारेण साधितम् । *न वायुक्रिये पृथगुपदेशात्* (ब्र.सू.२-४-८) इति ।

**अन्योऽन्तर आत्मा मनोमयः** अत्र प्राचुर्यार्थो मयट् । मनोबुद्ध्यहंकार चित्ताख्यान्तःकरणवृत्तिषु मननाख्यमनोवृत्तेः प्रचुरत्वात् । **तेनैषपूर्णः, स वा एष पुरुष विध एव तस्य पुरुषविधतां, अन्वयं पुरुष विधः** इति गतार्था । **तस्य यजुरेव शिरः** अन्तःकरणस्य यजुर्वेदविषया वृत्तिः शिरः । धर्मतत्त्वतया च चतुराश्रमादि प्रतिपादकं यजुरेव अनेकशाखम् । **ऋग्दक्षिणः पक्षः ऋ**ग्वेदो होत्रादिपरः, तद्विषया वृत्तिः मनसो दक्षिणो बाहुः । **सामोत्तरः पक्षः** - सामवेदस्तु पित्र्यः स्यादिति सव्यः पक्षः सामा । **आदेश आत्मा** *तत्त्वमसि* (छां.उ.६-८-७) इति अवेहि इति ज्ञापनरूपा तदङ्गतया यजेत इति प्रवर्तनरूपा च एवंविधसांगात्मज्ञानविधिविषयमनोवृत्तिः प्रधानभूतं मध्यशरीरभूतं च । **अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा** अथर्वाङ्गिरोभिः दृष्टाश्च मन्त्राः अथर्वाङ्गिरसः, शान्तिक-पौष्टिक-नानाप्रतिज्ञानशेषपराः, ब्रह्मत्वं चापि अथर्वभिः इति च । **तदप्येष श्लोको भवति** - एवम् अखिलवेदावगाहि निपुणं मनोमयं च अभिमुखीकृत्य श्लोक आम्नायते।।

**आ.भा. - देवा** इन्द्रब्रह्मादयः **ये मनुष्या पशवः** - गोमहिषादयश्च सर्वे **प्राणम्** प्राणनशक्तिविशिष्टं प्राणवायुम् इत्येतत् । **अनु** अनुसृत्यैव, **प्राणन्ति** जीवन्ति

प्राणाधीनं जीवनम् एतेषाम् । कथम् इदम् इत्यत्राह **प्राण** इति । **भूतानामायुः** सर्वेषां प्राणिनाम् उच्छ्वासनिश्वासलक्षणं जीवनं प्राण एव । **हि** निश्चितम् इत्यर्थः । यस्मादेवं तस्माद्धेतोः प्राणः **सर्वायुषम्** सर्वेषामायुः **सर्वायुषं** सर्वजीवनम् इति **उच्यते** - कथ्यते प्राणतत्त्ववेदिभिः । अन्या श्रुतिरपि एतदर्थसमर्थिका *यावद्धि अस्मिन् शरीरे* **प्राणो वसति तावदायुः** (कौ.उ.३-१५) इति । **ये प्राणं ब्रह्मेत्युपासते** प्राणे ब्रह्मदृष्टिं कुर्वन्ति प्राणो ब्रह्मेति ते सर्वमेवायुः पूर्णं जीवनं **यन्ति** प्राप्नुवन्ति । *शतमायुः मनुष्याणाम्* इत्युक्तरीत्या शतवर्षपर्यन्तं जीवनं लभन्त इत्येतत् । प्राणे ब्रह्मदृष्टिं कुर्वाणानां न अपमृत्युप्राप्तिः भवति इति भावार्थः । प्राणस्य ब्रह्मत्वेनोपासने पूर्णजीवनलाभ इत्यत्र हेतुम् उपदर्शयति **प्राणो हि भूतानामायुः** । यतः **भूतानाम्** जीवननिदानं प्राणः **सर्वायुषम्** इत्युच्यते प्राण इत्यर्थः । **पूर्वस्य** अन्नमयस्य यः **शारीरः** शरीरसम्बन्धी शरीरान्तर्गत **आत्मा** एव **तस्य** प्राणमयस्यापि आत्मा । एतेन प्राणमये समुपसंक्रामिताऽन्तरात्मत्वबुद्धिः अन्यत्रोपसङ्क्रामिता भवति । स्थूलारुन्धतीन्यायेन परशब्दवाच्यपरमात्मानमेव ग्राहयितुं पञ्चकोशकल्पना इति पूर्वोक्तं न विस्मर्तव्यम् ।

कः पुनः अनयोः अन्नमय-प्राणमययोः अन्तरात्मा इति जिज्ञासायाम् आह **तस्मात्** इति । **तस्मात्** ब्राह्मणोक्तात्, **एतस्मात्** मन्त्रोक्तात्, **प्राणमयादन्यः** प्राणमयस्यापि **अन्तरो** - अन्तर्गत **आत्मा** *मनोमयः* - मनोवृत्तिप्रचुरः । **तेन** मनोमयेन, **एषः** प्राणमयः, **पूर्णो** व्याप्तः । आन्तरत्वात् मनोमयस्य प्राणमयापेक्षया तस्मात् प्राणमयस्य मनोमयव्याप्तत्वम् इति भावः । **स एव** मनोमयः, **पुरुषविध** एव पुरुषाकार एव । **वै शब्दो**ऽवधारयति इममर्थम् । मनोमयस्य पुरुषविधता न स्वत एव, किन्तु प्राणमयस्य पुरुषविधताम् अनुसृत्यैव सेत्याह **तस्य** इति । **तस्य** प्राणमयस्य, **पुरुषविधताम्** पुरुषाकारताम् **अनु** अनुसृत्य, **अयं** मनोमयः **पुरुषविधः** - पुरुषाकारो भवति इति शेषः । पुरुषविधतोपयोगिनः शिर आदिकान अवयवान् रूपयति **तस्य** इति । **तस्य** मनोमयस्य **शिरो यजुरेव** यजुर्वेदार्थविषयकज्ञानोत्पादकमनोव्यापार एव शब्दात्मकस्य यजुषो बाह्यस्य आन्तरेण मनोमयेन साक्षात् सम्बन्धासम्भवात् शिरस्त्वकल्पना न सम्भवति इत्येवमर्थः कल्पनीय एव । **ऋक्** ऋग्वेदार्थविषयकज्ञानजनकमनोव्यापारः **दक्षिणः पक्षः** । सामार्थविषयकज्ञानजनकमनोव्यापारः **उत्तरः पक्षः** । **आदेशो** विधिनिषेधरूपः विधिनिषेधवाक्यार्थविषयकज्ञानजनकमानसव्यापारः, **आत्मा** मध्यत्वाद् विधिनिषेधरूपादेशस्य वेदानाम् । सः विधिः एवं कर्तव्यम् इत्याकारः । नैवं कार्यम् इत्याकारो

निषेधः । **अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा** इति । अथर्वा नाम कश्चिदृषिः, अङ्गिराश्च ताभ्यां दृष्टा मन्त्रा **अथर्वाङ्गिरसः** तद् दृष्टमन्त्रार्थज्ञानजनको मानसो व्यापारः एव प्रतिष्ठाकरणं **पुच्छं** तेषां मन्त्राणां प्रतिष्ठाहेतुभूतशान्तिकादिकर्मबोधकत्वात् तत्र प्रतिष्ठाहेतुपुच्छत्वोपचारः । **तदप्येष श्लोको भवति** । **एष** - वक्ष्यमाणो मन्त्रः तदर्थस्य प्रकाशको भवति । मनोमयम् आत्मानं प्रकाशयति इत्येतत् ।।

**सु. - देवा मनुष्याः पशवश्च** सर्व एव **प्राणम् अनुप्राणन्ति** जीवन्ति, प्राणायत्तजीवना इति यावत् । कस्मात् ? **प्राणो हि भूतानामायुः**, श्रूयते च अन्यत्र *यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदेवायुः* (कौ.उ.३-१५) इति । **तस्मात् सर्वायुषमुच्यते** - आयुरेव आयुषम् । **ये प्राणं ब्रह्मेत्युपासते ते सर्वमेव आयुः** पूर्णमायुः, **यन्ति** प्राप्नुवन्ति, न तेषाम् अपमृत्युः इति यावत् । तत्र हेतुः उच्यते - प्राणो हि भूतानाम् इत्यादि । अत एव न पौनरुक्त्यम् । एवं प्राणमये समारोपिताम् आत्मबुद्धिं ततोऽन्यत्रापसारयति **तस्यैष एव शारीर आत्मा यः पूर्वस्य** इति । सोऽयं प्राणमय एव अन्नमयान्तस्य कार्यवर्गस्य आत्मेति न मन्तव्यम्, तस्य प्राणमयस्यापि अन्य एव भवति **शारीर आत्मा** - यस्य इदं सर्वं शरीरम् स शारीर आत्मा **यः पूर्वस्य** अन्नमयस्य । अन्नमय इव प्राणमयोऽपि नान्तरात्मा, उभयोः तयोः अन्य एव अन्तरात्मा इत्येतत् । स कः ? आह - **मनोमय** इति मनोवृत्तिप्राचुर्यात् **मनोमय** उच्यते । **तेनैष पूर्णः** इत्यादि व्याख्यातप्रायम्। **यजुरेव शिरः** यद्यपि यजुरादि वाग्रूपम्, अथापि तत्तद्विषयकज्ञानजनकमनोव्यापार इह यजुरादिशब्देन विवक्षितः । **आदेशः** - विधिनिषेधलक्षणम् अनुशासनम् । **अथर्वाङ्गिरसः**- तैः दृष्टा मन्त्रविशेषाः । तन्मनोमयमधिकृत्य एष वक्ष्यमाणः, श्लोको भवति ।।

## चतुर्थोऽनुवाकः

[विज्ञानमयकोशमीमांसा]

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात् पुरुषविध एव ।। १ ।।**

**तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।। २ ।।**

।। इति चतुर्थोऽनुवाकः ।।

**प्र.दी. यतो वाचो निवर्तन्ते** इति । **यतः** यस्मात् ब्रह्मानन्दात्, **वाचः**, वचांसि, **मनसा सह अप्राप्य निवर्तन्ते** इयत्तालक्षणं पारम् अप्राप्य निवर्तन्त इत्यर्थः । आनन्दम् इति । **ब्रह्मणः** - परब्रह्मणः **आनन्दम्** - ब्रह्मसम्बन्धि आनन्दम्, **विद्वान्** - वेत्ता यः ज्ञानी सः, **कदाचन** भूतभविष्यद्वर्तमानकालेऽपि, **न बिभेति** - संसारभयं न प्राप्नोति इत्यर्थः । अत्र ब्रह्मानन्दस्य *मनसा तु विशुद्धेन* (व्या.स्मृ.?) विशुद्धमनोगोचरत्वम् अस्ति इति द्रष्टव्यम् ।

**तस्यैष** इति । **पूर्वस्य** - प्राणमयस्य, **यः आत्मा** - स एव, **तस्य** - मनोमस्यापि, **एषः शारीरः** शरीरप्रतिसम्बन्धी आत्मा इत्यर्थः । तथा च अन्नमय-प्राणमय-मनोमयानाम् एक आत्मा इत्युक्तम् । स कः ? इत्याकाङ्क्षायाम् आह **तस्माद्वा एतस्मात्** इति । **तस्माद्वा** - पूर्वमन्त्रनिर्दिष्टादेव, **एतस्मात्** मनोमयकोशात् **अन्यः** यः **विज्ञानमयः**[1] स एव **अन्तरः आत्मा** । **तेन** इति । **तेन** विज्ञानमयेन, **एषः** मनोमयकोशः, **पूर्णः** - सम्पूर्णःव्याप्त इत्यर्थः । **स वा** इति । **स वै** प्रसिद्धः । **एषः** विज्ञानमयकोऽशोऽपि, **पुरुषविध एव** - पुरुषाकृतिरेव इत्यर्थः । **तस्य** इति । तस्य मनोमयकोशस्य, **पुरुषविधताम् अनु** पुरुषाकारत्वम् अनुकृत्य, **अयम्** विज्ञानमयकोऽशोऽपि पुरुषविध एव । शिरःपक्षपुच्छयुक्तदेहविशिष्टः । तदेव आह **तस्य** इति । **तस्य** विज्ञानमयस्य, **श्रद्धैव शिरः** अत्र विज्ञानमयो जीवः, न बुद्धिमात्रम् । मयट् प्रत्ययेन व्यतिरेकप्रतीतेः । **ऋतं दक्षिणः पक्षः सत्यम् उत्तरः पक्षः** एते श्रद्धर्तसत्यशब्दाः जीवज्ञानम् इति शेष पराः । **योग आत्मा** - *ब्रह्मणे त्वा मा हस ओम् इत्यात्मानं युञ्जीत* (महा.ना.उ.७८) इति विहितज्ञानविशेषो योगशब्देन उच्यते । **महः पुच्छं प्रतिष्ठा** - योगविरोधिनिरसनसामर्थ्यलक्षणं महः **पुच्छम्** इत्यर्थः । एतेषां श्रद्धादीनां आत्मगुणत्वेन प्रसिद्धत्वात् तद्युक्तम् आत्मस्वरूपं शिरः-पक्ष-पुच्छयुक्ततया प्रतिपादितम् इति द्रष्टव्यम् । अतः स्वस्मात् अनतिरिक्तैः स्वावयवैः शिरः

---

१. **विज्ञानमयः** - *विविधं ज्ञायते अनेन इति विज्ञानधारमयो विज्ञानमयः । तेन मनोमयः व्याप्तः* इति भट्टभास्करभाष्ये ।

पक्षपुच्छादिरूपणपरत्वात् अस्य प्रकरणस्य न भाष्यविरोधः । **तत्** इति । तस्मिन्नेव अर्थे ब्राह्मणोक्ते, **एषः** - विज्ञानमयात्मबोधकः, **श्लोको भवति** अयमेव मनोमयकोशान्तर्वर्ति विज्ञानमयः परमात्मा अयमेव विज्ञानमयकोश इत्युच्यते ।।

**तै.भा. - यतो** - ब्रह्मानन्दात् **वाचो** - वागिन्द्रियाणि **मनसा सह अप्राप्य** - प्रकर्षेण अनाप्त्वा कार्त्स्न्येन न अगृहीत्वा **निवर्तन्ते,** तं **ब्रह्मणः आनन्दं विद्वान्** - अपरिच्छिन्नत्वेन जानन् **कदाचन न बिभेति** - यावत्कालं संसारभयं न प्राप्नोति इत्यर्थः ।

यद्यत्र वाङ्मनसाविषयत्वे ब्रह्मणा अवाच्यत्वम् उच्यते इत्युच्येत तदा विद्वान् इति विरुध्यते । न हि वाङ्मनसाविषयं वस्तु वेदनस्य विषयीभवितुम् अलम् । ब्रह्मज्ञानफलवाक्यस्यापि अस्य अत्र निवेशो *मन एव मनुष्याणां कारणं बन्धमोक्षयोः* (मैत्रा.उ.६-३४) इत्युक्तरीत्या मोक्षायापि आवश्यकं मनः किं पुनः इतरस्मै फलायेति मनस्तुत्यर्थः । तस्य इत्यादि गतम् ।

अथ मनसोऽपि सूक्ष्मं जीवात्मानं दर्शयति **तस्मात्** इति । अत्रापि मयट् स्वार्थिकः । ब्रह्मवदेकरूपज्ञानाभावेन कर्मतारतम्यं द्विविधम् । जानातीति विज्ञानं जीवः, विपूर्वाज्ज्ञानातेः *कृत्यल्युटो बहुलम्* (पा.सू.३-३-४३) इति कर्तरिल्युट्, नन्द्यादित्वात् ल्युप्रत्ययो वा *विज्ञानं यज्ञं तनुते* इत्यादिना कर्तृत्वावगमात् केवलज्ञानस्य कर्तृत्वास्वारस्याच्च विज्ञानं जीवः इति निर्धार्यते । **श्रद्धा** - आस्तिक्यम् । **ऋतम्** - मानसं तथ्यम् । **सत्यम्** - वाचिकतथ्यम् । गोनिरन्तरप्रत्ययः **महः** - प्रकाशः ज्ञानम् इति यावत् । मनः प्रभृतिभ्यो वैलक्षण्येन जीवात्मानं प्रशंसति - **तदप्येष** इति ।।

**प्र. - यतो वाचो** इति । यस्मात् ब्रह्मानन्दात् वाङ्मनसी इयत्तालक्षणं पारम् अप्राप्य [1]निवर्तेते[1], तादृशं ब्रह्मानन्दम्, *दृश्यते त्वग्र्यया बुद्ध्या* (क.उ.३-१-१२), *मनसा तु विशुद्धेन* (व्या.स्मृ.?) इत्युक्तरीत्या शुद्धेन मनसा ज्ञात्वा कदापि न बिभेति इत्यर्थः । अत्र ब्रह्मानन्दस्य [2]विशुद्ध[2]मनोगोचरत्वप्रतिपादकत्वात् [3]अस्य श्लोकस्य[3] मनोविषयत्वम् अस्ति इति द्रष्टव्यम् ।

**तस्यैष** इति । प्राणमयस्य य आत्मा सः एव मनोमयस्यापि आत्मा इत्यर्थः । एवञ्च अन्नमय-प्राणमय-मनोमयानाम् एक आत्मा इत्युक्तं भवति । सः कः ? इत्यपेक्षायाम्

---

1. निवर्तन्ते - अ,क । 2. विशुद्ध - क,ख,ग,घ । 3. अस्य - अ,ग,घ ।

आह इह **तस्माद्वा** इति । अत्र विज्ञानमयो जीवः ; न बुद्धिमात्रम् । मयट्प्रत्ययेन व्यतिरेकप्रतीतेः । **तस्य श्रद्धैव** इत्यादि । अत्र *श्रद्धा-ऋत-सत्य* शब्दाः ज्ञानविशेषपराः । *ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत* (महा.ना.उ.७८) इति विहितज्ञानविशेषो योगशब्देन उच्यते । **महः** इति योगविरोधिनिरसनसामर्थ्यलक्षणं महः **पुच्छम्** इत्यर्थः । एतेषां श्रद्धादीनाम् आत्मगुणत्वेन प्रसिद्धत्वात् तत्तदवच्छिन्नम् आत्मस्वरूपं [1]शिरःपक्षपुच्छादिमत्तया[1] प्रतिपाद्यत इति द्रष्टव्यम् । अतः स्वस्मात् अनतिरिक्तैः स्वावयवैः शिरः-पक्ष-पुच्छादिरूपणपरत्वात् प्रकरणस्य इति भाष्यस्य न विरोधः ।।

**कू.भा. - यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचनेति । यतः** *ते ये शतम्* (तै.उ.आन.८) इत्यनुक्रम्य निरतिशयदशाशिरस्कतया अभ्यस्यमानात् ब्रह्मणः आनन्दात् । **वाचो निवर्तन्ते** *सैषानन्दस्य मीमांसा भवति* (तै.उ.आन.८) इति ब्रह्मानन्दगणनायां प्रवृत्ताः वेदाः अवधिराहित्यादेव अवधिमपि अपश्यन्तो गगनकुसुमवदेव अवधिं मत्वा सनकादिपरमयोगिमनोभिः सहावधिः न दृष्टा इति निवर्तन्ते । तमेवंविधं ब्रह्मण आनन्दमयस्य आनन्दम् । **विद्वान्** *न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्च नैनम्, हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवति,* (महा.ना.उ.११) *न चक्षुषा गृह्यते नापि वाचा* (मुं.उ.३-१-८) *मनसा तु विशुद्धेन* (व्या.स्मृ.?) *तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः* (तै.उ.शि.६) *मनोमयः प्राणशरीरो भारूपस्सत्यकामस्सत्यसंकल्पः* (छां.उ.३-१४-२) *मन एव मनुष्याणां कारणं बन्धमोक्षयोः* (मै.त्रा.उ. ६-३४) *चिन्तयेत् मुक्तये तेन ब्रह्मभूतं परेश्वरम् मनसा ध्याननिष्पाद्यं समाधिस्सोभिधीयते* (वि.पु.६-७-९२) *विद्यात्तु पुरुषं परम्* (म.स्मृ.१२-१२२) इति श्रुति-स्मृत्युक्तप्रकारेण केवलं मनसैवाकलुषेण यजुरेव शिर इत्याद्युक्त श्रवणमननाद्यनुगृहीतेन विद्वान् **न बिभेति** - अनादिजन्मसंचितेभ्यः पाप्मभ्यः । **कदाचन** पुण्यपापयोर्निश्शेषम् उन्मूलनात्।

एवम् इन्द्रियशब्दितसकलप्रमाणैः द्रष्टुम् अनर्हस्य ब्रह्मानन्दमहार्णवस्य केवलं मन एव भक्तिसिद्धाञ्जनं दिव्यचक्षुरिति मनोवैभवस्तोत्रं भवति । क्रिमिकीटनरकादिभयेन विवर्तमानस्य भवभयार्णवमग्नस्य जीवस्य निश्शेषपापनिवृत्तिपूर्वकपरमानन्दप्राप्तिः केवलं मन आयत्ता, इति मनो माहात्म्यम् अनन्यसाधारणं उक्तम् । *तस्य यजुरेव शिर* (तै.उ.आन.३) इत्यादिना मनसः साङ्गसकलवेदश्रवणधारणादि सामर्थ्यम् उक्तम् । साक्षिमन्त्रेण तु परमात्मापरोक्ष्यसाधनत्वम् उक्तम् इति विभागः ।

---

1. पुच्छादिमत्तया - ग,घ ।

अत्राह *सत्यात्मप्राणारामं मन आनन्दम्* (तै.उ.शि.६) इति वचनात् ब्रह्मणो मनोवृत्तिरेव आनन्दम् इति वृत्तिशब्देन तथाविधमनोवृत्ति उक्ता इति, तदेतद्बहुप्रकार दुष्टम् । प्रकृतमनः प्रकरणविरोधः, केवलं मनोमयस्य तद्विषयत्वविरोध इत्यादि । **इतिः**श्लोकसमाप्तौ । **तस्यैष एव शारीर आत्मा, यः पूर्वस्य** उक्त आनन्दमहिमा प्राणसमष्टेः शारीरं आत्मैव एवंविध महामहिमायत्त मनोमयसमष्टेरपि शारीर आत्मा । यथाह *यस्य मनश्शरीरं यस्य बुद्धिश्शरीरं यस्याहंकारश्शरीरं यस्य चित्तं शरीरम्* (बृ.उ.५-७-२०) *इति, इन्द्रियाणां मनश्चास्मि* (भ.गी.१०-२२) *बुद्धिर्बुद्धिमतामस्मि* (भ.गी.७-१०) इति । **तस्माद्वा एतस्मान्मनोमयात्** - *कामस्संकल्पो विचिकित्साश्रद्धाधृतिस्मृतिर्ह्रीरित्येतत्सर्वं मन एव* (बृ.उ.३-५-३) इति श्रूयमाणात् अन्तःकरणचतुष्टयप्रधानात् मनोमयात् । **अन्योन्तर आत्मा विज्ञानमयः** विज्ञानमयो जीवः, न बुद्धिमात्रं, मयट् प्रत्ययेन व्यतिरेकप्रतीतेः । प्राणमयादौ मयडर्थसम्भव उक्तः, उत्तरत्र च प्राचुर्यार्थत्वं सूत्रोक्तं *विकारशब्दान्नेतिचेन्न प्राचुर्यात्* (ब्र.सू.१-१-१४) इति । अतो विज्ञानमयेपि विज्ञानवतो जीवस्य सम्भवात् न अर्थकत्वं न्याय्यम् । बद्धो मुक्तश्च प्रत्यगात्मा ज्ञाता एवेति च सूत्रकारेण साधितम् - *ज्ञोत एव* (ब्र.सू.२-३-१९) *यावदात्मभावित्वाच्च न दोषः* (ब्र.सू.२-३-३०) इत्यादिना । न *विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते* (बृ.उ.६-३-३०) विज्ञातारमरे केन विजानीयात् (बृ.उ.४-४-१४) इत्यादि श्रुतिशतं च । **आनन्दं ब्रह्मणो विद्वान्** इति मन- आयत्तज्ञानो जीवः प्रस्तुतश्च, सोयमन्तःकरणात् अन्य इत्यत्र उच्यते कर्तृत्वं वक्तुम् ।

कथं तर्हि विज्ञानमयविषये परस्मिन् श्लोके विज्ञानं यज्ञं तनुते इति केवल विज्ञानशब्दोपादानम् उपपद्यते ? ज्ञातुरेव आत्मनः स्वरूपमपि स्वप्रकाशतया विज्ञानम् इत्युच्यत इति न दोषः । ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुस्स्वरूपस्य । स्वरूपनिरूपकधर्मशब्दो हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयति, गवादि शब्दवत् । *कृत्यल्युटो बहुळम्* (पा.सू.३-३-११३) इति वा कर्तरि ल्युट् आश्रीयते । नन्द्यादित्वमाश्रित्य *नन्दिग्रहि* (पा.सू.३-१-१३४) इत्यादिना कर्तरिल्युट् । अत एव *विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च* (तै.आन.५) इति यज्ञादि कर्तृत्वं विज्ञानशब्दवाच्यस्य श्रूयते । बुद्धिमात्रस्य नहि कर्तृत्वं सम्भवति, अचेतनेषु चेतनोपकरणभूतेषु विज्ञानमयात् प्राचीनेषु अन्नमयादिषु चेतनधर्मभूतं कर्तृत्वं न श्रूयते । अत एव चेतनम् अचेतनं च स्वासाधारणैः निलयनत्वादिभिः धर्मविशेषैः विभज्य आनन्दमयात्मकत्ववचनाय निदर्शयत् वाक्यद्वयं *विज्ञानं चाविज्ञानं च* (तै.आन.३) इति विज्ञानशब्देन तद्गुणं चेतनं वदति । तथा अन्तर्यामिब्राह्मणे

*यो विज्ञाने तिष्ठन्* (बृ.उ.५-७-२६) इत्यस्य स्थाने य *आत्मनि* (बृ.उ.मा.पा.५-७-२२) इति पर्यायं अधीयानाः माध्यन्दिनाः काण्वपाठगतविज्ञानशब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति । विज्ञानमिति च नपुंसकलिङ्गवचनं वस्तुत्वाभिप्रायम् । *यद्यपि विज्ञानं तनुते* (तै.उ.आन.५) इत्यत्र ज्ञानमेव उपादीयते *तथापि अन्योन्तर आत्मा विज्ञानमयः* इति तद्वान् ज्ञातैव उपदिश्यते यथा, *अन्नाद्वै प्रजाः प्रजायन्ते* (तै.उ.आन.२) इत्यत्र श्लोके केवलान्नोपादाने अपि *स वा एष पुरुषोऽन्नरसमयः* (तै.उ.आन.१) इत्यत्र नान्नमात्रं निर्दिष्टं, अपि तु तन्मयस्तद्विकारः एवमर्थं हृदिनिधाय सूत्रकारो *भेदव्यपदेशाच्च* (ब्र.सू.१-१-१८) इत्याह । तेनैषपूर्णः इत्यादि **पुरुषविध** इत्यन्तं गतम् । **तस्य श्रद्धैव शिरः** - स्वाभाविकज्ञानवृत्तिभेदः **श्रद्धा,** महाविश्वासपूर्विका भक्तिगर्भा भगवदुपासनोद्योगत्वलक्षणा श्रद्धैव शिर । **ऋतं दक्षिणः पक्षः सत्यमुत्तरःपक्षः -** अत्रापि वृत्तिर्विवक्षिता ।

*आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।*
*तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ।।* (वि.पु.६-७-३१)

इति श्रीवैष्णवपुराणे । *ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत* (महा.ना.उ.७८) इति आत्म-परमात्म-सम्बन्धैकाग्र्यं ध्यानं योगः, आत्मा प्रधानशरीरम् ।

*स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।*
*आत्मदास्यं हरेस्स्वाम्यं स्वभावञ्च सदा स्मर ।।* (वि.त.?)

इत्यादि स्मृतिशतम् । **महः पुच्छं प्रतिष्ठा** । महः इति तद्ब्रह्मेति पूर्ववचनादत्रापि सर्वधर्माश्रयभूत स्वप्रकाशभूतं, पुच्छं प्रतिष्ठा च । योगविरोधिनिरसनसामर्थ्यं वा महः ।

*ज्ञानं वैराग्यमैश्वर्यं धर्मं च मनुजेश्वर ।*
*आत्मनो ब्रह्मभूतस्य सहसिद्धं चतुष्टयम् ।।*

इति भगवच्छौनकवचनात् आत्मस्वभावविशेषाः एव शिरःपक्षादित्वेन निरूपिताः । एते आत्मगुणा इति हि प्रसिद्धाः । **तदप्येष श्लोको भवति** श्रद्धापूर्वकममृतप्रापकं योगं मोक्षार्थी विज्ञानमय एव अनुतिष्ठति, स च महच्छब्दवाच्य ब्रह्मैकरसस्वरूप एव, स च मुमुक्षुभिः उपास्यश्चेति सन्दर्शयत् स्पष्टश्लोको भवति ।।

**आ.भा. - यतो** - यस्मात् अनवधिकाद् ब्रह्मानन्दात्, **मनसा** - असंस्कृतमनसा इत्यर्थः । **सह वाचो निवर्तन्ते** - परावृत्ता भवन्ति । किं कृत्वा इत्यत्राह - **अप्राप्य** - ब्रह्मानन्दस्य इयत्तालक्षणं पारम् अलब्ध्वा । ब्रह्मानन्दस्य वाङ्मनोगोचरत्वं नास्ति इत्यर्थः

**ब्रह्मणः आनन्दम्** वाङ्मनसयोः अविषयभूतं ब्रह्मानन्दं **विद्वान्** विशुद्धमनोद्वारा जानन् जनः **कदाचन** - क्वचिदपि काले **न बिभेति** जननमरणादिसंसारभयं न प्राप्नोति ।

ननु मनोमयात्मप्रकाशनाय प्रवृत्तोऽयं मन्त्रः इति प्रतिज्ञातं प्रकाशयति च ब्रह्मानन्दम् इति अश्लिष्टमिव आभातीति चेत् सत्यं ब्रह्मानन्दस्य विशुद्धमनोगम्यत्वं तु प्रकाशितं तावता एव मनसः स्तुतत्वात् मनोमयः आत्मा स्तुतः भवति अतो न अश्लिष्टमेतत् । एवं मनोमये समुपसंक्रामिताम् आत्मबुद्धिं तद्भिन्ने विज्ञानमये सङ्क्रामयितुम् उपक्रामयितुम् उपक्रामति **तस्यैषः** इति । **पूर्वस्य** - प्राणमयस्य, **यः** - शारीरः प्राणमयरूपशरीरमेव आत्मा यः स एवैषः आत्मा मनोमयस्य एतेन अन्नमयादिकोशत्रयस्य अपि एक एव आत्मा इत्युक्तं भवति । तर्हि कः स आत्मा इत्यत्राह - **तस्माद्** इति । **तस्मादेतस्मात्** ब्राह्मणमन्त्रोक्तात् इत्यर्थः । **अन्यः मनोमयात्** भिन्नः, **अन्तरः** - मनोमयस्यान्तर्गतः, **आत्मा विज्ञानमयः** । मनोमयपदेन वृत्तिप्रचुरस्य मनसः ग्रहणम् । विज्ञानमयपदेन तु मनोव्यापारजन्य विज्ञानप्रचुरो जीवः इति विवक्ष्यते । जीव एव मनोमयस्य आत्मा इत्यर्थः पर्यवस्यति । **तेनैष पूर्णः** । **तेन** - विज्ञानमयेन, **एषः** - मनोमयः, **पूर्णः** - व्याप्तः । जीवस्य तदन्तरत्वात् । जीवस्यापि पुरुषाकारम् उपदर्शयति - **स वा एषः** इति । **सः एषः** विज्ञानमयः मनोमयस्य आत्मतया य उक्तः । **पुरुषविधः एव** - पुरुषाकारः एव । परन्तु पुरुषाकारता अस्यापि न स्वतः इति दर्शयति - **तस्य** इति । **तस्य** - मनोमयस्य **पुरुषविधताम्** - पुरुषाकारम्, **अनु** अनुकृत्य **अयम्** - विज्ञानमयः जीवः पुरुषाकारो भवति । उपचरितपुरुषविधता अस्यापि इति भावः । पुरुषाकारत्वनिमित्तभूतान् अवयवान् शिर आदीन् अस्यापि प्ररूपयति - **तस्य श्रद्धा** इति । श्रद्धा च आस्तिक्यबुद्धिः । सैव विज्ञानमयस्य शिरस्थानीया इति । श्रद्धैव कर्तव्यार्थप्रवृत्तौ मूलम् अतः प्रधानत्वात् तत्र शिरस्त्वारोपः । **ऋतम्** इत्यपि विज्ञानमयस्य ज्ञानविशेषः एव । **ऋतम्** इति कर्मफलविज्ञानं लक्ष्यते तत्र दक्षिणपक्षत्वारोपः । **सत्यम्** इति । सत्यज्ञानविवक्षा । तत्र उत्तरपक्षत्वारोपः । **योगः** - योगजन्यम् परमात्मज्ञानम् । *ओमित्यात्मानं युञ्जीत* (महा.ना.उ.७८) इति श्रुतिप्रसिद्धम् । तत्र आत्मत्वोपचारः । मोक्षार्थत्वेन सर्वविज्ञानप्रधानत्वात् । **महः** पदं पूर्वोक्तानां सर्वेषां विज्ञानानां धारणौपयिकत्वात् योगोपरोधकविघ्ननिराससामर्थ्यं लक्षयति । तत्र प्रतिष्ठाकारत्वात् पुच्छत्वारोपः । एतदभावे कस्यापि विज्ञानस्य स्थैर्यासम्भवात् । **तदप्येष श्लोको भवति** । वक्ष्यमाणः श्लोकोऽस्य विज्ञानमयस्य प्रकाशको भवति ।।

**सु.** **यतः** - ब्रह्मानन्दात् इयत्तारहितात् अप्राप्य पारं **वाचो मनसा सह निवर्तन्ते,** तथाविधम् अनवधिं ब्रह्मानन्दं योगसुसंकृतेन **मनसा विद्वान्** न जातु कुतोऽपि **बिभेति** । अपैति संसरणभीतिः इति यावत् । इयञ्च मनसः स्तुतिः, सकलभय-निवारक ब्रह्मानन्दानुभव उपकरणत्वनिरूपणात् । अथ मनोमये समारोपितम् आत्मबुद्धिं ततः अन्यत्र अपसारयति **तस्यैष एव** इत्यादिना । व्याख्यातप्रायम् । **विज्ञानमयः** विज्ञानप्रचुरो विज्ञाता जीवः । श्रद्धादयो ज्ञानस्यैव अवस्थाविशेषलक्षणा ज्ञातुर्जीवस्य धर्मभूता इति तत्तदवच्छिन्नं धातुः स्वरूपमेव श्रद्धादिशब्दैः निर्दिश्य शिरस्त्वादिना रूप्यते । योगोऽपि ध्यानविशेषलक्षण इति ज्ञानविशेष एव । **महः** - योगविरोधिनिरसन-सामर्थ्यलक्षणम् । विज्ञानमयमधिकृत्य **एषः** - वक्ष्यमाणः, **श्लोको भवति** ।।

## पञ्चमोऽनुवाकः

### [विज्ञानमयकोशविचारः]

**विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुत इति । तस्यैष एव शारीर आत्मा यः पूर्वस्य ।। १ ।।**

**तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मा आनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः आनन्द आत्मा ।। २ ।। ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ।।**

।। इति पञ्चमोऽनुवाकः ।।

**प्र.दी.** - **विज्ञानं यज्ञं तनुते** इति । **विज्ञानम्** - विज्ञानवान्, अत्र विज्ञानमयशब्दनिर्दिष्टो जीवः विज्ञानशब्देन उच्यते । *नन्दि ग्रहि* (पा.सू.३-१-१३४) इत्यादिना नन्द्यादित्वम् आश्रित्य कर्तरि ल्युट् । अत्रत्य विज्ञानशब्दस्य बुद्धिमात्रपरत्वम् कैश्चित् अङ्गीकृतम् । तदनुपपन्नम् । **यज्ञं तनुते** इत्यादि उत्तरवाक्यविरोधात् । अतः **विज्ञानं** - जीवः **यज्ञं तनुते** - करोति । **कर्माण्यपि** - च लोकवैदिककर्माणि अपि **च तनुते** करोति । **विज्ञानम्** इति । **सर्वे देवाः** - ब्रह्मेन्द्रादि सर्वे देवाः **विज्ञानं** - जीवस्वरूपम्, **ब्रह्म ज्येष्ठम्** इति । ब्रह्मशब्दवाच्यात् अचेतनात् प्रकृतेः **ज्येष्ठम्** श्रेष्ठम् इति **उपासते** । **विज्ञानम्** इति । यस्तु अधिकारी,

**विज्ञानम्** - जीवस्वरूपम्, **ब्रह्म** इति **वेद चेत्** - ब्रह्मशरीरत्वेन जीवे ब्रह्मबुद्धिं कुर्यात् चेत् । **तस्माच्चेत्** इति । **तस्मात्** - ज्ञानात् आमरणान्तम् **न प्रमाद्यति चेत्** प्रमादयुक्तो न भवेच्चेत् । **शरीरे पाप्मनो हित्वा** इति । **शरीरे** देहे विद्यमाने अपि, **पाप्मनः** पूर्वोत्तर-अघरूप-पापान् **हित्वा** त्यक्त्वा, **सर्वान्कामान् समश्नुते इति** । उपक्रमितसर्वकामान् अनुभवति इत्यर्थः । **तस्यैषः** इति । **तस्य** - पूर्वस्य मनोमयस्य **यः आत्मा - स एव** तस्य विज्ञानमयस्यापि, **एषः शारीरः** शरीरप्रतिसम्बन्धी आत्मा इत्यर्थः । **तस्मात्** इति । **तस्मात्** - पूर्वमन्त्रनिर्दिष्टादेव, **एतस्माद्विज्ञानमयकोशात् अन्यः** यः, **आनन्दमयः** स एव **अन्तर आत्मा** । **तेन** इति । **तेन** - आनन्दमयेन, **एषः** - विज्ञानमयकोशः, **पूर्णः** - सम्पूर्णः, व्याप्तः इत्यर्थः । **स वा** इति । **स वै** प्रसिद्धः, **एषः** - आनन्दमयकोशोऽपि, **पुरुषविध एव** - पुरुषाकृतिः एव इत्यर्थः । **तस्येति । तस्य** - विज्ञानमयकोशस्य **पुरुषविधताम् अनु** । पुरुषाकारत्वम्, **अनु** अनुकृत्य, **अयम्** - आनन्दमयकोशोऽपि, **पुरुषविध एव** - शिरःपक्षादिपुच्छयुक्त इत्यर्थः । तदेव आह **तस्य** इति । **तस्य** आनन्दमयस्य, **प्रियमेव शिरः** - इष्टवस्तुदर्शनजन्यसुखं प्रियम् इत्युच्यते । **मोदो दक्षिणः पक्षः** प्रियवस्तु लाभजन्यसुखं **मोद** इत्युच्यते । लब्धस्य उपयोगजन्यं सुखं **प्रमोद** इत्युच्यते । **आनन्दः** सुखातिशयः, **आत्मा** - मध्यकायः, **ब्रह्म पुच्छं प्रतिष्ठा** - ब्रह्म पुच्छवत् आधारभूतम् इत्यर्थः । अत्र च पूर्वेषु अन्नमयादिषु चतुर्षु पर्यायेषु अनिरूपितस्य ब्रह्मणो अवयवत्वस्य अस्मिन् आनन्दमयपर्याये निरूपणं *ब्रह्मविदाप्नोति परम्* इति उपक्रान्तस्य ब्रह्मोपदेशस्य आनन्दमयपर्याये समापनम् इति ज्ञापनार्थम्, इति द्रष्टव्यम् । अतोऽत्र आनन्दमयः एव उपक्रान्तं ब्रह्म अन्नमयानन्तरे प्राणमये प्रथमं परमात्मबुद्धिः अवतीर्णा । अनन्तरं मनोमये अनन्तरं विज्ञानमये अनन्तरम् आनन्दमये परब्रह्मबुद्धिः अवतीर्णा अतः *अन्वयादिति चेत् स्यात् अवधारणात्* (ब्र.सू.३-३-१७) इति सूत्रभाष्यं सङ्गच्छते ।।

**तै.भा. - कर्माणि** - यज्ञव्यतिरिक्तानि दानादीनि **तनुते** इत्यनेन ज्ञातृत्व-कर्तृत्व-भोक्तृत्वानि जीवस्य स्वाभाविकानि इत्युच्यन्ते । देवाः सर्वे **विज्ञानं** - जीवं, **ज्येष्ठं ब्रह्म उपासते** नात्र ऐक्योपासनम् उच्यते, ज्येष्ठपदेन वैलक्षण्याभिधानात् । नापि दृष्टिविधिः मुक्तिफलोक्तेः । किन्तु जीवस्य ब्रह्मशेषत्वज्ञानम्, इहापि यः कश्चित् विज्ञानं स्वात्मानं **ब्रह्मवेद चेत्** - ब्रह्मशेषत्वेन जानाति चेत्, **तस्मात्** - वेदनात् **न प्रमाद्यति चेत्** - अप्रच्युतभगवच्छेषत्वज्ञानं

चेत् इत्यर्थः । चेच्छब्देन तादृशज्ञानस्य दुर्लभत्वं सूच्यते । **शरीरे** - स्थूलसूक्ष्मरूपे उभे अपि तदारम्भक **पाप्मनश्च हित्वा सर्वान् कामान्** पूर्वोक्तान्, **समश्नुते** - सम्यक् प्राप्नोति, अपुनरावृत्तिः सम्यक्त्वम् । अत्र उपासिस्थाने विदिप्रयोगात् **ब्रह्मवित्** इत्यादौ उक्तं वेदनं विशेषितं भवति । *तस्मात् चेन्न प्रमाद्यति* इत्यनेन निरन्तरप्रत्ययत्वम् उपासनशब्दार्थ इत्युक्तम् । एवं स्थूलपदार्थान् उपदिश्य ( प्रतीत्यनुकेन दर्शयित्वा ? ) सर्वान्तरं सर्वसूक्ष्मं ब्रह्मस्वरूपम् उपदिशति **तस्माद्वा** इत्यादि । **तस्मात्** - मनोमयान्तरात् एतस्मात् उपास्यत्वेन उक्तात्तद्विज्ञानमयात् आनन्दमयः आनन्दप्रचुरः अपरिच्छिन्नानन्द इत्यर्थः ।

अन्तरात्मत्वम् आह **तेन** इति । बुद्ध्यारोहाय आह **स वा** इत्यादि । भगवतः सर्वदा हृदयावस्थाननिमित्तं चेतनविषयं सौहार्दम् । प्रियं तदानुकूल्यदर्शनजा प्रीतिः **मोदः**, तदाश्रयणजा प्रीतिः **प्रमोदः**, आनन्दः स्वासाधारणगुणः, ब्रह्म धर्मिस्वरूपम् स्वेतरसमस्तवस्तुविलक्षणत्वेन आनन्दमयः प्रशंसति **तदपि** इति ।।

**प्र. - विज्ञानम्** इति । अत्र विज्ञानमयशब्दनिर्दिष्टो जीवः विज्ञानशब्देन उच्यते । आत्मस्वरूपस्य स्वप्रकाशतया ज्ञानैकनिरूपणीयत्वेन च विज्ञानशब्देन अभिधानसम्भवात् । *कृत्यल्युटो बहुलम्* (पा.सू.३-३-११३) इति वा जानाति इत्यर्थे ल्युट् आश्रीयते । नन्द्यादित्वं वा आश्रित्य, *नन्दिग्रहि......* (प.सू.३-१-१३४) इत्यादिना कर्तरि ल्युः आश्रीयते । [1]केवल[1] विज्ञानमात्रपरामर्शः *यज्ञं तनुते कर्माणि तनुतेऽपि च* इति प्रतिपादित वैदिकलौकिककर्मकर्तृत्वे असंभवात् । अन्तर्यामिब्राह्मणे, *य आत्मनि तिष्ठन्* (बृ.उ.५-७-२२) इति माध्यन्दिनपाठगत आत्मशब्दस्थाने, *यो विज्ञाने तिष्ठन्* (बृ.उ.५-७-२६) इति काण्वपाठे दर्शनात् विज्ञानशब्दो जीवात्मपरः । **विज्ञानम्** इति । सर्वे देवाः विज्ञानं जीवस्वरूपमेव प्रधानशब्दाभिलप्यात् अचेतनात्, [2]ब्रह्मणोऽपि[2] ज्येष्ठं प्रजापतिविद्योक्तरीत्या उपासते इत्यर्थः । **विज्ञानं ब्रह्म** इति । यस्तु जीवरूपं ब्रह्म वेद, [3]तस्माच्च[3] जीवात् अन्तिमप्रत्ययपर्यन्तं न प्रमाद्यति चेत्, **शरीरे पाप्मनो हित्वा** देहे वर्तमाने एव विनष्टाश्लिष्टपूर्वोत्तराघः सर्वान् कामान् समश्नुते ।

इष्टवस्तुदर्शनजन्यं सुखं **प्रियम्** । तल्लाभजन्यं सुखं **मोदः** । लब्धस्योपयोगजन्यं सुखं **प्रमोदः** । सुखातिशयः **आनन्दः** । न च मध्यकायत्वेन रूपितस्य आनन्दस्य

---

1. तेन केवल - अ । 2. ब्रह्मणो - अ,क,ख । 3. तस्मात् - ग,घ ।

पुच्छत्वेन [1]रूपितस्य[1] ब्रह्मणश्च भेदाभावेन तस्यैव आत्मत्वेन पुच्छत्वेन च रूपणं कथमिति वाच्यम् । एकस्यैव ब्रह्मणो ब्रह्मत्ववेषेण पुच्छत्वम्, आनन्दत्ववेषेण [2]आत्मशब्दित[2]मध्यकायत्वम् इति उपपत्तेः । न च आनन्दरूपब्रह्मस्वरूपस्य कथम् आनन्दप्रचुरत्व-लक्षणम् आनन्दमयत्वम्, [3]आनन्दस्य च[3] आनन्दप्रचुरत्वाभावात् इति वाच्यम् । आनन्दस्वरूपस्यैव ब्रह्मणः प्रियमोद-प्रमोद-शब्दवाच्य-शिरः पक्षादिरूपित-धर्मभूत आनन्दप्रचुरत्वेन आनन्दमयत्वस्यापि उपपत्तेः । अत्र च पूर्वेषु अन्नमयादिषु चतुर्षु पर्यायेषु अनिरूपितस्य ब्रह्मणोऽवयवत्वस्य अस्मिन् आनन्दमये पर्यायेषु अनिरूपणम्, ब्रह्मविदाप्नोति परम् इति उपक्रान्तस्य ब्रह्मोपदेशस्य [4]आनन्दमयपर्याये[4] समापनमिति ज्ञापनार्थम् इति द्रष्टव्यम् । अतः अत्र आनन्दमयः एव प्रक्रान्तं ब्रह्म ।

**कू.भा. - विज्ञानं यज्ञं तनुते** उक्तो विज्ञानमयः पञ्चमहायज्ञादिकं ज्ञानाय तनुते । **कर्माणि तनुतेऽपि च** इति श्रूयमाणकर्तृस्वरूपविशेषोपस्थापकम् । विज्ञानमिति पदं न अचेतनम् अन्तःकरणं वदति, मनोमय इति अन्तःकरणस्य श्रद्धङ्गक पूर्वोक्तयोगस्य च कर्तरि समवायात् । **विज्ञानं देवास्सर्वे - देवाः** - ज्ञानिनः । **ब्रह्म ज्येष्ठं उपासते** प्रधानशब्दाभिलप्यात् अचेतनात् ब्रह्मणो ज्येष्ठं विज्ञानमयम् आत्मानम् उपासते । अविकारत्व-कर्तृत्व-भोक्तृत्व-स्वाभाविकसत्यकामत्वादिभिः अजडात् प्राधान्यम् । विज्ञानम् आत्मानं किमर्थमुपासत इत्याह **विज्ञानं ब्रह्म चेद्वेद** - ब्रह्मदृष्ट्या ब्रह्मात्मकतया वा विज्ञानं ब्रह्म यदि विन्द्यात् **तस्माच्चेन्नप्रमाद्यति** अन्तिम प्रत्ययपर्यन्तं न प्रमाद्यति चेत् । प्रमादसम्भवोऽपि उच्यते

*क्लेशोऽधिकतरस्तेषां अव्यक्तासक्तचेतसाम् ।*
*अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ।।* (भ.गी.१२-५)

इति । **शरीरे पाप्मनो हित्वा** - आत्मावलोकनविरोधि दुःखपापजातम् अपोह्य अस्मिन् देहे वर्तमानः **सर्वान्कामान् समश्नुत** इति ब्रह्मदृष्ट्या उपासकश्चेत् ऐहिकफलजातम् अश्नुते । आत्मावलोकनमात्रपरश्चेत् तदेव अश्नुते । तत्र च *आत्मरतिरात्मक्रीडः आत्ममिथुनः आत्मारामः* (छां.उ.७-२५-२) *यस्त्वात्मरतिरेव स्यात्* (भ.गी.३-१७) *तद्वत्कामा यं प्रविशन्ति सर्वे* (भ.गी.२-७०) इति श्रुतिस्मृत्युक्तसर्वकामान् अश्नुते । इति श्लोकसमाप्तौ ।

---

1. रूपित - अ,ख,ग । 2. आत्मशब्द - ग । 3. आनन्दस्य - अ,ग,घ ।
4. आनन्दमये - अ,ग,घ ।

**तस्यैष एव शारीरः आत्मा** स एव शारीरः आत्मा विज्ञानमयस्यापि शारीरः आत्मा । तथा अन्तर्यामिब्राह्मणे *य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मानं वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति* (बृ.उ.मा.पा.५-७-२२) तथा काण्वपाठे *यो विज्ञाने तिष्ठन् यस्य विज्ञानं शरीरम्* (बृ.उ.५-७-२६) इत्यादि । सुबालोपनिषदि च *यस्याक्षरं शरीरम्* (सु.उ.७) इति । आपस्तम्बश्च *पूः प्राणिनः सर्वगुहाशयस्य* (आप.ध.सू.१-२२-४) इति । *सोऽभिध्याय शरीरात्स्वात् सिसृक्षुः विविधाः प्रजाः* (म.स्मृ.१-८) इति मनुः । *तदनुप्रविश्य...... विज्ञानं चाविज्ञानं च* (तै.उ.आन.६) इति वक्ष्यति । *गुहायां निहितोऽस्य जन्तोः* (महा.ना.उ.६६) इति च । **तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योन्तर आत्मानन्दमयः** एवं स्वाभाविकश्रद्धा सत्ययोगप्रकाश-धर्मकतया यज्ञादिसकलकर्मकर्तृतया लोकवेदप्रसिद्धात् स्वभावतो विज्ञानप्रचुरात् जीवादन्यः विलक्षणः तदन्तरस्सूक्ष्म आत्मा आधारतया नियन्तृतया शेषितया सर्वं आप्नोति इति आत्मा, अत **आनन्दमयः** - आनन्दैकतानः । *आत्मा श्रुतेः* (ब्र.सू.२-३-१८) इत्यारभ्य जीवस्य उत्पत्तिविनाशराहित्यं ज्ञत्वात् अणुत्वं बहुत्वं प्रकाशादिवत् अंशत्वं चोक्त्वा, पक्षान्तेषु दूषणानि चोक्तानि अन्तःकरणस्य कर्तृत्वे भोक्तृत्वशक्तिरपि तस्यैव स्यात्, तदा प्रकृतेः अन्योऽस्मीति समाध्यनुष्ठानानुपपत्तिः, तत्फलाभावश्चेत्यादि ।

आनन्दमयस्य परमात्मत्वं चाष्टसूत्राणि *आनन्दमयो अभ्यासात्* (ब्र.सू.१-१-१३) *विकारशब्दान्नेति चेन्न प्राचुर्यात्* (ब्र.सू.१-१-१४) *तद्धेतुव्यपदेशाच्च* (ब्र.सू.१-१-१५) *मान्त्रवर्णिकमेव च गीयते* (ब्र.सू.१-१-१६) *नेतरोऽनुपपत्तेः* (ब्र.सू. १-१-१७) *भेदव्यपदेशाच्च* (ब्र.सू. १-१-१८) कामाच्च नानुमानापेक्षा (ब्र.सू.१-१-१९) *अस्मिन्नस्य च तद्योगं शास्ति* (ब्र.सू.१-१-२०) इति । सूत्रार्थस्तु - *तस्माद्वा एतस्मादात्मन आकाशस्संभूतः* (तै.उ.आन.१) इत्यारभ्य *तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योन्तर आत्मानन्दमयः* इत्यत्र जगत्कारणतया अवगत आनन्दमयः प्रत्यगात्मनोऽर्थान्तरभूतः सर्वज्ञः परमात्मैव, कुतः ? अभ्यासात् । *सैषानन्दस्य मीमांसा भवति* (तै.उ.आन.८) इत्यारभ्य *ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः* (तै.उ.आन.८) *यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चनेति* (तै.उ.आन.९) इति हि वेद्यत्वे नायमानन्दो अनवधिकातिशयोऽभ्यस्यते । तस्य च प्रत्यगात्मनि असंभावितस्य तदतिरिक्ते परमात्मनि एव सम्भवात् आनन्दमयः परमात्मा । शरीरात्मत्वं च परमात्मन एव, *यस्य पृथिवि शरीरम्* (सु.उ.७) इत्यारभ्य *एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देवो एको नारायणः*

(सु.उ.७) इति श्रुत्यन्तराभिधानात् । आत्मान्तरनिर्देशाच्च । *आनन्दमयम् आत्मानम् उपसंक्रामति* (तै.उ.आन.८) वेद्यत्वेन प्राप्यत्वेन आत्मत्वेन ब्रह्मत्वेन अनवधिकातिशयानन्दत्वेन च आनन्दमयोऽभ्यस्यते । *स वा एष पुरुषोऽन्नरसमयः* (तै.उ.आन.१) इति मयट् प्रकरण आनन्दमयोऽपि विकारो भवितुम् अर्हति, अतो नानन्दमयः परमात्मा इति च आशंक्य परिहरति *विकारशब्दान्नेति चेन्न प्राचुर्यात्* (ब्र.सू.१-१-१४) इति । आनन्दमय इति विकारार्थमयडन्तात् शब्दात् न अयं अविकृतः परमात्मा, अस्य च विकारार्थत्वमेव युक्तम्, अन्नमय इति विकारोपक्रमात् इति चेन्न, प्रत्यगात्मनि अपि *न जायते म्रियते वा* (क.उ.२-१८) इत्यादि विकारप्रतिषेधात् प्राचुर्यार्थ एवायं मयडिति निश्चयात् । *अस्मिंश्चानन्दे यतो वाचो निवर्तन्ते* (तै.उ.आन.९) इति वक्ष्यमाणात् प्राचुर्यात् अयम् आनन्दप्रचुरः परमात्मा एव । हि अनवधिकातिशयः प्रकृतानन्दः प्रकृतात्मनि सम्भवति । *तस्माद्वा एतस्मादात्मन* (तै.उ.आन.१) इति अविकार आत्मा प्रकृतः, विकारार्थत्वं च प्राणमय एव परित्यक्तम् । एतदुक्तं भवति - शतगुणितोत्तरक्रमेण अभ्यस्यमाणस्य जीवात्माश्रयत्व असम्भवात् ब्रह्माश्रयोऽयम् आनन्द इति तस्मिन् ब्रह्मणि विकारासम्भवात् प्राचुर्येऽपि मयड्विधिसम्भवात् आनन्दमयः परब्रह्मेति । यदुक्तम् आनन्दप्राचुर्यं अल्पदुःखसहभावं अवगमयति इति तदसत्, तत्प्रचुरत्वं हि तत्प्रभूतत्वं, तच्च इतरस्य सत्तां न अवगमयति, अपि तु तस्य अल्पत्वं निवर्तयति इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ । इह तु वाक्यशतेन तदभावोऽवगतः अपहतपाप्मा इत्यादिना । तत्र एतावदेव वक्तव्यम् । ब्रह्मानन्दस्य प्रभूतत्वम् अन्यानन्दस्य अल्पत्वापेक्षम् इति । उच्यते च *स एको ब्रह्मण आनन्दः* (तै.उ.आन.८) इत्यादिना जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशापन्नः प्रभूत इति । *तद्धेतुव्यपदेशाच्च* (ब्र.सू.१-१-१५) *को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाति* (तै.उ.आन.६-७) इत्येवं जीवान् आनन्दयतीति जीवानां आनन्दहेतुः अयं व्यपदिश्यते । अतश्च आन्दयितव्यात् जीवात् आनन्दयिता अयं आनन्दमयः परमात्मा इति विज्ञायते । आनन्दमय एव अत्र आनन्दशब्देन उच्यत इतिच अनन्तरमेव वक्ष्यते । इतश्च जीवादन्यः आनन्दमयः *मान्त्रवर्णिकमेव गीयते* । (ब्र.सू.१-१-१६) *सत्यं ज्ञानमनन्तं ब्रह्म* (तै.उ.आन.२) इति मन्त्रवर्णोदितं ब्रह्मैव आनन्दमय इति गीयते । तत्तु जीवस्वरूपात् अन्यत् परंब्रह्म । तथाहि *ब्रह्मविदाप्नोति परम्* (तै.उ.आन.१) इति जीवस्य प्राप्यतया ब्रह्मनिर्दिष्टं, *तदेषाभ्युक्ता* (तै.उ.आन.१) इति तद्ब्रह्माभिमुखीकृत्य प्रतिपाद्यतया परिगृह्य ऋगेषा अध्येतृभिः उक्ता । ब्राह्मणोक्तस्य अर्थस्य वैशद्यम् अनेन मन्त्रेण क्रियत इत्यर्थः ।

जीवस्य उपासकस्य प्राप्यं ब्रह्म तस्मात् विलक्षणमेव । प्रत्यगात्मनः परिशुद्धस्वरूपं मन्त्रवर्णोदितम् इति आशंक्याह *नेतरोनुऽपपत्तेः* (ब्र.सू.१-१-१७) । परस्मात् ब्रह्मणः इतरः प्रत्यगात्मा मुक्तावस्थोऽपि न मन्त्रवर्णोदितः तस्य विपश्चिता ब्रह्मणा इति विपश्चित्त्वानुपपत्तेः। विविधं पश्यच्चित्वं हि विपश्चित्त्वम् । तच्च *सोऽकामयत बहुस्यां प्रजायेय* (तै.उ.आन.६) इत्यादिवाक्योदित निरुपाधिकबहुभवनसंकल्परूपज्ञत्वम् । तत्तु प्रत्यगात्मनः परिशुद्धस्यापि न संभवति, *जगद्व्यापारवर्जम्* (ब्र.सू.४-४-१७) इति वक्ष्यमाणत्वात् । इतश्च उभयावस्थात् प्रत्यगात्मनोऽन्यः आनन्दमयः - *भेदव्यपदेशाच्च* (ब्र.सू.१-१-१८) *तस्माद्वा एतस्मात् आत्मनः* (तै.उ.आन.१) इत्यारभ्य मान्त्रवर्णिकं ब्रह्मव्यञ्जयद्वाक्यं अन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति । **तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमय** इति । अतो जीवात् भेदं व्यपदेशाच्च अयं मान्त्रवर्णिकः आनन्दमयान्यः इति विज्ञायते । इतश्च जीवादन्यः - *कामाच्च नानुमानापेक्षा* (ब्र.सू.१-१-१९) *सोऽकामयत* (तै.उ.आन.६) *इत्यारभ्य इदँ सर्वमसृजत* (तै.उ.आन.६) इति कामादेव जगत्सर्गश्रवणात् आनन्दमयस्य जगत्सर्गे न अनुमानगम्यप्रकृत्यपेक्षा ; प्रत्यगात्मनो यस्य कस्यचिदपि सर्गे प्रकृत्यपेक्षास्ति । अनुमानगम्यं प्रधानम् अनुमानम् । इतश्चानन्दमयः प्रत्यगात्मनोऽन्यः परमात्मा - *अस्मिन्नस्य च तद्योगं शास्ति* (ब्र.सू.१-१-२०)। *रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति* (तै.उ.आन.७) इत्यस्मिन् आनन्दमये रसशब्दनिर्दिष्टे अस्य इदंशब्दनिर्दिष्टस्य जीवस्य तल्लाभात् आनन्दयोगः तस्मादन्य आनन्दः परमात्मा इति आनन्दमयः परं ब्रह्म । *यदेषः आकाशः आनन्दो न स्यात्* (तै.उ.आन.७) *विज्ञानं आनन्दं ब्रह्म* (बृ.उ.५-९-२८) इत्यादिषु आनन्दशब्देन आनन्दमय एव परामृश्यते, यथा विज्ञानशब्देन विज्ञानमयः । अत एव *आनन्दं विद्वान्* इति व्यतिरेकनिर्देशः । अत एव *आनन्दमयमात्मानमुपसंक्रामति* (तै.उ.आन.८) इति फलनिर्देशश्च । केवलानन्दशब्दस्य अभ्यासः इति यदुक्तं तदनधीतवेदैः उक्तम् , अस्मिन्ननुवाके अदर्शनात् । उत्तरानुवाके च *आनन्दं ब्रह्म* इति आनन्दमयस्यैव प्रतिपादनं न आनन्दमय व्यतिरिक्तस्य । एवं पूर्वानुवाके उक्तानां अन्नमयादीनां *अन्नं ब्रह्मेति व्यजानात्* (तै.उ.भृ.२) *प्राणो ब्रह्मेति व्यजानात्* (तै.उ.भृ.३) *मनो ब्रह्मेति व्यजानात्* (तै.उ.भृ.४) *विज्ञानं ब्रह्मेति व्यजानात्* (तै.उ.भृ.५) इति प्रतिपादनात् तदनन्तरं *आनन्दो ब्रह्मेति व्यजानात्* (तै.उ.भृ.६) इत्यत्रापि आनन्दमय एवेति हि सुस्पष्टम् । अत एव च *आनन्दमयम् आत्मानम् उपसंक्रम्य* इति उपसंहृतम् ।

ननु **ब्रह्म पुच्छं प्रतिष्ठा** इति आनन्दमयात् अन्यत् ब्रह्मेति प्रतीयते नैवं, ब्रह्मैव स्वभावविशेषैः पुरुषविधत्वेन रूपित शिरःपक्षपुच्छादिरूपेण व्यपदिश्यते ; यथा अन्नमयो देहः स्वस्मात् अनतिरिक्तैरेव स्वावयवैः निर्दशितः । यदि हि आनन्दमयात् अन्यद्ब्रह्म

अभविष्यत् - तस्माद्वा एतस्मादानन्दमयात्, अन्योन्तर आत्मा ब्रह्म इत्यपि निरदैक्ष्यत । न चैवं निर्दिश्यत्ते, अतः प्रक्रान्तं ब्रह्मैव आनन्दमयः इति ; न तु ब्रह्मशब्देन प्रक्रान्तस्य ब्रह्मशब्देन प्रत्यभिज्ञा स्यात् । नैतत्, *ब्रह्मविदाप्नोति परम्* (तै.उ.आन.१) इति ब्रह्मशब्देन परम् इति आत्मप्रक्रमात् ब्रह्मशब्दः प्रथमं व्याख्यातः - *सत्यं ज्ञानमनन्तं ब्रह्म* (तै.उ.आन.२) इति । अत एव परम् इति आत्मा *तस्माद्वा एतस्मात् आत्मन* इति आत्मशब्देन निर्दिष्टः । अस्य सर्वानुप्रवेशात् सर्वान्तरात्मत्वेन आत्मत्वं व्यञ्जयद्वाक्यजातं प्राणमयादीन् अतिक्रम्य आत्मशब्दम् आनन्दमये समापयति । अतः आत्मशब्देन प्रक्रान्तं ब्रह्मैव आनन्दमय इति निश्चीयते । तथाहि - जगत्कारणत्वं जगदन्तरात्मत्वं च उभयमेव अनन्यसाधारणं लक्षणम् । अतो निखिलजगदेककारणतया प्रतिपादितस्य अतिदूरस्य स्वात्मतया प्रतिपत्तिः प्रथमतो न स्यादिति सर्वात्मत्वप्रतिपत्त्यर्थं अन्नमयः पुरुष इति प्रथमं आकाशादि भूतमयशरीरं निर्दिश्य, तदन्तरभूतं तस्य धारकं पञ्चवृत्तिप्राणं, तस्यापि अन्तरभूतमन्तःकरणम्, तदन्तरभूतं च जीवं तत्र बुद्ध्यवतारक्रमेण निर्दिश्य सर्वान्तरभूतं परमाधारपरमात्मानं *अन्योऽन्तर आत्मानन्दमय* इति उपदिश्य आत्मपरम्परां समापयति ।

ननु *ब्रह्मपुच्छं प्रतिष्ठा* इत्युक्त्वा *असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्* (तै.उ.आन.६) इत्यादिना ब्रह्मज्ञानाज्ञानाभ्यां आत्मनः सद्भावासद्भावौ दर्शयति, न आनन्दमयज्ञान अज्ञानाभ्यां ; न च आनन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानशंका युक्ता, अतो न आनन्दमयमधिकृत्य अयं श्लोकः उदाहृतः, तस्मात् आनन्दमयात् अन्यत्पुच्छं ब्रह्म ; नैतदेव, गतिसामान्यभङ्गात् औचित्याभावाच्च । तथाहि *इदं पुच्छं प्रतिष्ठा* (तै.उ.आन.१) *पृथिवी पुच्छं प्रतिष्ठा* (तै.उ.आन.२) *अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा* (तै.उ.आन.३) *महः पुच्छं प्रतिष्ठा* (तै.उ.आन.४) *इत्येवम् उक्त्वा तत्र तत्र उदाहृताः अन्नाद्वै प्रजाः प्रजायन्ते* (तै.उ.आन.२) इत्यादयः श्लोका यथा न पुच्छमात्रप्रतिपादनपराः, अपि तु अन्नमयादि पुरुषप्रतिपादनपराः, एवम् अत्रापि अन्तरात्मकाष्ठत्वेन उक्तनन्दमयस्य अयं असन्नेवेति श्लोकः न आनन्दमयव्यतिरिक्तस्य । पुच्छशिरःप्रभृति अवयवत्वाभावात् ब्रह्मणो न आन्दमयो ब्रह्मेति चेत् ? ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात् पुच्छमपि ब्रह्म न भवेत् । अथ अविद्यापरिकल्पितस्य वस्तुनः तस्याश्च आश्रयभूतत्वात् ब्रह्मणः पुच्छं प्रतिष्ठेति रूपणमात्रम् इति चेत् ? हन्त तर्हि असुखादि व्यावृत्तस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति इति तुल्यम् । गुणोपसंहारपादे च आनन्दमयस्य परमात्मत्वसमर्थनपराणि सूत्राणि *आनन्दादयः प्रधानस्य* (ब्र.सू.३-३-११) । आनन्दादयो गुणाः सर्वासु उपसंहर्तव्याः, प्रधानस्य गुणिनो ब्रह्मणः सर्वासु विद्यासु अभेदात्, सर्वासु विद्यासु ब्रह्मैकत्वम् अनुसन्धेयं चेत् यैः

गुणैः विना ब्रह्मानुसन्धानम् अशक्यम् । ते च ज्ञानानन्दादयो गुणाः अनुसन्धेया इत्यर्थः । *प्रियशिरस्त्वाद्यप्राप्तिः उपचयापचयौ हि भेदे* (ब्र.सू.३-३-१२) - **तस्य प्रियमेव शिरः** इति प्रियशिरस्त्वादिनामप्राप्तिः ब्रह्मगुणत्वाभावात् तेषां शिरःपक्षादिभेदे ब्रह्मगुणत्वे सति ब्रह्मण उपचयापचयप्रसक्तिः । *ततश्च सत्यं ज्ञानमनन्तं ब्रह्म* (तै.उ.आन.२) *आनन्दोऽजर* (कौ.उ.६-६२) इत्यादि विरुद्ध्यते । प्रियशिरस्त्वादिभ्य आनन्दादीनां विशेषमाह *इतरे त्वर्थसामान्यात्* (ब्र.सू.३-३-१३) इतरे आनन्दादयः, अर्थसामान्यात् ब्रह्मस्वरूपसामान्यात्, ब्रह्मवत् सर्वासु अनुवर्तन्ते, ब्रह्मस्वरूप-निरूपणधर्मत्वेन ब्रह्मस्वरूपसमाना हि ते । प्रियशिरस्त्वादयो ब्रह्मस्वरूपधर्मा न भवन्ति चेत् तदभिधानं किमर्थम् ? इत्यत्राह - *आध्यानाय प्रयोजनाभावात्* (ब्र.सू.३-३-१४) अनुचिन्तनार्थं तदभिधानं, प्रयोजनान्तराभावात् ; *ब्रह्मविदाप्नोति परम्* (तै.उ.आन.१) इति वेदितव्यतया उपदिष्टं ब्रह्म आनन्दप्रियमोदादिरूपेण विभज्य शिरःपक्षपुच्छादित्वेन रूपयित्वा बुद्धौ आरोप्यम् इत्यर्थः । *आत्मशब्दाच्च* (ब्र.सू.३-३-१५) अन्योऽन्तर आत्मानन्दमय इति आत्मशब्दाच्च प्रियशिरस्त्वादयो न ब्रह्मस्वरूपधर्माः, शिरःपक्षादयो हि नात्मधर्माः । *आत्मगृहीतिरितरवदुत्तरात्* (ब्र.सू.३-३-१६) अन्योन्तर आत्मानन्दमय इति आत्मशब्देन परमात्मन एव गृहीतिः ; ग्रहणे, इतरवत् *आत्मा वा इदमेक एवाग्र आसीत्* (ए.उ.१-१-१) इति आत्मशब्देन यथा परमात्मनो ग्रहणं तद्वत्, कथम् अवगम्यते ? उत्तरात् *सोऽकामयत बहुस्यां प्रजायेय* (तै.उ.आन.६) इति वाक्यात् । *अन्वयादिति चेत् स्यादवधारणात्* (ब्र.सू.३-३-१७) पूर्वेषु अन्योन्तर आत्मा प्राणमय इत्यादिवाक्येषु अनात्मस्वपि आत्मशब्दान्वयात् कथम् उत्तरवाक्यात् निर्णय इति चेत् ? *तस्माद्वा एतस्मादात्मन आकाशस्संभूतः* (तै.उ.आन.१) इति प्रकृतस्य आत्मनः एव प्राणमयादिषु आनन्दमयपर्यन्तेषु आत्मशब्देन अवधारणात् स्यादेवं निर्णयः । अतः प्रियशिरस्त्वादीनां अनात्मधर्मत्वात् ज्ञानानन्दादीनां आत्मस्वरूपनिरूपणधर्मत्वाच्च तेषामेव सर्वत्र उपसंहारः । अतः सूत्रकारानुमतत्वात् आनन्दमयः परमात्मैव ।

**तेनैष पूर्णः** तेन आनन्दमयेन अन्तर्बहिश्च एष विज्ञानमयः आप्यायनेन व्याप्तः पुष्कलो भवति । **स वा एष पुरुषविधः एव** इत्यादि गतम् । **तस्य प्रियमेव शिरः** प्रियं दर्शनमात्रेण हर्षकर-सुन्दरतर-सन्निवेशविशेषवैचित्र्य-साक्षात्कारसुखम् । तत्र चानन्ताश्चर्यमय-स्वरूपरूपम् गुणविभूतिलीलोपकरणान्तर्गतानन्तवस्तुसाक्षात्कारसुखमेव प्राथमिकम् इति शिरः । **मोदो दक्षिणः पक्षः** - साक्षात्कृतस्य लब्ध्यपेक्षयान्तरवाप्तिजनित आह्लादो मोदः । **प्रमोदः उत्तरः पक्षः** लब्धस्यप्रतिहतसुरक्षिततत्वतृप्तिः । यद्वा मोदादयः

यत्र तारतम्येन अवस्थिताः सुखविशेषाः । वार्ताजनितसुखविशेषो मोदः, दर्शनजन्यः प्रमोदः । **आनन्द आत्मा** भोगसुखातिशयनिवृत्तिः आनन्दः । इत्थं प्रियमोदप्रमोदानन्दाः प्रधानाङ्गानि, वृत्तिविशेषस्य सुखार्थत्वात् **ब्रह्मपुच्छं प्रतिष्ठा** अतः सत्यज्ञानानन्तत्वानि पुच्छस्थानीयानि, अविकारत्वादिभिः आनन्दो धार्यत इति तानि प्रतिष्ठा च **तदप्येष श्लोको भवति** *असन्नेव स भवति असद्ब्रह्मेति वेद चेत्* (तै.उ.आन.६) *यो वेद निहितं गुहायां* (तै.उ.आन.१) *आत्मन आकाशस्सम्भूत* (तै.उ.आन.१) इति प्रस्तुतम् आत्मज्ञानं अस्मिन् आनन्दमये प्रतिष्ठितम् अतो नातः परतत्त्वम् अस्तीति भावः । उत्तरानुवाके च आनन्दमयं प्रस्तुत्य वक्ष्यति *सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति* (तै.उ.भृ.६) इति ॥

**आ.भा.** - विज्ञानपदेन विज्ञानमयो जीवः प्रकृते परिगृह्यते तस्यैव स्तुत्यर्थतया अस्य मन्त्रस्य प्रतिज्ञातत्वात् । शक्यते च जीवो विज्ञानशब्देन अभिधातुम् । *यो विज्ञाने तिष्ठन्* (बृ.उ.५-७-२६) इति काण्वानां विज्ञानशब्देन जीवाभिधानसत्त्वात् । विज्ञानशब्देन जीवपरिग्रहः एव ; *यज्ञं तनुते* इत्यादिकर्तृत्वनिर्देशस्य संगतत्वसम्भवाच्च । जीवो हि विज्ञानस्वरूपोऽपि धर्मभूतैः ज्ञानैः विज्ञानवानपि भवत्येव । विज्ञानवान् एष हि फलसाधनताज्ञानवत्तया वैदिकानि लौकिकानि कर्माणि कर्तुं प्रभवति, अत उक्तं विज्ञानं यः संतनुते इति । **विज्ञानम्** विज्ञानस्वरूपो विज्ञानवाँश्च जीवः **यज्ञम्** वैदिकम्, कर्म - जातम्, **तनुते** - करोति । **अपि च कर्माणि** लौकिकानि अशनपानादिकं जीवं सर्वतः श्रेष्ठभूतब्रह्मदृष्ट्या उपासते । **विज्ञानं** जीवमेव ब्रह्मवेद चेत् तनुते । **सर्वे देवाः** - सात्विका जनाः ते च देवयोनयो मनुष्ययोनयो वा विज्ञानं जीवं, **ज्येष्ठम् सर्वतः** उत्कृष्टम्, **ब्रह्म इत्युपासते** ब्रह्मदृष्ट्या समुपास्ते चेत्, तत्र च उपासने **न प्रमाद्यति चेत्** - प्रमादं न करोति विज्ञानमये ब्रह्मभावं त्यक्त्वा अन्नमयादिषु अब्रह्मभावनं हि प्रमादः स चेद् यावज्जीवं न भवति इत्यर्थः । तदा **शरीरे** - देहे विद्यमान एव **पाप्मनो हित्वा** - पापं त्यक्त्वा प्रारब्धकर्मातिरिक्तस्य सञ्चितक्रियमाणकर्मसंश्लेषाभावम् उपगम्य इत्येतत् । **सर्वान् कामान् समश्नुते** शरीरवियोगानन्तरं सर्वमनोरथोपभोगं कुरुत इत्यर्थः । विज्ञानस्य ब्रह्मभावेन उपासनात् एतत्फलावाप्तिकथनात् मन्त्रस्य अस्य विज्ञानमयस्थापकत्वं स्पष्टं भवति । तदेव हि प्रतिज्ञातमपि इति सर्वसंश्लिष्टम् इति भावः ।

एवं स्थूलामरुन्धतीमिव पौनःपुन्येन अन्नमयादिषु अन्तरात्मत्वबुद्धिं प्रदर्श्य सम्प्रति सूक्ष्माऽरुन्धतीस्थानीये आनन्दमये परब्रह्मणि अन्तरात्मत्वबुद्धिम् उपसङ्क्रामयितुं

प्रक्रमते **तस्यैष** इत्यादि । **तस्य** विज्ञानमयस्य, **शारीर** शरीरप्रतिसम्बन्धि, **आत्मा** - अन्तरात्मा स एव **यः पूर्वस्य** - मनोमयस्य । एतेन अन्नमयादि विज्ञानमयान्तस्य सर्वस्य एक अन्तरात्मा इति सूचितो भवति । स कः ? इत्यपेक्षायाम् आह - **तस्माद्वा** इति । ब्राह्मणोक्तात् मन्त्रोक्ताच्च विज्ञानमयात् अन्यो विज्ञानमयस्यापि अन्तरः अन्तर्गतः **आत्मा आनन्दमयः** आनन्दप्रचुरः । **तेन** आनन्दमयेन **एषः** विज्ञानमयः, **पूर्णः** व्याप्तः आनन्दो यस्य तदन्तरत्वात् । विज्ञानमयो जीवो विज्ञानरूपोऽपि यथा धर्मभूतविज्ञानप्रचुरत्वात् विज्ञानमयः उच्यते । तथैव आनन्दरूपः परमात्माऽपि धर्मभूतैः आनन्दैः आनन्दप्रचुरत्वात् आनन्दमयः उच्यत इति ध्येयम् । धर्मभूतेष्वेव आनन्देषु शिरस्त्वाद्यारोपात् पुरुषाकारत्वम् आनन्दमयस्य प्रतिपादयितुम् आह - **स वा एष** इति । **स एष** आनन्दमयः **पुरुषविध एव** - पुरुषाकार एव । **वै** शब्दो निश्चिततत्वम् अस्य अर्थस्य द्योतयति । सा च पुरुषाकारता आनन्दमये न स्वतः इति दर्शयति **तस्य** इत्यादिना । **तस्य** विज्ञानमयस्य, **पुरुषविधताम्** पुरुषाकारताम्, **अनु** अनुसृत्य **अयम्** आनन्दमयः, पुरुषविधो विज्ञानमयः पुरुषाकारः कल्पितशिर आद्यवयववत्त्वात् । तदनुसारेण अस्यापि शिर आद्यवयवकल्पनया पुरुषाकारत्वम् इत्येतत् । **तस्य** आनन्दमयस्य **प्रियम्** इष्टवस्तु दर्शनजन्यं सुखमेव **शिरः** ; तादृशे सुखे धर्मभूते शिरस्त्वारोपः इत्यर्थः । **मोदः** इष्टवस्तुलाभप्रयुक्तः सुखविशेषो **दक्षिणः पक्षः** एतादृशे सुखविशेषे दक्षिणपक्षतारोपः । **प्रमोदः** लब्धवस्तूपयोगतो जायमानः सुखविशेषः, तत्र उत्तरपक्षत्वम् आरोपितम् । **आनन्दः** निरतिशयसुखस्वरूपः परमात्मा एव आत्मा एव आधारो धर्मभूतानां सुखानां तस्मात् तत्र आत्मा मध्यकायः इति व्यपदेशः । ब्रह्मैव **पुच्छं प्रतिष्ठा** स्थितिकारकत्वात् ब्रह्मणि पुच्छत्वारोपः ।

ननु निरतिशयानन्दरूपं ब्रह्मैव आत्मा इति, पुच्छम् इति कथं वर्ण्यते ? एकत्रैव परमात्मनि मध्ये कायत्व-पुच्छत्वयोः आरोपो न सङ्गतः प्रतिभासते ; अवयवद्वयत्वारोपस्य अन्यत्र अन्नमयादौ एकत्र अदर्शनात् इति चेत् सत्यम् । एकत्रैव ब्रह्मणि विभिन्नरूपेण उभयमपि सम्भवति । आनन्दत्वरूपेण मध्यकायत्वारोपः ब्रह्मत्वेन च रूपेण पुच्छत्वारोपः, सङ्गत एव इति गृहाण । एतेन आनन्दमयस्य सर्वान्तरात्मत्वं स्थूलारुन्धतीन्यायेन प्रदर्शितम् । अयमेव आनन्दमयो ब्रह्मविदाप्नोति परम् इत्यत्र परशब्दवाच्यः तमेव विशेषतो ग्राहयितुम् अयम् अन्नमयादिकोशपञ्चकप्रपञ्चः । **तदप्येष श्लोकः** तस्य आनन्दमयस्यैव प्रकाशको वक्ष्यमाणः **श्लोको भवति** ॥

**सु. - विज्ञानम्** इति । अयं विज्ञानशब्दो विज्ञातरि आत्मनि वर्तते । विज्ञातुः स्वरूपं स्वयम्प्रकाशतया ज्ञानैकनिरूपणीयतया च विज्ञानशब्देन निर्देशम् अर्हति ।

*कृत्यल्युटो बहुलम्* (पा.सू.३-३-११३) इत्यनुशासनात् कर्तरि ल्युट् वा । नन्द्यादित्वाश्रयणात् कर्तरि ल्युर्वा । श्रूयते च यो विज्ञाने तिष्ठन् इति काण्वानां पाठः *आत्मनि तिष्ठन्* इत्यस्य माध्यन्दिनपाठस्य स्थाने । विज्ञातृपरतयैव च तनुते इति कर्त्राख्यातोपपत्तिः । सोऽयं विज्ञानैकलक्षणो जीवात्मा **यज्ञं तनुते, कर्माणि** च लौकिकानि तनुते । **सर्वे देवाः** - सर्वे सत्त्वप्रकृतयो, **विज्ञानम्** - जीवात्मानं, **ब्रह्मज्येष्ठम्** - ब्रह्मणः प्रधानात् प्रकृष्टम् उपासते । प्रकृतिविलक्षणत्वेन उपासते इति यावत् । तम् इमं विज्ञानात्मानं **ब्रह्म चेद्वेद** - अपहतपाप्मत्वादिना गुणाष्टकेन सरूपतया ब्रह्म इत्युपासीत, ब्रह्मरूपतया वेद इति यावत् । **तस्मात्** - तथा उपास्यमानात् अन्तिमसमये **न प्रमाद्यति चेत्** - अन्तिमस्मरणमपि तद्विषयं स्यात् चेत् इत्येतत् । **शरीरे** - प्रारब्धफले वर्तमानः सन्नेव, **पाप्मनः** - पूर्वोत्तराघान् **हित्वा सर्वान् कामान् समश्नुते** देहपातानन्तरम् । **शरीरे पाप्मनः,** शरीरयोगेन सम्पादितान् पाप्मनो हित्वा इति वा । विज्ञानमये समारोपिताम् अन्तरात्मबुद्धिं ततः अन्यत्र अपसारयति - **तस्यैष एव** इत्यादिना । व्याख्यातप्रायम् । **आनन्दमयः** आनन्दप्रचुरः, निरवधिकानन्दः परमात्मा । स्वयम् आनन्दस्वरूपः आनन्दगुणकः च इति आनन्दप्रचुरता युक्ता नाम । आनन्दविशेष-विशिष्टवेषेण शिरःपक्षादिनिरूपणं क्रियते - **तस्य प्रियमेव** इत्यादिना । आनन्दस्यैव अवस्थाविभेदाः प्रियादयः । ब्रह्मण आनन्दरूपस्यापि आनन्दत्वेन मध्यकायता ब्रह्मत्वेन पुच्छता इति विवेकः । ब्रह्मणः अन्नमयादिषु अवयवत्वेन अनिरूपणात् आनन्दमय एव तथा निरूपणात् ब्रह्मविदाप्नोति इत्युपक्रान्तं ब्रह्म आनन्दमय एव इति गम्यते । स्थूलारुन्धतीन्यायेन ज्ञाप्यमानस्य अन्तरात्मनो निरूपणविश्रान्तिः आनन्दमय एव इति व्यक्तम् । पूर्वपर्यायेष्विव *अन्योऽन्तर आत्मा । यः पूर्वस्य* इति तु आनन्दमयस्य अनन्यात्मताज्ञापनाय । आनन्दमयमधिकृत्य **एष श्लोको भवति** ।।

## षष्ठोऽनुवाकः

**[ब्रह्मप्रतिपादनम्]**

**असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छति (3) । आहो विद्वानमुं लोकं प्रेत्य ।। १ ।। कश्चित्समश्नुता (3) उ[१] ।।**

---

१. **समश्नुता उ** इति *एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ* इति पूर्वार्धस्य अकारः उत्तरार्धस्य इकारः । वर्णव्यत्ययेन तस्य उकार ; । अवधारणाय शब्दान्तरमुकार इत्येके - विद्वानेवेति तदानीं प्लुतविकारो लुप्यते । छान्दसो वा लङ्यडभावः । अस्मिन् प्रश्ने विद्वानेव परं प्राप्नोति इत्युत्तरमुक्तमेव । इति भट्टभास्करभाष्ये ।

**सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदँ सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य ।। २ ।।**

**सञ्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं च अनिलयनं च विज्ञानञ्च अविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत्सत्यमित्याचक्षते । तदप्येष श्लोको भवति ।। ३ ।।**

**।। इति षष्ठोऽनुवाकः ।।**

**प्र.दी.** **असन्नेव** इति । **ब्रह्म** परब्रह्म, **असदिति** नास्ति इति यो **वेद** - जानाति, **सः असन्नेव भवति** - असत्प्राय एव भवति । नास्तिकत्वात् भगवन्निग्रहपात्रो भवति इत्यर्थः । **ब्रह्म** - परब्रह्म, **अस्तीति** यः **वेद चेत्** जानाति चेत्, **ततः** ब्रह्म अस्तीति ज्ञानवत्त्वात् **एनम्** - अधिकारिणं **सन्तम्** - ज्ञानिनम् इति **विदुः** - जानीयुः । अयं श्लोकः पुच्छयुक्तानन्दमयब्रह्मविषयकः, न तु पुच्छब्रह्मविषयकः । ततश्च ब्रह्मशब्देन आनन्दमयः एव उच्यते । आनन्दप्रचुरपरब्रह्मविषयक नास्तित्वज्ञानात् संसारमोक्षौ भवतः इत्युक्तम् । आनन्दमयरूपपरब्रह्मणः अन्नमयप्राणमयादिवत् आत्मान्तरम् अस्तीति शंकानिवारणार्थम् आह - **तस्य** इति । **पूर्वस्य** - विज्ञानमयस्य, **यः शरीरः** - शरीरप्रतिसम्बन्धी, आत्मा आनन्दमयः, **तस्य** - आनन्दमयस्यापि **एष वा** - आनन्दमय एव आत्मा इत्यर्थः । तस्माद्वा एतस्मात् आनन्दमयात् अन्योन्तरः आत्मा ब्रह्म इति निर्देशाभावात् च आनन्दमयः परब्रह्मणः अनन्यात्मत्वं सिद्धम् । अतः *ब्रह्मविदाप्नोति परम्* इत्युपक्रमितः ब्रह्मैव आनन्दमयः इत्युच्यते । *ब्रह्मविदाप्नोति परम्* इति मन्त्रोक्तफलविशदीकरणार्थं प्रश्नान् उपक्षिपति **अथातोऽनुप्रश्नाः** इति । अथ उपक्रमितब्रह्मशब्दवाच्यानन्दमय ब्रह्मप्रतिपादनानन्तरम्, **अतः** उपक्रमितफलप्राप्तिविवरणार्थं श्रुतिः प्रश्नाः वदति इत्यध्याहारः । **उताविद्वानिति** । अविद्वान् इति च्छेदः, सर्वहृदयगुहावर्तिनं परमव्योम्नि स्थितं परमात्मानं, अविद्वान् - अविज्ञाता यः कश्चन जीवः, सः - **प्रेत्य** - देहत्यागानन्तरं, **अमुं लोकम्** - परमव्योमलोकं **गच्छति** वा न वा, **आहो** - आहोस्वित्, **विद्वान्** - सर्वहृदयगुहान्तर्वर्तिनं परव्योम्नि स्थितम् परब्रह्म विद्वान् यः **कश्चित्** - परतत्ववेत्ता **प्रेत्य** - देहत्यागानन्तरम्, **अमुं लोकम्** - हृदयगुहान्तर्वर्तिनं परव्योम्नि स्थितम्, परब्रह्म, विद्वान् यः कश्चित् परमव्योमशब्दवाच्य-परमपदम्, **समश्नुता** - प्राप्नोति वा नेति प्रश्नार्थः । देहत्यागानन्तरम् अविद्वान् अमुं लोकं संसारं प्राप्नोति इति । ब्रह्म विद्वान् परमपदं प्राप्नोतीति प्रश्नानाम् उत्तरमपि अर्थात् उक्तं भवति । **सोऽकामयत** इति । **सः** - पूर्वोक्तमुक्तप्राप्य-जगत्कारणत्वविशिष्ट आनन्दमयपरब्रह्म, **अकामयत बहु स्यां प्रजायेयेति** ।

चेतनाचेतनशरीरको वा, देवमनुष्यादिबहुरूपेण भवेयम् इति संकल्पम् अकरोत्, **सः** आनन्दमयः परमात्मा **तपः अतप्यत** - आलोचनं कृतवान् *तप आलोचने* इति धातुः । **स तपस्तप्त्वा सः** - परमात्मा चेतनाचेतनजगत्सृष्टिविषयकालोचनं कृत्वा, **इदं सर्वमसृजत यदिदं किञ्च** इति ।। **इदम्** - परिदृश्यमानं चेतनाचेतनात्मकम्, **यत्किञ्चित्** - जगदस्ति, **तत्सर्वम् - सृष्टान् तदेवानुप्राविशत्** - सृष्ट्यनन्तरं तदेव जगत्, **अनु प्राविशत्** - प्रविवेश **तदनुप्रविश्य** - जगति ब्रह्मप्रवेशानन्तरम्, **सच्च त्यच्चाभवत्** इति । निर्विकारतया सत्, चेतनम् अभवत्, **त्यच्चाभवत्** पूर्वावस्थात्यागे विकारास्पदम् अचेतनम् अभवत् । **निरुक्तं च अनिरुक्तं च** इति । जातिगुणाभिधायि अचेतनं निरुक्तं इत्युच्यते । जातिगुणादिशून्यं चेतनजातम्, **अनिरुक्तम्** इत्युच्यते । **निलयनं च अनिलयनं च** अचेतनवर्गाधारभूतं चेतनं **निलयनम्** इत्युच्यते । पूर्वावस्थात्यागि अचेतनम् **अनिलयनम्** इत्युच्यते । **विज्ञानं च अविज्ञानं च** - अजडं चेतनजातं च **विज्ञानम्** इत्युच्यते । जडम् अचेतनम् **अविज्ञानम्** इत्युच्यते । **सत्यं च अनृतं च सत्यमभवत्** इति । **यदिदँ** परिदृश्यमानं चेतनाचेतनात्मकम्, यत्किञ्चित् जगत् अस्ति **तत् सर्वं सत्यमित्याचक्षते** सत्यात्मकपरब्रह्मानुप्रवेशात्, शास्त्रदृष्टिमन्तः, श्रीपराशरादयः *हरेर्न किञ्चिद्व्यतिरिक्तमस्ति* (वि.पु.२-७-४३) इति, *भूतानि विष्णुः भुवनानि विष्णुः* (वि.पु.२-१२-३८) इति च वदन्ति । **तदप्येष श्लोको भवति** । **तत्** - तस्मिन् आनन्दमय ब्रह्मविषये, **एषः श्लोको भवति** ।।

**तै.भा. - ब्रह्म** सर्वशेषिभूतं वस्तु **असत्**[१] । अन्यथारूपम् इति अशेषिभूतम् इति **वेद चेत्** स स्वयम् **असन्नेव भवति** स्वरूपात् प्रच्युतो भवति । **अस्ति ब्रह्म** सर्वशेषि **ब्रह्मेति वेद चेत्** एनं वेदितारं सन्तम् लब्धस्वरूपं **विदुः** स्वरूपज्ञाः । तस्मात् न ब्रह्मज्ञानातिरिक्तं किञ्चित् अपेक्षणीयम् इति भावः । अन्नमयादिवत् अस्य न आत्मान्तरम् अस्ति इत्याशयेन आह - **तस्यैष एव** इति । यद्वा सर्वत्र तस्य इत्यादिवाक्यस्य एवं योजना । **पूर्वस्य तस्यैष एव शारीर आत्मा** इत्यर्थः । **पूर्वस्य** इत्यनुवादेन अनुपदप्राप्तः अन्तरात्मतया सम्बन्धी लभ्यते । पूर्वस्य अन्नमयस्य योऽयम् अन्तरात्मा प्राणमयः स एव तस्य शरीरात्मापि इत्यर्थः । प्रकृतेपि विज्ञानमयस्य योयः अन्तरात्मा स एव शरीरात्मापि इत्यर्थः । *तत्र स वा एष पुरुषोऽन्नरसमयः* इति आरभ्य *सन्तमेनं ततो विदुः* इत्यन्तेन ग्रन्थसन्दर्भेण स्थूलारुन्धतीन्यायेन अन्नमय-प्राणमय-मनोमय-विज्ञानमयम् उपदिश्य सर्वेभ्यः

---

१. अ इति प्रत्येकं पदम् । ब्रह्म सत् इति अवेद चेत् इति भगवद्रामानुजव्याख्या ।

सूक्ष्मतरं परमात्मानम् आनन्दमय इति उपदिशति । एतत् विवरणरूपोत्तरानुवाके जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणं प्रणीयते । न ब्रह्मबुद्धिक्रमेण अन्नमयादिकारणत्वं ब्रह्मणो लक्षणं प्रणीयते । न ब्रह्मबुद्धिं क्रमेण अन्नमयादिषु अवतार्य आनन्दमये ब्रह्मलक्षणपर्यवसानोपदेशात् । न च तत्र मयट्प्रत्ययाभावेन न अन्यार्थत्वं शङ्कनीयम् । तत्रैव फलवाक्ये एतम् अन्नमयम् आत्मानम् इत्यादिना सर्वमयट्प्रयोगात् । सूत्रकारश्च तथाह *आनन्दमयोऽभ्यासात्* (ब्र.सू.१-१-१३) इति । तस्माद्वा एतस्मात् आत्मन इति प्रसङ्गात् शरीरत्वनिर्देशवत् अत्रापि अपरिच्छिन्नानन्दत्त्वम् उपदेष्टुं ब्रह्मपदं विहाय आनन्दमयपदप्रयोगः । तस्मात् जगत्कारणस्य ब्रह्मणः सर्वसूक्ष्मत्वं च सुबोधं प्रतिपादितम् इति सिद्धान्तः ।

अत्र शाङ्कराः प्राहुः न आनन्दमयः परमात्मा, आनन्दप्रचुरत्वे दुःखाल्पत्व प्रसङ्गात् । यथा *ब्राह्मणप्रचुरो देश* इत्युक्ते शूद्राल्पत्वं प्रतीयते, तद्वत् । उत्तरप्रपाठके च *अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमया मे शुद्ध्यन्ताम्* इत्युच्यते । न च आनन्दमयः शोध्यो भवितुम् अर्हति । *तस्यैष एव शारीर आत्मा* इति आनन्दमयस्यापि शारीरात्मकत्वम् उच्यते तदा आनन्दमयस्य परमात्मत्वं न घटते । न च तत् अनन्यात्मत्वपरं *स्वे महिम्नि प्रतिष्ठितम्* इतिवत् इति वाच्यम् ; मुख्ये सम्भवति गौणकल्पनायाः अन्याय्यत्वात् । तस्मात् जन्तुकोशवत् अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयान् पञ्चशरीरकोशान् सशरीरकान् प्रतिपाद्य तस्य सर्वस्य आधारभूतं पुच्छं ब्रह्म प्रतिपाद्यते । तद्द्वितीयः अयं श्लोको *असन्नेव* इति । तस्मात् *ब्रह्मविदाप्नोति परम्* इति प्रक्रान्तं ब्रह्म *तस्माद्वा एतस्मादात्मनः* इत्यादिना जगत्कारणम् इत्युक्त्वा *स वा एष पुरुषोऽन्नरसमयः* इत्यादिना जीवशरीरभूतानां पञ्चानां कोशानां आधार इत्युच्यत इति न आनन्दमयस्य परमात्मत्वगन्धोऽपि इति ।

अत्रोच्यते यत्तावदुक्तम् आनन्दप्रचुरः इत्युक्ते दुःखाल्पत्वं प्रतीयते ; अतो न आनन्दमयः परमात्मा इति तन्न, प्रकाशप्रचुर; सविता इत्युक्ते न अप्रकाशमान्द्यं सवितुः प्रतीयते, अपितु सजातीयानां चन्द्रादीनां अल्पप्रकाशत्वमेव गम्यते । तथा अत्रापि सजातीयानां देवगन्धर्वादिचेतनानाम् अल्पानन्दत्वमेव गम्यते तथैव आह श्रुतिः **सैषानन्दस्य** इत्यादिना । अतो विवरणानुसारेण अर्थे वर्णनीये न आनन्दमयस्य दुःखाल्पत्वप्रसक्तिः ।

यदपि उक्तं शोध्यत्ववादो न ब्रह्मणो युज्यत इति तदपि न । पापिनोऽवलोक्य कलुषहृदयस्य ब्रह्मणः प्रसादरूपशुद्धिसंभवात् ।

यदपि च उक्तम् आनन्दमयस्य आत्मत्वेन शारीरात्मकत्वं सङ्गच्छत इति, तदपि *स्वे महिम्नि प्रतिष्ठितम्* इति अनन्याधारत्वोक्तिवत् अनन्यात्मत्वप्रतिपादनसंभवात् । न च क्लिष्टकल्पनाधिगमनं ; *गगनं गगनाकारम्* इत्यादौ अनन्योपमानत्ववत् तथा प्रतिपादनस्य चमत्कारकारित्वात् । न च पुच्छब्रह्मणः आनन्दमयात् अन्यत्वं वक्तुं युक्तम् । पूर्वपर्यायेषु अनन्यस्यैव पुच्छत्वनिरूपणात् । **असन्नेव** इति श्लोकोऽपि न पुच्छविषयः, सर्वत्र उदाहृतश्लोकानां तत्तदन्तरात्मविषयत्वापवादात् । **सोऽकामयत** इति उत्तरवाक्ये पुल्लिङ्गनिर्देशोपि आनन्दमयपरामर्शीति तस्यैव परमात्मत्वं स्वरसम् । शरीरत्वं च जीवस्येव परमात्मनोऽपि अन्तर्यामिब्राह्मणादौ श्रूयते ।

न च *एतम् आनन्दमयमात्मानम्* उपसङ्क्रामति इति उत्तरत्र अन्नमयादिवत् त्याज्यत्वश्रवणात् न आनन्दमयः परमात्मा इति चेन्न ; तस्य त्यागवाचित्वव्युत्पत्तेः प्राप्तौ एव प्रचुरप्रयोगात् तस्मात् आनन्दमयः एव परमात्मा ।

माध्वास्तु आहुः न केवलम् आनन्दमयः एव परमात्मा । किन्तु, अन्नमय-प्राणमय-मनोमय-विज्ञानमयश्च । सर्वत्र प्राचुर्यार्थे मयट्प्रत्ययः । येऽन्नं ब्रह्मोपासते, *आनन्दं ब्रह्मणो विद्वान्* । *विज्ञानं ब्रह्म चेद्वेद* । *अस्ति ब्रह्मेति चेद्वेद* । इति अन्नमयादीन् प्रति उदाहृतश्लोकेषु तद्विषयत्वेन ब्रह्मशब्दश्रवणात् अन्नमयादीनां पञ्चानाम् अपि ब्रह्मत्वं दुरपह्नवम् । न च एकस्य ब्रह्मणः कथं भेदः ? इति शङ्कनीयम् । यत एकस्य अपि अनन्तरूपत्वं प्रमाणबलात् अविरुद्धम् ।

ननु *तस्माद्वा एतस्मादन्नरसमयादन्योन्तर आत्मा प्राणमयः* इति अन्योन्यम् अन्यत् आकाशं सङ्गच्छते । विग्रहभेदादेव इति अवसीयताम् इति । तदेतत् असमीचीनम् - *अन्नात् पुरुषः* इति अन्नात् उत्पन्नस्यैव अन्नरसमयपुरुषत्वाभिधानात् । न तु भगवद्विग्रहः अन्नात् उत्पद्यते । ननु अत्र तच्छब्दो न अन्नोत्पन्नपुरुषपरामर्शी । किन्तु *आत्मन आकाश* इत्यत्र प्रकृतात्मपरामर्शी मुक्तिजनकज्ञानविषयत्वंब्रह्मसंशब्दनाद्यर्थस्वारस्येन व्यवहितपरामर्शित्वात्...... स्यात् इति चेन्न ब्रह्म संशब्देन अस्य दृष्टिविशेषणत्वेन उपपत्तेः ।

न च सर्वान्नप्राप्तिः मुक्तिः येन मुक्तिजनकज्ञानविषयतान्नमयस्य स्यात् एतत्सामान्यार्थके उत्तरानुवाके अन्ने ब्रह्मत्वज्ञाने सानुशयेन शिष्येण *पुनरेव वरुणं पितरमुपससार* इति उत्तरोत्तरं आनन्दमयान्तम् उपसर्पणदर्शनात् न आनन्दमयात् अन्येषां ब्रह्मत्वम् । अन्नादिशब्दानाम् अन्नमयादिपरत्वम् ।

*एतमन्नमयमात्मनमुपसङ्क्रम्य* इत्यादिवाक्यैक्यं स्यात् इत्युक्तम् । यदि च अन्नमयादयः पञ्चभगवद्विग्रहाः स्युः, तर्हि उत्तरोत्तरस्य पूर्वपूर्वान्तरत्वं न सम्भवति । न हि एको विग्रहो विग्रहान्तरस्य अन्तरो भवति । शरीरात्मकत्वं च न स्यात् । त्वन्मते भगवत्स्वरूपत्वात् विग्रहस्य इति संक्षेपः ।

*ब्रह्म विदाप्नोति परम्* इत्यादिना प्रक्रान्तस्य उपदेशस्य अनुकूलप्रश्नं दर्शयति **अथातः** इत्यादि । एवम् उपदेशानन्तरं **अतः** - उपदेशस्य प्रश्नपूर्वकत्वात् हेतोः, **अनुप्रश्नाः** - उत्तरानुकूलप्रश्नाः उच्यन्त इति शेषः । अवयवबाहुल्यात् बहुत्वम् ; *अदितिः पाशान्* इतिवत् । **उता** इति प्रश्नार्थो निपातः । तथा अहो इत्यपि । **अविद्वान्** - विना ज्ञानं कर्मानुष्ठायी **कश्चन** इतः **प्रेत्य अमुं** - मुक्तप्राप्यं **लोकं गच्छति** । आहो विद्वानेव कश्चित् इतः **प्रेत्य अमुं लोकं समश्नुते** इति ।

अस्य उत्तरं ब्रह्मविदेव परं प्राप्नोति इत्युक्त्वा, परमे व्योमन् सर्वान् कामान् समश्नुते इत्यादि ।

ननु परस्माद् ब्रह्मणः सर्वं कार्यम् उत्पद्यते इत्युक्तम् तदयुक्तम्, तदतिरिक्तकर्तुः अभावात् इत्याशङ्क्य तस्यैव कर्तृत्वं च इत्याह - **सोऽकामयत** इत्यादि । **सः** - पूर्वम् उपादानत्वेन उक्तः परमात्मा **अकामयत** । कथमिति ? बहु स्यां प्रजायेय इति । **बहु स्याम्**- सुरनरतिर्यक्स्थावरादिभेदेन बहुविधः स्याम् । इत्थं प्रलयसीम्नि संसरतो चिदविशेषितान् जीवान् आलोक्य दयया निसर्गसिद्धया तान् करणकलेबरैः स्वचरणकमलसमाश्रयणाय घटयितुम् ऐच्छत् । उत्तमपुरुषेण स्वशरीरकृत्यं स्वेनैव कर्तव्यम् इति उच्यते । **प्रजायेय** - आकाशादिरूपेण उत्पद्येय । तत्कृषिसाध्यत्वात् प्रजासृष्टेः । विस्तृतं च एतत् पूर्वमेव ।

अत्र कामोक्त्या कर्तृत्वम् उत्तमपुरुषेण उपादानत्वं च उक्तम् इति अभिन्ननिमित्तोपादनत्वोक्तिः । यद्यपि लोके घटादिकार्येषु निमित्तोपादानयोः भेदो दृष्टः । तथापि लोकोत्तरस्य अस्य सङ्कल्पविशिष्टत्ववेषेण निमित्तत्वं, प्रकृतिविशिष्टवेषेण उपादानत्वम्, इति अविरुद्धम् ।

अत्र माध्वाः -

*सोऽकामयत बहुस्याम्* इति परमेश्वरस्य *अजायमानो बहुधा विजायते* (पु.सू.२१) इति श्रुतिसिद्धानन्तरूपैः बहुभावसङ्कल्पम् आह इति । तन्न ; बहुस्याम् इति सङ्कल्प्य आकाशप्रभृतिसर्जनानुपपत्तेः । न च गुरुस्याम् इति सङ्कल्प्य शिष्यसम्पादनवत् उपपद्यत इति वाच्यम् । समानप्रकरणे छान्दोग्ये *हन्ताहम् इमाः तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि* (छां.उ.६-३-२) इत्यत्र उक्तनामरूपव्याकरणस्थानीयत्वेन अस्य भगवदवतारविषयत्वात् । अतो विषमो दृष्टान्तः।

अथ सङ्कल्पानन्तरभाविकृत्यम् आह - **स** इति । **सः** - एवं कृतसङ्कल्पः **तपोऽतप्यत** - आलोचनम् अकरोत् । *तप आलोचने* (धा.पा.?) इत्यस्माद्धातोः अस् प्रत्ययः ओदनपाकं पचति इतिवन्निर्देशः । प्रपञ्चसृष्टौ कर्तव्यायां कस्य किं रूपं ? किं नाम ? इति वेदशब्देभ्यो विचारयामास इत्यर्थः । तदुक्तं मनुना[1]

*नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।*
*वेदशब्देभ्य एवादौ देवादीनां चकार सः*[2] ।। (वि.पु.१-५-६३)

इति । यद्वा विषमसृष्ट्युपयुक्ततत्तज्जीवकर्माणि आलोचयत् इत्यर्थः । **स तपस्तप्त्वा** इत्यनुवादः । तपस्सृष्ट्याः अव्यवधानज्ञापनाय इदं पूर्वोक्तम् आकाशादिपृथिव्यन्तं **तत्सर्वमसृजत** । आत्मनेपदेन सृष्टिप्रयोजनं स्वस्यैव इत्यवगम्यते । निमित्ताभि...(?) प्रायेण असृजत इत्युक्तम् । उपादानत्वानुगुण्येन इदं सर्वम् अभवत् इत्यपि बोध्यम् ।

*यदिदं किञ्च, तत्सृष्ट्वा* इत्यनुवादः पूर्ववत् । एवं प्रजायते इत्युक्तम् । समष्टिसङ्कल्पं निर्वर्त्य व्यष्टिसङ्कल्पं निर्वर्तयितुम् आह **तदेव** इति । **तत्** - पञ्चीकृतं भूतजातं **अनुप्राविशत्** जीवद्वारेण इति शेषः । सर्वदा सर्वत्र वर्तमानस्य इदानीम् अनुप्रवेशासम्भवात् । स्वशरीरभूतान् जीवान् तत्र अनुप्रवेशयत् इत्यर्थः । *अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि* (छां.उ.६-६-२) इति अन्यत्र श्रुतेः । *तदनुप्रविश्य* इत्यनुवादः पूर्ववत् । तच्छब्देन अन्यवाची (?) सत् चेतनं तत् स्वरूपस्य कदाचिदपि अन्यथा भावाभावात् । **त्यत्** - असत् स्वरूपान्यथाभावसम्भवात् अचेतनशरीरकजीवशरीरको भूत्वा देवमनुष्यादि तत्तन्नाम च अभजत् इत्यर्थः । शरीरं तदन्तर्वर्तिजीवं च विशेषयति **निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च** इति । **निरुक्तम्** - देवमनुष्यादीनां अकृतनिर्वचनम् अचेतनांशेन (?) तदन्यत् अतिरिक्तं चेतनांशेन । एवम् उत्तरत्रापि योज्यम् । **निलयनं** साधारं तदन्यत् **अनिलयनम्** । **विज्ञानं** ज्ञानस्वरूपं तदन्यत् **अविज्ञानम्** । उक्तं ब्रह्मात्मकत्वम् उपसंहरति **सत्यानृते** इति । **सत्यम्** - ब्रह्मोक्तविधया **सत्यानृतमभवत्** - चेतनाचेतनात्मकम् अभवत् । यस्मादेवं तस्मात् **यदिदं किञ्च** दृश्यमानं वस्तुजातं **तत्** - सर्वम् **सत्यमित्याचक्षते** तत्त्वविदः ।।

**प्र. - असन्नेव** इति । पूर्वेषु चतुर्षु पर्यायेषु उदाहृतानां श्लोकानाम्, पुच्छवद्विषयत्वदर्शनात् अयमपि श्लोकः पुच्छवत् आनन्दमयविषकः एव न तु *ब्रह्म*

---

१. पराशरेण इति स्यात् ।

२. सर्वेषान्तु स नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे (म.स्मृ.१-२१) इति मनुस्मृतौ ।

*पुच्छम्* इति निर्दिष्टतदेकदेशविषयः । ततश्च ब्रह्मशब्देन आनन्दमय एव उच्यते । आनन्दमयसदसत्त्वज्ञानात् मोक्षसंसारौ भवतः इत्यर्थः ।

[1]आनन्दमयस्य[1] ब्रह्मणः आकाशादि-विज्ञानमयान्तपदार्थान्तर्यामितया निर्दिष्टस्यापि आत्मान्तरम् अस्ति किम्? इति शंकां व्युदस्यति **तस्यैष एव** इति । **पूर्वस्य** विज्ञानमयान्तपदार्थस्य आत्मभूतः एषः आनन्दमयः आत्मा **तस्य** - आनन्दमयस्य **आत्मा** इत्यर्थः । ततश्च अनन्यात्मत्वम् उक्तं भवति । न च पूर्वेषु पर्यायेषु *तस्यैष एव शारीर आत्मा* इत्यस्य अनन्यात्मकत्वप्रतिपादकत्वादर्शनात् अस्मिन् पर्याये तदाश्रयणे अर्थवैरूप्यं स्यात् इति शंक्यम् । पूर्वेषु पर्यायेषु अनुक्तस्य ब्रह्मावयवत्वस्य इह निरूपणात्, *तस्माद्वा [2]एतस्मादानन्दमयादन्योऽन्तर[2] आत्मा* इति निर्देशाभावाच्च एतत्पर्यायगतस्य, *तस्यैष एव शारीर आत्मा* इत्यस्य अनन्यात्मत्वमेव अर्थः ।

आनन्दमयब्रह्मप्रतिपादनानन्तरं, *ब्रह्मविदाप्नोति परम्* इत्युपक्रमाभिहित प्राप्तिविशदीकरणार्थं प्रश्नान् उपक्षिपति **अथात** इत्यादिना । पूर्वप्रतिपादनस्य बुभुत्साहेतुत्वम् अतश्शब्देन उच्यते । **उता** इति निपातस्य छान्दसो दीर्घः । अथासपत्ना इतिवत् । अविद्वान् इति पदे सति आद्युदात्तत्वं स्यात्; *तत्पुरुषे तुल्यार्थ* (पा.सू.६-२-२) इति स्मरणात् । अन्तोदात्तञ्च इदं पदम् । **उता विद्वान्** इति छेदः । [3]अविप्रकृष्ट[3] [4]हृदयादिस्थानस्थं[4] अनवच्छिन्नं च ब्रह्म उपासीनो विद्वान् [5]किमितः[5] प्रेत्य, **अमुं लोकम्** *परमे व्योमन्* इत्युक्तं लोकं गच्छति? इत्येकः प्रश्नः । उत गत्यनपेक्षं इहैव ब्रह्म आप्नोति ? इत्यर्थसिद्धः प्रश्नः । **आहो विद्वान् समश्नुत** इति भोक्तृत्वं विवक्षितम् । अयमर्थः कश्चित् अहंग्रहेण उपासीनोऽपि विद्वान् अमुं लोकं गत्वा किं समश्नुते? भोग्यभूतं ब्रह्माऽनुभवति ? इत्येकः प्रश्नः । उत ब्रह्मस्वरूपेण एकी भवति? इत्यर्थसिद्धः प्रश्नः । एवं शास्त्रवैविध्यमूलाः गतिविशेषस्वरूपभेदसदसद्भावविषयाः प्रश्नाः बहुवचनविवक्षिताः । एतत्सर्वं व्यासार्यैः *उपासात्रैविध्यात्* (ब्र.सू.१-१-३२) इति सूत्रे स्पष्टमुक्तम् ।

एतान् प्रश्नान् प्रतिवक्तुं जगत्कारणत्वौपयिकगुणविशिष्टस्यैव ब्रह्मणः प्राप्यत्वादिज्ञापनाय आह - **सोऽकामयत** इति । **सः** आनन्दमयः आत्मा, देवमनुष्यादिरूपेण **बहु स्याम्**; [6]तदर्थमाकाशादिरूपेण[6] **प्रजायेय** इति व्यष्टिसमष्टिरूपचेतनाचेतनविषयसंकल्पम् अकरोत् इत्यर्थः । **सः** परमात्मा स्रष्टव्यालोचनरूपं तपः कृतवान् इत्यर्थः । तप

---

1. आनन्दमयरूपस्य - अ,क,ख । 2. एतस्मादन्योऽन्तर - ग,घ । 3. कश्चन अविप्रकृष्ट - ग,घ । 4. हृदयादिस्थम् - ग । 5. किमतः - अ,क,ख । 6. तदर्थमाकाशादिभूतरूपेण - ग,घ ।

आलोचने (श्रौतधातुः) इति हि धातुः । **तत्सृष्ट्वा** इत्यादि । ननु सर्वदा सर्वव्याप्तस्य ब्रह्मणः कोऽसौ सृष्टिकालानुप्रवेशः ? इति चेत् उच्यते - [1]गोजठरगतवत्से गोत्वजातिवत्[1] सर्वव्याप्तस्य ब्रह्मणः प्रत्येकं सर्ववस्तुषु पुष्कलप्रतीत्यर्हस्थितिविशेषे एव अनुप्रवेशः । अनेन, *सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायाम्* इति मन्त्रोक्तम् अनन्तस्य ब्रह्मणो हृदयगुहानिहितत्वम् उपपादितम् भवति । **तदनुप्रविश्य सच्च त्यच्चाभवत्**। सच्छब्देन निर्विकारतया सततैकरूपः चेतनः उच्यते । त्यच्छब्देन [2]पूर्वावस्थात्यागरूपविकारास्पदम्[2] अचेतनम् उच्यते । ब्रह्मैव चेतनाचेतननामरूपभाक् भवति इत्यर्थः । ननु ब्रह्मणः एव सर्वोपादानतया सर्वभावे विकारास्पदत्वं स्यात् इत्याशंक्य आह **निरुक्तञ्च** इत्यादि । जातिगुणक्रियावत्तया [3]जातिगुणाद्यभिधायि[3]शब्दवाच्यम् अचेतनं **निरुक्तम्** । जातिगुणादिशून्यं चेतनजातम् **अनिरुक्तम्** । *एताः भूतमात्राः प्रज्ञामात्रास्वर्पिताः* (कौ.उ.२-६१), इत्युक्तरीत्या अचेतनवर्गाधारभूतं चेतनजातं [4]**निलयनम्**[4] । आश्रितम् अचेतनजातं तु [5]**अनिलयनम्**[5] । **विज्ञानञ्चाविज्ञानञ्च** अजडस्वरूपं जडस्वरूपञ्च । **सत्यं चानृतं च** इति । निर्विकारतया सत्यत्वं चेतनस्य ; इतरस्य तु अतथात्वम् । ततश्च निरुक्तत्वानिरुक्तत्व-निलयनत्वानिलयनत्व-विज्ञानत्व-अविज्ञानत्वयुक्त-सत्यानृतशब्दित-चेतनाचेतननामरूपभाक् भवेदपि ब्रह्म सत्यमेव अभवत् अजहन्निर्विकारत्वलक्षणस्वस्वभावमेव अभवत् इत्यर्थः । **यदिदम्** इति । यस्मात् चेतनाचेतनात्मकवर्गानुप्रविष्टतया सत्यशब्दितस्य ब्रह्मण आत्मत्वम्, अत [6]एव सर्वमपि[6] चेतनाचेतनात्मकं जगत् शास्त्रदृष्टिमन्तः पुरुषाः, पराशरादयः, *हरेर्न किञ्चित् व्यतिरिक्तमस्ति* (वि.पु.२-७-४३), *ज्योतींषि विष्णुः भुवनानि विष्णुः* (वि.पु.२-१२-३८) इत्याचक्षते इत्यर्थः ।।

**कू.भा.** अक्षरार्थस्तु **असन्नेव स भवति** सत्यज्ञानानन्तानन्दलक्षणस्य ब्रह्मणः परमकारणतया सर्वात्मत्वेन अनादिकालाद्यनवच्छिन्नसत्तात्मकत्वात् अतिरिक्तानां एवंविधसत्ताभावात् तदुपासने च तत्सायुज्यात् तद्वदसन्नेव स भवति **असद्ब्रह्मेति वेद चेत् अस्तिब्रह्मेति चेद्वेद सन्तमेनन्ततो विदुः** - उक्तप्रकारेण स्वहृदय पुण्डरीकोदरसन्निहितं विज्ञानमयपर्यन्त पञ्चविंशतितत्वान्तरात्मभूतं परमकारणतया परमव्योमनिहितं सत्यादिलक्षणं

---

1. गोजठरगतवत्से गोत्वादिवत् - ग,घ ; गोजठरगतवत्सवत् - क,ख । 2. पूर्वपूर्वावस्था - ग,घ ।
3. जातिगुणाभिधायि - अ,क,ख । 4. अनिलयनम् - क,ख,च । 5. निलयनम् - क,ख,च ।
6. एव - ग,घ ।

सर्वात्मना अनवच्छिन्नसत्ताकं ब्रह्म अस्ति इति यदि वेद तर्हि *तं तमेवैति कौन्तेय* (भ.गी.८-६) इति न्यायात् सन्तमेनं ततो विदुः आत्मविदः । **इतिः** श्लोकसमाप्तौ । **तस्यैष एव शारीर आत्मा यः पूर्वस्य** तस्य आनन्दमयस्य *विज्ञानमयात् अन्योन्तर आत्मा* (तै.उ.आन.५) इत्युक्तस्य आत्मा इत्युक्ते स्वस्य स्वयमेव आत्मा इति फलितम् ।

ननु कथम् अस्य शारीरात्मत्वं ? तस्यैव निरुपाधिकसर्वशरीरत्वस्य उपपादितत्वात्, बहु स्याम् तदनुप्रविश्य इति वक्ष्यमाणत्वात् । न, *ऐतदात्म्यमिदं सर्वम्* (छां.उ.६-८-७) इति चेतनमिश्रं प्रपञ्चं इदं सर्वमिति निर्दिश्य तस्यैष आत्मा इत्युक्ते सर्वावस्थचेतनं जगत् तस्य शरीरं भवति । तथा च श्रुत्यन्तराणि *अन्तः प्रविष्टश्शास्ता जनानाम्* (तै.आर.३-११-१०) *यस्य पृथिवी शरीरम्* (सु.उ.७) *यस्याक्षरं शरीरम्* (सु.उ.७) *एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण* (सु.उ.७) इति अनुक्रान्तानां सर्वतत्वानां परमात्मशरीरत्वम् अन्तर्यामिब्राह्मणेषु स्पष्टम् अभिहितम् । *सोऽभिध्याय शारीरात्स्वात्* (म.स्मृ.१-८) *जगत्सर्वं शरीरं ते* (रा.यु.१२०-२९) *तत्सर्वं वै हरेस्तनुः* (वि.पु.१-२२-३८) इतिः स्मृति इतिहासपुराणप्रसिद्धिः । एवं हि ब्रह्मविषयकं शास्त्रं शारीरकम् इत्येव अभिधीयते । आनन्दमयस्य आत्मनो वेदनावेदनाभ्यां आत्मलाभ आत्मनाशवचनात् अन्तरात्मपरम्परया आनन्दप्राप्तेश्च । अन्यथा *तस्माद्वा एतस्मात् आनन्दमयात् अन्योन्तर आत्मा* ब्रह्म इत्यपि निरदेक्ष्यत । न चैवं निर्दिश्यते । अतः आत्मशब्देन प्रक्रान्तं ब्रह्म आनन्दमयः इति निश्चीयते इति ।

यदुक्तं **तस्यैष एव शारीर आत्मा** इत्यानन्दमयस्य शारीरत्वश्रवणात् जीवात् अन्यत्वं न सम्भवतीति तदयुक्तम्। अस्मिन् प्रकरणे सर्वत्र *तस्यैष एव शारीर आत्मा यः पूर्वस्य* इति परमात्मनः एव शारीरात्मत्वाभिधानात् कथम् *तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः* (तै.उ.आन.२) इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रज्ञातजीवव्यतिरेकस्य परस्य ब्रह्मणः आत्मत्वेन व्यपदेशात् तद्व्यतिरिक्ताकाशादीनां अन्नमयपर्यन्तानां तच्छरीरत्वम् अवगम्यते ? *यस्य पृथिवी शरीरं, यस्यापश्शरीरं, यस्य तेजश्शरीरं, यस्याक्षरं शरीरं, यस्य मृत्युश्शरीरं, एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः* (सु.उ.७) इति सुबालश्रुत्या सर्वतत्वानां परमात्मशरीरत्वं स्फुटम् अभिधीयते । आनन्दमये तु एष एव इति निर्देशः तस्य अनन्यात्मवं दर्शयितुम् । विज्ञानमयस्य यः शारीरः आत्मा - आनन्दमयस्यापि स एव शारीरः आत्मा - आनन्दमयस्य अभ्यासावगत परमात्मभावस्य परमात्मनः स्वयमेवात्मा इति अवगम्यते । स्वव्यतिरिक्तं चेतनाचेतनं वस्तुजातं स्वशरीरमिति स एव निरुपाधिकः शारीरः आत्मा । अत एवेदं परं ब्रह्म अधिकृत्य प्रवृत्तं शास्त्रं

शारीरकम् इत्यभियुक्तैः अभिधीयते । ततो विज्ञानमयात् अन्य एव परमात्मा आनन्दमयः । *तैनैष पूर्णः* इत्यादि प्रबन्धाभावाच्च आत्मलाभात् न परं विद्यते । **अथातोनुप्रश्नाः अथ** अतिशय-निम्नोन्नतात्मवेदनश्रवणानन्तरम् । **अतः** परमात्मवेदनाभावे स्वाभाविकनिरतिशयानन्दहानिपूर्वक आत्मविनाशभयात् । उक्तार्थस्य अस्माकं असम्भावनीयस्य वेदैकवेद्यस्य दार्ढ्यार्थमेव अनुकूलस्य शिष्यस्य प्रश्नाः । **उता विद्वानमुं लोकं प्रेत्य, कश्चन गच्छति उता** इति निपातस्य छान्दसो दीर्घः । विकल्पगर्भः प्रश्नः । **विद्वान् कश्चन** - यः कोऽपि ब्रह्मज्ञः, सनकविधिशिवादिः वा, प्रतर्दनाचार्यः इन्द्रो वा, हिरण्यसूनुः दानवो वा, रावणानुजो राक्षसो वा, घण्टाकर्णः पिशाचो वा, क्षत्रबन्धुः, विदुरो वा, गोपिकाः, शबरी, वानरो, गृध्रो *येऽपि स्युः पापयोनयः, स्त्रियो वैश्याः तथा शूद्राः* (भ.गी.९-३२) मातंगशुकादयश्च, कश्चन विद्वांश्चेत् ? **अमुं लोकं** परमव्योम इत्युक्तं परमात्मलोकं सदा सूरिभिः नित्यैः दृश्यमानम्, **प्रेत्य** स्थूलसूक्ष्मशरीरेन्द्रियादि सर्वोपाधिविलयपूर्वकं गत्वा, आनन्दमयं विपश्चितम्, किं गच्छति न वा ? एवं वाचनिकं प्रश्नद्वयं हार्दद्वयमिति अनुप्रश्नाः इति बहुवचनोपपत्तिः । तत्र वाचनिकं प्रश्नद्वयं तथा इत्याह । उ इति अवधारणे, *तदेवभूतं तदुभव्यमा इदम्* (महा.ना.उ.२) *तदु चन्द्रमा* (श्वे.उ.४-२) इत्याद्यैकार्थ्यात् । एवं विधं परमात्मानं परमव्योमनिलयम् अर्चिरादिगम्यं क्षुद्रोऽपि ज्ञानी चेत् गच्छति । एवं तत्र च सामीप्य-सारूप्य-सायुज्यादिकं सर्वं च लभते । नात्र संशयः । *अस्मात् लोकात् प्रेत्य* इत्युत्तरवाक्यपूरितेन *अमुं लोकं प्रेत्य* इत्यनेन तत्सालोक्यम् उक्तम् । *आनन्दमयमात्मानं उपसङ्क्रामति* (तै.आन.उ.८) इति तत्सामीप्यम् । *कामान्नीकामरूपी* (तै.उ.भृ.१०) इति समानरूपत्वम् । *सोऽश्नुते सर्वान् कामान् सहब्रह्मणा* (तै.उ.आन.१) *श्रोत्रियस्य चाकामहतस्य* (तै.आन.उ.८) इति तत्सायुज्यम् । *अहमन्नमहमन्नं, अहमन्नादः* (तै.उ.भृ.१०) इति सर्वलाभः उच्यते । अतो यः कश्चिदपि ज्ञानी चेत्, मान्त्रवर्णिकाक्षर-परमव्योमाख्यं अमुं लोकं गत्वा तम् अनन्तस्वरूपं गुणविभवलीलोपकरणविशिष्टं व्याप्य अनुभूय आनन्दमयलोक-पर्यन्तानन्दमयादिलोकानपि सर्वान् कामान्नीकामरूपी अनुसंचरति बाढम् इत्यर्थः ।

अथ यः कोऽपि केवलशास्त्रनिष्ठो ब्रह्मादिनिमित्तकारणमात्रेश्वरवादी च (पशुपतिर्वा) परमाणुकारणवादिनः कणभक्षाक्षपादादयः वा निरवद्यनिरतिशयकर्मयोगनिष्ठोऽपि ब्रह्मज्ञानविधुरः चेत् न गच्छति । का कथा व्याप्तौ ? तथा हि श्रुतिशतं *तमेवं विद्वान् अमृत इह भवति, नान्यः पन्था अयनाय* (पु.सू.१७) *यो वा एतदक्षरं गार्ग्यविदित्वा यजते तपस्तप्यते बहूनि वर्षाणि अन्तवदेवास्य तद्भवति यो वा अक्षरं गार्ग्यविदित्वा अस्मात् लोकात्*

*प्रैति स कृपणः* (बृ.उ.५-८-९) *यः आत्मानम् अनुविद्य विजानाति तस्य सर्वेषु लोकेषु कामचारो भवति* (छां.उ.८-७-३) *तमनुविद्य व्रजन्ति एतांश्च सर्वान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति* (छां.उ.८-१-६) *सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः* (छां.उ.७-१६-२) इति । स्मृतिश्च *एतदन्तास्तु गतयः ब्रह्माद्यास्समुदाहृताः* (म.स्मृ.१-५०) इति मनोः । *सहस्रकरपन्नेत्र* (या.स्मृ.३-११९) इत्यादि याज्ञवल्क्यस्य । *मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः* (भ.गी.८-१५) *आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । पुनर्जन्म न विद्यते* (भ.गी.८-१६) ।

*इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।*
*सर्गेपि नोपजायन्ते प्रलये न व्यथन्ति च ॥* (भ.गी.१४-२)

*बहवो ज्ञानतपसा पूता मद्भावमागताः* (भ.गी.४-१०) *मयि ते तेषु चाप्यहम्* (भ.गी.९-१९) *ज्ञानी त्वात्मैव मे मतम्* (भ.गी.७-१८) *मामेव ये प्रपद्यन्ते* (भ.गी.७-१४) *तमेव चाद्यं पुरुषं प्रपद्ये (भ.गी.१५-४) तमेव शरणं गच्छ (भ.गी.१८-६२) मामेकं शरणं व्रज* (भ.गी.१८-६६) इति च ।

अनन्तरं चतुर्मुखोपरिवर्तमानवाङ्मनसागोचरानन्दः अग्निसूर्यादिसर्वभयंकरशासनः नित्यसूरिपरिषन्मध्यगतः कथं मादृशैः गम्यते, कथंतरां तदनुभवः इत्याशंक्य, सर्वजननिसर्गसुहृदः सर्वस्वामिनः रिपूणामपि वत्सलस्य न चित्रम् इदम् आश्रितवत्सलत्वम् इत्याह - **सोऽकामयत बहु स्यां प्रजायेयेति** इति अशक्यक्रियाशक्योपादानादि स्रष्टृत्वेन तदन्तरात्मकाष्ठात्वेन च अयं परमव्योमनिलयो गुहाशयः सत्यज्ञानानन्दादिलक्षणः शरीरः आत्मा उक्तः । स आदिकाले अगणितगुणदोषः परमवत्सलतया सुरपशुमनुजादि सर्वावस्थसर्वकारणान्तरात्मत्वादिसर्वप्रकारः संश्लेषसुखे सकामः अभूत् । कथम् ? **बहु स्याम् -** ब्रह्माद्यवस्थाभिः अशेषमूर्तिभिः भवेयम् । तदित्थं सुरपशुमनुष्यादिरूपेण विभागेन जायेय इति कामनिवृत्यर्थं **स तपोऽतप्यत** प्राचीनजगत्संस्थानपर्यालोचनपूर्वकसंकल्पः अत्र तपः । यथा आथर्वणे तपसा चीयते ब्रह्म (मुं.उ.१-१-९) यस्य ज्ञानमयं तपः (मुं.उ.१-१-१०) मेधया तपसा जनयति (बृ.उ.३-५-१) इत्यादि च । प्रविश्य आत्मेच्छया हरिः अभिध्योपदेशात् इत्यादि च । इतश्चोभयं ब्रह्मैव । *सोऽकामयत बहु स्यां प्रजायेय* इति स्रष्टुः ब्रह्मणः स्वस्यैव बहुभवनसंकल्पापदेशात्, विचित्र चिदचिद्रूपेण अहमेव बहुस्यां तदर्थं प्रजायेय इति संकल्पपूर्विका हि सृष्टिः उपदिश्यते । प्राचीनजगत्संस्थानम् आलोच्यैव सृजति इति श्रूयते *यथा पूर्वमकल्पयत्* (महा.ना.उ.४४) इति । **स तपस्तप्त्वा** *दध्यौ मुहूर्तं धर्मात्मा* (रा.यु.११७-१) इतिवत् क्षणं ध्यात्वा । अतीतकार्यवेदनात् **इदं सर्वं**

**असृजत** - स्रष्टव्यब्रह्माद्यधिकारहेतुकर्मज्ञानानुष्ठानविभागं क्षणं निश्शेषम् आलोच्य तथैव निश्शेषम् इदं सर्वमसृजत् । **यदिदं किं च** - अणुर्वा महद्वा ब्रह्मादिस्तम्बपर्यन्तं पावनम् अपावनं, मंगळम् अमंगळं, स्वस्वरूपस्वभावापलापशीलं, अतिपातकि-चण्डालाद्यतिपापिष्ठं, वैषम्यनैर्घृण्यरहितं, अनिर्दिष्टसाधनतयानुष्ठितकर्मानुरूपम्, अनन्तविभागम् असृजत् । **तत्सृष्ट्वा तदेवानुप्रविशात्** - एवं सृष्टिरेव महोपकारा, अथापि तत्रापि अपर्यवस्यन् कामातिशयेन तदेव हेयम् अहेयम् इत्यनालोच्य अनुप्राविशत् । यथा मृदनुवृत्तिः घटादिकार्ये युगपत्, एवं सृष्टिवेळायामेव उपादानतया अनुवृत्तौ जातिवत्सर्वत्र पुष्कलप्रतीत्यर्हश्च । अत एव प्रत्यभिज्ञार्होऽपि । अनुवृत्ततया प्रवेशोऽनुप्रवेशः । सर्वानुकूलतया प्रवेशो वा। तत्तत्स्वरूपस्थितिप्रवृत्तिबुद्धीनाम् आनुगुण्याय अस्य प्रवेशः, प्रतिवस्तु प्रवेशो वा अनुप्रवेशः । तत्तत्कर्मेच्छानुगुण्येन प्रवेशो वा । ननु सर्वगतस्य किम् इदानीं प्रवेशो नाम ? सर्वगतात् आकाशात् तन्मध्ये कोऽयं वायोः उत्पत्तिविशेषः आकाशात् पृथक् वस्तुप्रतीत्यर्हः? एवं वायोः पृथग्भूतोऽग्निः। एवम् अनन्तविभागे परमात्मनोऽपि तत्र गोजठरगतवत्सगोत्वजातिवत् पुष्कलप्रतीत्यर्हा स्थितिः अङ्गीकरणीया। *यः पृथिव्यां तिष्ठन्* (बृ.उ.५-७-३) *योऽप्सु तिष्ठन्* (बृ.उ.५-७-४) इत्यादिश्रुतिबलात् । **तदनुप्रविश्य** तत्र च अपर्यवस्यन् , कामादेव परमकारुण्यसौशील्यादिमहोदधिः । **सच्च त्यच्चाभवत्** - **सत्** क्षयादिविकाररहिततया सदा अस्ति इति प्रतीत्यर्हं चिद्वस्तु । **त्यत्** - त्यजति सदा पूर्वपूर्वाकारमिति सततविकारास्पदम् अचिद्वस्तु । *स एव सर्वम्* (कैवल्य.उ.९) *यदस्ति यन्नास्ति च विप्रवर्य* (वि.पु.२-१०-३८) [1]*अश्वत्थश्चास्मि, द्यूतं छलयतामस्मि* (भृ.गी.१०-३६) *कालः कलयतामहम्* (भ.गी.१०-३०) *वेदानां सामवेदोऽस्मि* (भृ.गी.१०-२२) इति सर्वत्र अहंमानं च अकरोत् इत्यर्थः । एवम् अगणितगुणसर्वजन्तु-साधारणपोषणभोगोपपत्तये वाङ्मनसातिभूमिविभवोऽपि *तद्विश्वमुपजीवति* (महा.ना.उ.९१) *तस्य नाम महद्यशः* (महा.ना.उ.१०) *स नो बन्धुर्जनिता स विधाता* (महा.ना.उ.१६) *शान्तिसमृद्धममृतम्* (तै.उ.शि.६) इति विश्वोपजीव्यस्वभावतया सर्वानुप्रवेशसर्वभावपर्यन्त सर्वसृष्टिस्थितिनियमनादौ सकामः। किं पुनः भक्तजनानुप्रवेशतद्भावादौ *भूतानां योऽव्ययः पिता* (वि.स.पू.११०) *पिताऽहम् जगतः* (भ.गी.९-१७) *रिपूणामपि वत्सलः* (रा.यु.५०-५६) इति उच्यमानः । *तस्मादन्नं ददत् सर्वाणि तानि ददाति अन्नात् प्राणा भवन्ति भूतानाम्* (महा.ना.उ.१४५) *आनन्दो ब्रह्मयोनिः* (महा.ना.उ.१४५) इत्यादिना भागवतजनलिप्सया सृष्टिः इति सृष्टिप्रयोजनं विस्तरेण वक्ष्यति। एवं प्रागेव सकामः सर्वभावेन स्थितः परमात्मा ज्ञानी त्वात्मैव मे मतम् (भ.गी. ७-१८) इत्येवं भूतगुणविभवः स्वात्मनि च अनुप्रविश्य अहंकुर्वाणः परं

---

१. **अश्वत्थश्चास्मि** - *अश्वत्थस्सर्ववृक्षाणाम्* इति हि भगवद्गीता (१०-२६) ।

ब्रह्मास्मि इति तस्मात् सर्वम् अभवत् । एवं समस्तचिदचिद्वस्त्वनुप्रवेशेन सर्वात्मभूतस्य ब्रह्मणः उपायत्वात् तत्क्रतुन्यायात् तथावस्थितमेव अश्नुते इति सिद्धम् । अत्र उपासात्रैविध्यम् अहंग्रहोपासनं च उच्यते इति भाष्यकारेण उक्तम्, *जीवमुख्य प्राणलिंगान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्* (ब्र.सू.१-१-३२) इत्यत्र सूत्रार्थः *न वाचं विजिज्ञासीत वक्तारं विद्यात्* (कौ.उ.३-५८) *त्रिशीर्षाणं त्वाष्ट्रमहनं अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्* (कौ.उ.३-९) इत्यादि जीवलिंगात्, *यावद्धि अस्मिन् शरीरे प्राणो वसति तावदायुः* (कौ.उ.३-१५) *अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्य उत्थापयति* (कौ.उ.३-२६) इति मुख्यप्राणलिङ्गाच्च न अध्यात्मसम्बन्धम् इति चेन्न । *उपासा त्रैविध्यात्* हेतोः । उपासनात्रैविध्यम् उपदेष्टुं तत्तच्छब्देन अभिधानं निखिलकारणभूतस्य ब्रह्मणः स्वरूपेण अनुसन्धानं भोक्तृवर्गशरीरत्वानुसन्धानं भोग्यभोगोपकरणशरीरत्वानुसन्धानं च इति त्रिविधम् उपासनं उपदेष्टुम् इत्यर्थः । तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वपि आश्रितम् । इहापि *सत्यं ज्ञानमनन्तं ब्रह्म* (तै.उ.आन.१) *आनन्दो ब्रह्म* (तै.उ.आन.६) इत्यादिषु स्वस्वरूपानुसन्धानम् । *तत्सृष्ट्वा तदेवानुप्राविशत्, सत्यञ्चानृतञ्च सत्यमभवत्* इत्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया च अनुसन्धानम् । एतदुक्तं भवति - यत्र हिरण्यगर्भादि जीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणां च परमात्मसाधारणधर्मयोगः तदभिधायिनां च शब्दानां परमात्मवाचिशब्दैः सामानाधिकरण्यम् प्रवृत्तिनिमित्तभेदेन एकार्थवृत्तित्वम् सामानाधिकरण्यं दृश्यते । तत्र परमात्मनः तत्तच्चिदचिद्विशेषणान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितम् इति । एवं परमात्मनः निरवधिक-वर्धिततुंगस्य प्रेमस्वभावतया निम्नत्वकाष्ठापि अस्ति इत्युपपादितम् । कथम् भगवदेकोपासनस्य सर्वलोकभावादि व्याप्तिसम्भवः इत्याशंका परिहृता । *तदनुप्रविश्य सच्चत्यच्चाभवत्* इत्यत्र समानकर्तृत्वश्रुत्या अङ्गाङ्गिभावासिद्धेः तत्तदनुप्रवेशाय तत्तच्छरीरहेतुः तत्तद्भावः इति सुस्पष्टः । मुखान्तरेण सामानाधिकरण्यनिर्वाहे श्रुतहानि - अश्रुतकल्पनाप्रसंगः । *सर्वं समाप्नोषि ततोऽसि सर्वः* (भ.गी.११-४०) सर्वगत्वादनन्तस्य स एवाहमवस्थितः (वि.पु.१-१९-८५) *अवस्थितेरिति काशकृत्स्नः* (ब्र.सू.१-४-२२) इत्याद्यविरोधश्च। *य आत्मनि तिष्ठन् आत्मनोन्तरोयमात्मा न वेद यस्यात्मा शरीरम्* (बृ.उ.मा.उ.५-७-२२) *योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः* (सु.उ.७) *अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा* (तै.आर.३-११-१०) इति स्वशरीरभूते जीवात्मनि आत्मतयावस्थितेः जीवशब्देन ब्रह्मप्रतिपादनम् इति काशकृत्स्नाचार्यो मन्यते । अस्मिन् जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचकः न जीवमात्रस्य इति पूर्वमेवोक्तं

*नामरूपे व्याकरवाणि* (छां.उ.६-३-२) इत्यत्र । एवम् आत्मशरीरभावेन तादात्म्योपपादनपरस्य ब्रह्मणः अपहतपाप्मत्व सर्वज्ञत्वादिगोचराः जीवस्यापि अविदुषः शोचतः ब्रह्मोपासनात् अमोक्षवादिन्यो जगत्सृष्टिप्रळयाभिधायिन्यो जगतो ब्रह्मतादात्म्योपदेशपराश्च सर्वाः । श्रुतयः सम्यक् उपपादिताः भवन्ति इति काशकृत्स्नीयमेव मतं सूत्रकारः स्वीकृतवान् ।

विविच्य उपासनार्थं तदुभयं विशिनष्टि - **निरुक्तञ्चानिरुक्तञ्च** जातिगुणक्रियावयवमुखतः शब्दवाच्यं अचिद्वस्तु निरुक्तम् । कल्पनापञ्चकप्रत्यनीकं चिद्वस्तु अनिरुक्तम् । केवलं शरीरद्वारा निरुच्यते इति निरुक्तम् ।

*पुमान्नदेवो न नरः न पशुर्न च पादपः ।*
*शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ।।* (वि.पु.२-१३-६८)
*पुमान् स्त्री गौरयं वाजी कुञ्जरो विहगस्तरुः ।*
*देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु ।।* (वि.पु.२-१३-६८-६९)
*ह्रस्वदीर्घप्लुतैर्यत्तु किंचिद्वस्त्वभिधीयते ।*
*यञ्च वाचामविषयं तत्सर्वं विष्णुरव्ययः ।।* (वि.पु.६-४-४४)

इति । **निलयनं चानिलयनं च** तदाश्रितं जडं निलयनं । *ययेदं धार्यते जगत्* (भ.गी.७-५) *भूतमात्राः प्रज्ञामात्रास्वर्पिताः* (कौ.उ.३-८) इति जडस्याश्रयभूतं चिद्वस्तु न तदाश्रितम् अनिलयनम् । **विज्ञानं चाविज्ञानं च** ज्ञानस्वरूपमेकं, अन्यदचेतनस्वभावरूपम् । **सत्यं चानृतं च सत्यमभवत्** निरुपाधिकसत्यमेकं सर्वदा अहं इत्येकरूपेण गृह्यते । अन्यत् सोपाधिकसत्ताकमपि निरुपाधिकसत्ताकमिव भ्रान्त्या गृह्यते । अनुप्रविश्य कामेन स्वभावे तत्प्रयुक्तदोषप्रसंगः इत्यत्राह **सत्यमभवत्** एवंविधचेतनम् अचेतनं च सर्वम् । सत्यमभवत् ब्रह्मानुप्रवेशेन सर्वात्मभूतं स्वयं सत्यमेव अभवत् । स्वात्मना तद्गतदोषस्वभावैः तत्प्रयुक्तसर्वदोषैश्च अनाघ्रातदोषगन्धम् अविकारमेव अभवत् । अनुप्रवेशेऽपि सर्वत्र असंकुचितः एव इत्याह - **यदिदं किञ्च तत् सत्यमित्याचक्षते** दाश-कित-वक्रिमिकीटादि - भावेनापि अवस्थितं यदिदं अत्यन्तहेयमहेयं वा नित्यमनित्यं वा, **तत् सत्यमित्याक्षते** निर्दोषं परमात्मस्वरूपमेव आचक्षते शास्त्रदृष्टिमन्तः । *ब्रह्माद्यवस्थाभिरशेषमूर्तिभिः हरेः न किंचिद्व्यतिरिक्तम् अस्ति* (वि.पु.२-७-४३) *नेह नानास्ति किञ्चन* (बृ.उ.६-४-११) *न तदस्ति विना यत्स्यात्* (भ.गी.१०-३९) इति पयः इव पित्तोपहतानां विश्वं जगत्पापिनां संसारिणां प्रतिकूलं, परमात्मापेक्षाया सर्व जगत्सुखरूपमेव । तथा च -

*नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम ।।*
*वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ।।* (वि.पु.२-६-४६-४७)

इत्यारभ्य *तस्माद्दुःखात्मकं नास्ति न च किंचित्सुखात्मकम्* (वि.पु.२-६-४९) इति । अतः एवंविधदेवतासायुज्यं प्राप्तः सर्वानन्दः सर्वदोषरहितः सर्वं समश्नुते च । न हि देवतान्तरवत् देशाकालवस्त्ववच्छिन्नरूपः ईश्वरः । **तदप्येष श्लोको भवति** ।।

**आ.भा. - ब्रह्म** पूर्वोक्तपरशब्दप्रतिपाद्यम् इह च आनन्दमयशब्देन यदुक्तं तद्ब्रह्म **असत्** अविद्यमानम् । नास्ति इत्येतत् । **इति वेद चेत्**-एवं यो जानाति स ईदृशज्ञानवान् **असन्नेव** - असाधुरेव **भवति** । परमपुरुषार्थः एव तन्मते न सिद्ध्यति । ब्रह्मणोऽसत्वे तत्प्राप्तिरूपपरमपुरुषार्थस्याऽपि असत्वात् । तथा च परमपुरुषानन्वयात् ब्रह्मणोऽसत्त्ववेत्ता संसारे एव पतति । तस्मादसन् सः संसारी भवति इत्यर्थः । **अस्ति ब्रह्मेति वेद चेद्** ब्रह्मणः सत्त्ववेत्ता यः तं ब्रह्मसत्ववेत्तारं जनं ततो ब्रह्मसत्ववेदनादेव हेतोः **सन्तम्** सत्पुरुषं **विदुः** ब्रह्मवेत्तारः । ब्रह्मसत्ववेदिता हि ब्रह्मप्राप्तिलक्षणं परमपुरुषार्थरूपं मोक्षमपि स्वीकुरुते । **ततः** तस्य सत्यविशिष्टब्रह्मज्ञानात् परमपुरुषार्थान्वयो भवति । तस्मात् स सन् इत्युच्यते । मोक्षभागीत्यर्थः । **इति** शब्दो मन्त्रसमाप्तौ । आनन्दविज्ञानेन मोक्षः तदविज्ञाने संसारो भवति इति फलदर्शनात् आनन्दमयस्तुतिः अनेन मन्त्रेण कृता भवति ।

**पूर्वस्य** विज्ञानमयस्य **यः शारीर आत्मा** आनन्दमयरूपः स एव शारीरः, शरीरे भवः आत्मा । तस्य आनन्दमयस्यापि । यथा अन्नमयादिभ्योऽन्यः तदन्तरश्च अन्नमयादीनां विज्ञानमयपर्यन्तानाम् आत्मा न तथा आनन्दमयस्य आत्मा आनन्दमयभिन्नः आनन्दमयस्य अन्तर्भूतश्च । किन्तु आनन्दमयः एव आनन्दमयस्य आत्मा स्वस्मादभिन्नः एव आत्मा आनन्दमयः इत्यर्थः । तथा च स्थूलारुन्धतीन्यायेन परशब्द-वाच्यान्तरात्मप्रदर्शनप्रकारस्य पर्यवसानम् आनन्दमये एव भवति । ननु अन्नमयादिषु तत्तद्भिन्नतया तत्तदन्तरतया च आत्मप्रदर्शनं प्रक्रान्तम् । इह तु आनन्दमयाऽभिन्नतयैव तदात्मप्रदर्शनम् उच्यते इति प्रकरणाननुकूलम् इति चेत् शृणु । अन्नमयादिषु *तस्माद् वा एतस्मादन्नमयात् अन्योऽन्तर आत्मा प्राणमयः* इत्येवं वाक्यम् अस्ति । श्रुतम् । आनन्दमयपर्याये न एतादृशं वाक्यम् उपलभामहे । तस्मात् न आनन्दमयात् अन्यं तदात्मानं वर्णयामहे । अपि तु **तस्यैष एव शारीर आत्मा यः पूर्वस्य** एतावदेव श्रुतं । ततः आनन्दमयस्य आत्मा न अन्यः किन्तु आनन्दमयः एव । आनन्दमयतदात्मनोः अनन्यत्वम् इत्येतदेव अवगच्छामः इति ।

*ब्रह्म विदाप्नोति परम्* इत्यत्र व्याप्तिशब्दार्थं विशेषतो निरूपयितुम् उत्तरो ग्रन्थः प्रवर्तते । **अथ**शब्दः आनन्तर्यबोधकः । आचार्यवचनानन्तरम् इत्यर्थः । **अतः**शब्दः आचार्यप्रवचनस्य करिष्यमाणजिज्ञासाहेतुभावम् आह । आचार्योक्त्यनन्तरं प्रवचनबलादेव प्रश्नाः समुद्भवन्ति इति समग्रार्थः । प्रश्नस्य रूपमेव आह **उता** इति । उतशब्दस्य छान्दसत्वात् दीर्घे उता इति रूपम् । स च अप्यर्थः । **कश्चन विद्वान्** हृदयगुहागतं परं ब्रह्म समुपास्य तदीयज्ञानशाली **अमुं लोकम्** परमव्योमशब्दितम् अप्राकृतं भगवद्धाम गच्छति किम् ? इत्येकः प्रश्नः । उतशब्दः प्रश्नान्तरं समुच्चिनोति । उत तादृशो विद्वान् लोकान्तरगमनं विना अत्रैव ब्रह्म प्राप्नोति ? इति द्वितीयः प्रश्नः । एवम् उत्तरार्धगतः आहो शब्दोऽपि प्रश्नद्वयं समुच्चिनोति । किं कश्चित् तादृशो विद्वान् अमुं लोकम् **प्रेत्य** परमव्योमशब्दितं भगवद्धाम **समश्नुते** - परमात्मनं तदीयगुणांश्च भुङ्क्ते ? इति तृतीयः प्रश्नः । **आहो** - परमात्मनः तदीयगुणानाञ्च अनुभवरूपमन्तरेणैव ब्रह्मस्वरूपेण एकतां प्रतिपद्यते ब्रह्मस्वरूपो भवति ? इति चतुर्थः प्रश्नः । **उ** शब्दः वितर्कार्थकः ।

पूर्वोक्तप्रश्नानेव प्रतिवक्तुम् अयं ग्रन्थः प्रवर्तते । प्रस्तुतब्रह्मोपासकः परमव्योमशब्दितं भगवद्धाम गच्छति । तत्र गत्वा च परब्रह्म, तदीयान् कल्याणगुणांश्च अनुभवति इति प्रतिवचनग्रन्थतात्पर्यं । तच्चाग्रे स्फुटीभविष्यति । **सः** - आनन्दमयशब्दवाच्यः परमात्मा **अकामयत** संकल्पं कृतवान् । संकल्पस्वरूपं दर्शयति - **बहु स्यां प्रजायेय इति** । **बहु** शब्दस्य **स्याम्** इति क्रियाविशेषणत्वात् नपुंसकत्वम् । आनन्दमयविशेषणत्वे पुल्लिङ्गत्वौचित्यात् । देवमनुष्यपशुपक्ष्यादिरूपः अनेकविधो भवेयम् इत्यर्थः । देवमनुष्यादिरूपैः बहुभवनोपयोगिसंकल्पान्तम् आह **प्रजायेय** इति । आकाशवाय्वादिरूपेण भवेयम् इत्यर्थः । ननु परमात्मनः एव आकाशादिरूपेण जायमानता प्रतीयते संकल्पानुसारेण । सा च सर्वविकाररहितस्य न उपपद्यते । सत्यम् । स्वशरीरभूतव्यष्टिसमष्टिचेतनाचेतनद्वारा एव जायमानता परमात्मन इति विकाराणां तेष्वेव सम्भवात् तद्रूपेण जायमानत्वेऽपि परमात्मनो निर्विकारत्वम् अक्षतमेव इति अवेहि । तदुक्तं परिणामविमर्शे

*ब्रह्मणः परिणामो हि प्रकारद्वारको जगत् ।*
*विकारित्वं ततो द्वारे प्रकृतिपुरुषद्वये ।।*

उक्तं च अस्मत्परमगुरुभिः सिद्धान्तविंशतौ - *परिणामो जगच्चेशः चिदचिद्द्वारको मतः ।* उक्तं च श्रौतसिद्धान्तबिन्दौ श्री श्रुतानन्दाचार्यैरपि -

*विकारं च रामो दयाब्धिस्तथात्वे दयाशून्यतां पक्षपातं च नैति ।*
*प्रकारे विकारस्तथा चित्रसृष्टौ च हेतुर्यतः प्राणिनां प्राच्यकर्म ।।*

इति । **स** - बहुभवनसंकल्पविशिष्टः परमात्मा आनन्दमयः **तपोऽतप्यत** । स्त्रष्टव्यस्य सृष्टिरीतिपर्यालोचनमेव भगवतः तपः । तत्कृतवान् इत्यर्थः । पर्यालोचनं च ज्ञानविशेषः एव । *यस्य ज्ञानमयं तपः* (मुं.उ.१-१-१०) इति श्रुत्यन्तरात् । तपधातुः आलोचनार्थः पाणिनिस्मृतिप्रसिद्धः पाकं पचति इतिवत् तपोऽतप्यत इति प्रयोगः । **स** परमात्मा **तपस्तप्त्वा** सृष्टिप्रकारं पर्यालोच्य **यदिदं किञ्च** दृश्यमानं यत्किञ्चत् अनुमीयमानञ्च तत्सर्वम् **इदम् असृजत** - सृष्टवान् । तदिदं **सृष्ट्वा** - आकाशादिरूपेण नामरूपविशिष्टं विधाय **तदेव** - नामरूपात्मकम् जगत् **अनुप्राविशत्** - प्रविष्टवान् । तज्जगत् अनुप्रविश्य तत्र प्रवेशं कृत्वा प्रवेशानन्तरं **सच्च त्यच्चाभवत्** सत् इत्यनेन चेतनवर्गः उच्यते; तस्य स्वरूपविकाररहितत्वात् सच्छब्दवाच्यत्वम् । त्यत् इत्यनेन अचेतनवर्गः उच्यते । तस्य पूर्वावस्थापरित्यागोत्तरावस्था-परिग्रहरूपस्वरूपविकाराश्रयत्वात् । आनन्दमयः परमात्मैव कृतबहुभवनसंकल्पः सर्वं सृष्ट्वा तत्र अनुप्रवेशद्वारा देवमनुष्यादिरूपः सन् स्वयं बहुरूपः संवृत्तः इति समुदितार्थः । ननु सर्ववस्तुषु सर्वदा व्यापकीभूतस्य परमात्मनः सदैव प्रविष्टत्वात् कथं पुनः प्रवेशो वर्ण्यते इति चेत् शृणु । नात्र प्रवेशो वर्ण्यते ; *अनुप्राविशत्* इति श्रुतेः अनुप्रवेशस्यैव लभ्यमानत्वात् । व्याप्तस्य सर्वत्र प्रविष्टस्यापि अयम् अनुप्रवेशस्तु ब्रह्मणः आनन्दमयस्य विशेषणोपलब्धिसिद्धये । ब्रह्मस्वरूपोपलब्धिः एव ब्रह्मविदाप्नोति परम् इति ब्राह्मणेन प्रकृता । *सत्यं ज्ञानमनन्तं ब्रह्म* इति मन्त्रेण ब्रह्मस्वरूपम् उक्त्वा तज्ज्ञानं हृदयगुहायां विशेषतो भवति इत्युक्तम् *यो वेद निहितं गुहायाम्* इत्यनेन । अतः प्रकृतमेव आनन्दमयज्ञानं । तत्तु विशेषरूपेण हृदयगुहायामेव इति हृदयगुहाप्रवेशः एव अनुप्रवेशः । स च विशेषणोपलब्ध्यर्थः इति । सर्वोपादानस्य परब्रह्मणः, *सच्चत्यच्च* इत्यनेन चेतनाचेतनरूपता प्रदर्शिता । प्रकारान्तरेण विवेचयति **निरुक्तञ्च** इत्यादिना । **निरुक्तम्** - जातिगुणक्रियाविशिष्टतया जात्यादिवाचकशब्देन प्रतिपादितं । तच्च अचेतनजातमेव । तस्यैव गोत्वघटत्वादिजातिमत्वात् शुक्लनीलादिगुणवत्वाच्च चलनादिक्रियावत्त्वाच्च । **अनिरुक्तम्** जात्यादिवाचकशब्देन अप्रतिपादितं तच्चेतनजातं । तस्य जात्यादिशून्यत्वात् जात्यादिवाचकशब्दैः वक्तुम् अशक्यत्वात् । **निलयनम्** - निलीयतेऽचेतनजातं यत्र तत् निलयनम् । अचेतनानां चेतनेषु समाश्रितात्वस्य *भूतमात्राः प्रज्ञामात्रास्वर्पिताः* (कौ.उ.२-६१) इति श्रुतिसिद्धत्वात् । **अनिलयनम्** निलयनभिन्नम् चेतनभिन्नम् इत्येतत् । तच्च अचेतनजातमेव । तस्य चेतनाश्रितत्वेन स्वयमेव निलीयमानत्वात् । **विज्ञानञ्च** विज्ञानस्वरूपं जीवजातमेव, स्वप्रकाशत्वेन विज्ञानरूपतायाः तत्रैव सम्भवः । **अविज्ञानञ्च** - विज्ञानभिन्नजडस्वरूपचेतनवर्गः । **सत्यञ्च** स्वरूपविकाररहितत्वात् चेतनवर्गः ।

**अनृतञ्च** स्वरूपविकारभागचेतनवर्गः । एतत्सर्वं ब्रह्म भवदपि स्वयं सत्यमेव अभवत् । सर्वथा विकाररहितमेव आस्ते इत्यर्थः । अतोऽपि बहुभवनेऽपि तस्य सविकारतापत्तिः न भवति इति भावः । व्याहृतं च एतद्द्वारानन्दाचार्यैः

*स्वरूपे च स्वभावे च विकारः प्रकृतेः खलु ।*
*स्वभाव एव जीवस्य विकारः स्वीकृतो बुधैः ।।*
*ब्रह्मणस्तु विकारो यत्र स्वरूपस्वभावयोः ।*
*व्याकोपावसरः कश्चिच्छ्रुतीनां वर्तते न तत् ।।*

**यदिदं किञ्च -** यत्किञ्चित् दृश्यते अनुमीयते शब्दप्रमाणेन वा ज्ञायते तत्सर्वं सत्यमेव **आचक्षते -** वदन्ति ब्रह्मदर्शिनः । चेतनाचेतनात्मकसकलजगदनुप्रविष्टतया ब्रह्म सर्वात्मभूतम् इति हेतोः ब्रह्मैव सर्वम् इत्येवं वदन्ति इति भावः सर्वस्य ब्रह्मात्मकत्वात् । **तदप्येष श्लोको भवति ।** तस्य एतस्य अर्थस्य स्वसंकल्पादिद्वारा ब्रह्मणो बहुभवनरूपस्य प्रकाशकः एषः वक्ष्यमाणो मन्त्रो भवति इत्यर्थः ।।

**सु. - असन्नेव** इति । आनन्दमयस्यैव इयं स्तुतिः, आनन्दमयात् अनन्यदेव हि ब्रह्म। एतेन पुच्छस्यैव इयं स्तुतिः, पुच्छमेव तु ब्रह्म इत्येतत् अपास्तम् । अन्नमयादिपर्यायेषु अन्नमयादिरेव स्तूयते न पुच्छं शिरो वा । तदवयवस्तुतिः इति प्रकरणाननुगुणम् । ब्रह्म नास्तीति, **चेद्वेद,** ब्रह्म वेद इति यत् तन्नास्ति चेत् इति वा । **स** पुरुषः **असन्नेव भवति** - अहम् अयम् अस्मि इति व्यवहरन्नपि असत्कल्पः एव सः । स हि अर्थविधुरः। योऽर्थविधुरः सः हि **असन्नेव** । सतो हि अर्थान्वयो लक्षणम् । **अस्ति ब्रह्मेति चेद्वेद सन्तमेनं** तत्त्वदर्शिनो **विदुः** । ब्रह्मवेदनात् सत्ता तदवेदनात् असत्ता इत्येतत् । **तस्यैष एव** इति आत्मान्तरास्तित्वशंका व्यावर्त्यते । सोऽयम् आनन्दमयः अनन्यात्मा इति यावत् । ब्रह्म विदाप्नोति परम् इत्यत्र प्रस्तुतस्य ब्रह्मणः स्वरूपं निरूपितम्। अथ **आप्नोति** इत्यनेन विवक्षितां प्राप्तिं विशदीकर्तुं प्रवर्तते - **अथातः** इत्यादिना । **अथ** आनन्दमयं परं ब्रह्म इत्येतत् निरूपणानन्तरम्, **अतः** आप्नोति इति पूर्वम् आप्तेः प्रस्तुतत्वादेव **अनुप्रश्नाः** भवन्ति । प्रश्नरूपमाह **उता** इत्यादिना । **उता** इति दीर्घश्छान्दसः । **विद्वान् - ब्रह्मोपासकः प्रेत्य अमुं लोकं** - परमं व्योम गच्छति । प्लुतः प्रश्नव्यञ्जकः । उत न गच्छति इहैव ब्रह्माप्नोति ? इत्यर्थात् प्रश्नान्तरं गम्यते । अयम् अपरः प्रश्नः - **आहो विद्वान् अमुं लोकं** प्राप्य **अश्नुते** कामान् ? उत न अश्नुते, ब्रह्मणा सह एकीभवति ? इत्यार्थिकः अनुप्रश्नः । प्रश्नम् इमं प्रतिवक्तुम् आरभते - **सोऽकामयत** इत्यादिना ।

विद्वान् अमुं लोकं प्राप्य निरतिशयानन्तकल्याणगुणविशिष्टं ब्रह्म अनुभवति इति प्रतिवचनं प्रतिपिपादयिषितम् । जगत्स्रष्टृत्वोपपादनमुखेन तु कल्याणगुणयोगो निरूपणीयः । तदुपपाद्यते **सोऽकामयत** इत्यादिना । एतेन निर्विशेषब्रह्मात्मभावो नैश्रेयसम् इत्यपास्तम् । परमकारणं हि परं ब्रह्म । तच्च सत्यसंकल्पत्वसर्वात्मतादि अनेकगुणविशिष्टम् । **सः** - आत्मा सर्वान्तरः आनन्दमयः, **अकामयत** । किमिति ? **बहु स्यां प्रजायेय इति** । एतेन चेतनाधिष्ठितजडप्रकृतिकत्ववादः निमित्तोपादानानन्यत्वप्रतिषेधपक्षश्च व्युदस्तः । कामनाश्रवणमात्रात् नायं संसरणधर्मेव । संसरन् पुरुषो हि अनाप्तकामः कामयते केवलम्, कामनया च नियन्त्रितः खिद्यते च । अयं च स्वतन्त्रः कामयते लीलायै, यथाकामं सृजति च । ईष्टे हि एषः । स एषः देवादिरूपेण **बहु स्याम्, प्रजायेय** च आकाशादिरूपेण **इति** अकामयत ।

यद्वा **बहु स्याम्** इत्येतदेव *बहु प्रजायेय* इत्यनेन व्याख्यायते । एतेन बहुभवनं न बौद्धम् आभासमात्रं; न वा नभस इव औपाधिकम्; किन्तु वास्तवम् । बहुधा प्रजननात् इति गम्यते । असत्यपि अर्थतत्त्वे अवभासमात्रम् इति तु बौद्धाः, बहिर्वदवभासते इति। प्रजननमपि आभासमात्रम् इति तु तदनुगामिनः । तथा च प्राप्तम् - बह्विव स्याम् इति संकल्पः, किन्तु बहु स्यामेव इति । अयम् आशयः प्रजायेय इत्यनेन प्रकाशितो भवति । न च अविकृतस्य प्रजननम् अनुपपन्नम् । नामरूपविभागापत्तिमात्रं हि प्रजननम् । तद्विभागापत्तिश्च स्वतनुद्वारेण इति न स्वरूपे विकारप्रसङ्गः । कृतबहुभवनसंकल्पः **सः तपोऽतप्यत** तप आलोचने, पर्यालोचनम् अकरोत्। जगद्रचनाप्रकारपर्यालोचनम् अकरोत् । स तपस्तप्त्वा पर्यालोच्य देवादिविषमभावापन्नम् इदं **सर्वं** यथाकर्म **असृजत । यदिदं किञ्च** नैकमपि अत्र तत्सृष्ट्यगोचरम् अस्ति इत्येतत् । **तत्सृष्ट्वा तदेवानुप्राविशत्** । ननु सर्वदा सर्वत्र व्याप्तस्य कोऽयम् अनुप्रवेशः ? पुष्कलाभिव्यक्त्यर्हः स्थितिविशेषः अयम् । उक्तं च उपनिषत्प्रकाशिकायाम् गोजठरगतवत्सवत् सर्वव्याप्तस्य ब्रह्मणः प्रत्येकं सर्ववस्तुषु पुष्कलाभिव्यक्त्यर्हः स्थितिविशेष एवानुप्रवेशः इति । अयमेव स्थितिविशेषः *यो वेद निहितं गुहायाम्* इति पूर्वं हृदयगुहानिहितत्वलक्षणः प्रतिपादितः ।

**तदनुप्रविश्य सच्च त्यच्चाभवत्** सततैकरूपः चेतनः सत् इत्युच्यते । पूर्वपूर्वावस्थापरित्यागेन परिणामस्वभावम् अचेतनं त्यत् इत्युच्यते । चेतनाचेतनयोः अनुप्रवेशेन तत्तद्रूपोऽभूत् । तत्तन्नामरूपभाक् अभूत् इति यावत् । परस्यैव ब्रह्मणः सृज्यवस्त्वनुप्रवेशमूलकं सृज्यतत्तन्नामरूपभाक्त्वं भवति इति यावत् । सोऽयम् आनन्दमयः परमात्मा बहु स्याम् इति संकल्प्य यथासङ्कल्पं सर्वमिदं सृष्ट्वा तत्र तत्र अनुप्रविश्य तत्तद्रूपो भूत्वा स्वयं बहुरूपो

अभवत् । अनेन उपादानोपादेयभावः परब्रह्मणः निरूपितः । सर्वभावेऽपि परस्य ब्रह्मणो न विकृतता इत्याह - **निरुक्तं चानिरुक्तं च** इत्यादिना । जातिगुणवादिभिः यत् निरुच्यते तत् निरुक्तम् अचेतनम्, आकाशादि । यत् तैः निर्वक्तुम् अशक्यं तदनिरुक्तं, चेतनजातम् । तदेव चेतनाचेतनजातं प्रकारान्तरेण निर्दिश्यते - **निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च** इति । चेतनतत्त्वम् अचेतनाधारत्वात् **निलयनम्** उच्यते। निलयनात् अन्यत् आधेयभूतमचेतनजातम् **अनिलयनम्** उच्यते। विज्ञानस्वाभाव्यात् विज्ञानं चेतनः, ततोऽन्यत् अविज्ञानम् अचेतनजातम् । सततैकरूपतया चेतनजातं **सत्यम्,** विकारास्पदतया अचेतनजातम् **अनृतम्** उच्यते । परंब्रह्म चेतनाचेतनयोः अनुप्रवेशेन अनिरुक्तादिलक्षणचेतनजातं निरुक्तत्वादिलक्षणाचेतनजातं भवदपि स्वयं सत्यमेव अविकृतमेव अभवत् । अत एव ब्रह्मस्वरूपयाथात्म्यविदः **यदिदं किञ्च** आकाशादिभूतजातं देवमनुष्यादिप्राणिजातं वा सर्वं **तत् सत्यमित्याचक्षते** - शास्त्रदृष्ट्या ब्रह्म इत्येव आचक्षते । **तत्** तस्मिन्नेव अर्थे, ब्रह्मैव बहुधा प्रविभक्तम् इत्यस्मिन्नर्थे, **एष** वक्ष्यमाणः **श्लोको भवति** ।।

## सप्तमोऽनुवाकः

**[अभयप्रतिष्ठा]**

**असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानँ स्वयमकुरुत । तस्मात् तत् सुकृतमुच्यत इति । यद्वै तत् सुकृतम् । रसो वै सः । रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवाऽऽनन्दयाति ।। १ ।।**

**यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति ।। तत्त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति ।। २ ।।**

**प्र.दी. - असद्वा इदमग्र आसीत्** इति । इदम् परिदृश्यमानस्थूलचेतनाचेतनशरीरकं परब्रह्म, **अग्रे** - सृष्टेः पूर्वम्, **असद्वा** - अनभिव्यक्तनामरूपविभागयुक्तसूक्ष्मचिदचिच्छरीरकं परब्रह्म **आसीत् ततो वै सदजायत** तत एव सूक्ष्मचिदचिच्छरीरकपरब्रह्मण एव स्थूलचिदचिच्छरीरकपरब्रह्मरूपकार्यप्रपञ्चम् **अजायत** - उत्पन्नम् आसीत् । **तदात्मानँ स्वयमकुरुत** इति । तत् परब्रह्मनिमित्तोपादानकारणं स्वयमेव सत्, **आत्मानं स्वयमकुरुत** - सूक्ष्मचिदचिच्छरीरकं स्वात्मानं स्थूलचिदचिच्छरीरकं स्वयमेव **अकरोत्** । तस्मात्

सूक्ष्मचिदचिच्छरीरकं स्वात्मानं स्थूलचिदचिच्छरीरकं स्वयमेव अकरोत् । **तस्मात् तत्सुकृतमुच्यते** इति । **तस्मात्** स्वात्मनः स्वयमेव कृतत्वात् सुष्ठु कृतं सुकृतम्[1] इत्युक्तं भवति । स्वाभिन्नकार्यनिर्माणात् क्लेशाप्रसक्तित्वं कार्यसौष्ठवं च गम्यते । **यद्वै तत्सुकृतं - यत्** ब्रह्म सुष्ठुकृतम् कार्यं यस्य सुकृतम् परब्रह्म **सः रसो वै** आनन्दरसस्वरूपो वै **रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति** - आनन्दरसस्वरूपं एनम् परमात्मानम्, **लब्ध्वा** - प्राप्य, **आनन्दी भवति** आनन्दयुक्तो भवति । **यत्** यस्मात्, **एषः** पूर्वोक्तः, **आकाशः** सर्वलोकप्रकाशकः **आनन्दः** - आनन्दस्वरूपः प्राप्यः परमात्मा न स्यात् यदि **को ह्येवान्यात् कः प्राण्यात्** तदन्यः **कः** एनम् उपासकम्, **अन्यात्** - चेष्टावन्तं कुर्यात्? *अन चेष्टायाम्* (धा.पा.१०७०) इति धातुः । **प्राण्यात्** - प्राणनव्यापारवन्तं कुर्यात् । सांसारिकम् आपवर्गिकं वा फलं को दद्यात्? न कोऽपि इत्यर्थः । **एष ह्येवानन्दयाति । एषः** - परमात्मा एव सर्वविधानन्दं ददाति इत्यर्थः । **यदा ह्येवैषः** इति । **एषः** उपासकः **अदृश्ये** प्राकृतचक्षुषा **अग्राह्ये अनात्म्ये** - प्राकृतशरीररहिते **अनिरुक्ते** - जातिगुणादिवाचिदेवादिपदावाच्ये, **अनिलयने** आधारशून्ये, **अभयं प्रतिष्ठा** - अभयसाधनभूतां, **प्रतिष्ठाम्** - निरन्तरस्मृतिम्, **विन्दते** - लभते । **अथ** - अनन्तरम् सः उपासकः, **अभयं गतो भवति** संसारराहित्यं प्राप्तवान् भवति । **यदा ह्येवैषः** इति । **यदा हि एषः** उपासकः, **एतस्मिन्** पूर्वोक्तपरमात्मध्यानविषये **उत्** ईषत् **अरम्** अल्पम् अत्यल्पम् इत्यर्थः । **अन्तरम्** विच्छेदम् **कुरुते । अथ तस्य भयं भवति । अथ** अनन्तरं परमात्मध्यानविच्छेदे सति, **तस्य** - उपासकस्य **भयं भवति** संसारभयं भवति । **तत्त्वेव भयं विदुषोऽमन्वानस्य । विदुषः** - उपासकस्य **अमन्वानस्य सतः** परमात्मनो मननम् अकुर्वाणस्य सतः **तत्** संसारभयं तु अस्ति एव । उक्तं महर्षिभिः

*यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ।*
*सा हानिस्तन्महच्छिद्रं सा भ्रान्तिस्सा च विक्रिया ।।* (ग.पु.पू.२२२-२२)

इति । **तदप्येष श्लोको भवति । तदपि** - तस्मिन्नपि आनन्दमयपरब्रह्मविषये **एषः श्लोको भवति ।**

**तै.भा.** - अप्ययपूर्वकत्वात् सृष्टेरपि असत्स्वरूपं दर्शयति - **असद्वा** इति । **इदम्** - दृश्यमानं विभक्तानां नामरूपाकारं **ब्रह्म** - जगत् **अग्रे** - सृष्टेः पूर्वकाले **असदासीत्** -

---

१. स्वेन कृतं स्वकृतं छान्दसं सम्प्रसारणम् इति भट्टभास्करभाष्ये ।

अविभक्तरूपब्रह्म अभूत् इत्यर्थः । **ततः** - सृष्टिव्यापारानन्तरं ब्रह्मणः **सदजायत** - विभक्तनामरूपम् अभूत् इत्यर्थः ।

*सदेव सोम्येदमग्र आसीत्*, (छां.उ.६-२-१) *तद्धेदं तर्हि अव्याकृतमासीत्* (बृ.उ.३-४-७) इति श्रुत्यन्तरैकार्थ्यात् । असच्छब्दस्य तुच्छमात्रपरत्वे शशविषाणादेः इव तदनन्तरं उत्पत्तिः न स्यात् । अतः सृष्टिकालीनावस्थाशून्यत्वमेव असत्वम् इति स्पष्टम् ।

किं चेतनकर्मानुगुणा इयं सृष्टिः ? न इत्याह - **तदात्मानं स्वयम् अकुरुत** इति । **तदा** युगपत् सकलचेतनाचेतनकर्मपरिपाकायोग्ये प्रलये स्वयं निर्हेतुकपरमकृपया **आत्मानम् अकुरुत** । अनेन अभिन्ननिमित्तोपादानत्वं व्यक्तम् उक्तम् । अत एव आह सूत्रकारः *आत्मकृतेः* (ब्र.सू.१-४-२६) इति ।

ननु चेतनसुकृतात् जगत्सृष्टिः इति किंवदन्त्याः का गतिः ? इत्यत्राह **तस्मात्** इति। यस्मात् स्वयमेव अकुरुत, तस्मात् तदेव ब्रह्म **सुकृतमुच्यते** नान्यत् चेतनगतम् अदृष्टं, तस्य युगपत्परिपाके मानाभावात् । एवं जगत्कारणतया उक्तस्य आनन्दस्वरूपत्वम् आह **यत्** इत्यादि । यत्तत् सुकृतम् उक्तं सः रसः आनन्दरूपः । विधेयलिङ्गापेक्षया पुल्लिङ्गत्वम् । आनन्दत्वोक्तेः प्रयोजनमाह - **रसम्** इति । *ब्रह्म विदाप्नोति परम्* इत्यत्र उक्तः अयं ब्रह्मवित् परमानन्दस्वरूपं **लब्ध्वा आनन्दी भवति** - आनन्दसाक्षात्कारस्य आनन्दत्वेन, ब्रह्मसाक्षात्काररूपा ब्रह्मप्राप्तिः परमपुरुषार्थः इत्यर्थः ।

ननु एतादृशमहाफललाभाय अपगतप्रयत्नविशेषेणापि किं भवितव्यं ? न इत्याह **को हि** इति । यत् यदि **एषः** - पूर्वोक्तः **आकाशः** अपरिच्छिन्नः **आनन्दो न स्यात्** - रक्षकत्वेन न अवतिष्ठेत् तदा **को ह्येवान्यात्** करणकलेबरादि प्राप्नुयात् ? **कः प्राण्यात्** - आनन्दं प्राप्नुयात् ? उक्तम् अर्थम् अन्वयमुखेनापि द्रढयति - **एषः हि** इति । **आनन्दयाति** - आनन्दयति । दीर्घश्छान्दसः । अनेन ब्रह्मणः स्वाधीनत्रिविधचेतनाचेतन-स्वरूपस्थितिप्रवृत्तिकत्वम् उक्तम् इत्याहुः ।

ननु *ब्रह्मविदाप्नोति परम्* इति ज्ञानमात्रात् परप्राप्तिः इत्युक्तम् । तदयुक्तम्, उपलम्भविरोधात् इत्याशङ्क्य आह - **यदा इत्यादि । अदृश्ये** - प्रत्यक्षाग्राह्ये, **अनात्म्ये** - आत्म्यं व्याप्यं शरीरं, तद्रहिते । अतः एव **अनिरुक्ते** - देवमनुष्यादिशब्दानिर्वाच्ये, **अनिलयने** - निराधारे **एतस्मिन्** ब्रह्मणि **यदा एषः** - ब्रह्मवित् **अभयं** - संसाररूपभयाभावम् उद्दिश्य **प्रतिष्ठाम्** - स्थैर्यम्, सः एव रक्षकः इति निरन्तरप्रत्ययं **विन्दते । अथ** तदा **सः अभयं गतो भवति** । उक्तमर्थं व्यतिरेकमुखेन द्रढयति - **यदा**

इति । **यदेव एषः** - ब्रह्मवित् **एतस्मिन्** - पूर्वोक्ते परमात्मनि, उः अवधारणार्थः, **दरम्** - अल्पम् , **अन्तरम्** - अवकाशः, विच्छेदमिति यावत् । **कुरुते** - तज्ज्ञानात् प्रच्युतो भवति इत्यर्थः । **अथ** - तदा, **तस्य** - संसारभयं भवत्येव । उपसंहरति - **तत्तु** इति । तस्मात् **विदुषोऽपि** - ब्रह्मविदोऽपि, **अमन्वानस्य** - ज्ञानावृत्तिरहितस्य, **भयं भवत्येव** । अथ अस्य ब्रह्मणः सर्वप्रशास्तृत्वमाह - **तदपि** इत्यादि । **तत्** - तस्मिन् ब्रह्मणि विषये, **एषः** - वक्ष्यमाणः, **श्लोकोऽपि भवति** ।।

**प्र. - तस्माद्वा** इत्यादि । **इदम्** - स्थूलचेतनाचेतनशरीरकं ब्रह्म अनभिव्यक्तनामरूपं ब्रह्मसृष्टेः प्राक् आसीत् । **तस्मात्** इदं जगत् अभिव्यक्तनामरूपम् अभवत् इत्यर्थः । ननु **असत्** - शब्दितस्य ब्रह्मणः उपादानत्वे कर्त्रन्तरम् अपेक्षितम्, निमित्तोपादानयोः भेदावश्यंभावात् इति आशंक्य आह - **तदात्मानम्** इति । आत्मानमेव उपादानत्वेन स्वीकृत्य स्वयमेव अकुरुत । **तस्मात्** इति । यस्मात् स्वयमेव स्वस्य कार्यम् ; अत एव ब्रह्म [1]सुष्ठु[1] कृतं कार्यं यस्य तत् सुकृतम् । कार्यस्य सौष्ठवञ्च अनतिक्लेशरूपत्वम् । स्वभिन्नस्य कार्यस्य निर्माणे हि क्लेशप्रसक्तिः । ततश्च अक्लिष्टकार्यं ब्रह्म इति *निःश्वसितमेतन्महतो* भूतस्य इत्यादि श्रुतयो वदन्ति इत्यर्थः ।

भवतु तत्सुकृतम् ; तस्य उपास्यत्वप्राप्यत्वयोः किम् आयातम् इत्यत्राह - **यद्वा** इति । सुकृतमिति निर्दिष्टं ब्रह्म रसः आनन्दः । तल्लाभात् अस्य आनन्दित्वम् । ततश्च [2]तस्याऽऽनन्दत्वात्[2] प्राप्यत्व-उपास्यत्वे युक्ते इति भावः । तदेव उपपादयति **को ह्येवान्यात्** इति । यदि अयम् अपरिच्छिन्नानन्दरसः परमात्मा न स्यात्, सांसारिकम् आपवर्गिकं वा सुखं कः प्राप्नुयात् ? अत एष एव आनन्दयति । अतः तस्य सर्वविधानन्दहेतुत्वात् तस्य प्राप्यत्वम् अस्तीति भावः । **यदा हि** इत्यादि । **अदृश्ये** - चक्षुरादिग्रहणानर्हे । **आत्म्यम्** व्याप्यम्, शरीरमित्यर्थः । **अनात्म्ये** - अशरीरे इत्यर्थः । अत एव **अनिरुक्ते** - जातिगुणादिवाचिदेवादिपदावाच्ये । **अनिलयने** आधारशून्ये । **अभयम्** - [3]अभयाय[3] । *नाव्ययीभावात्* (पा.सू.२-४-८३) इति चतुर्थ्याः अम्भावः । *अर्थाभावे यदव्ययम्* इति अव्ययीभावसमासः । अभयसाधनभूतां **प्रतिष्ठाम्** - निरन्तरस्मृतिलक्षणां निष्ठां यो **विन्दते** - लभते, सः अभयं प्राप्नोति । अत्र व्यासार्यैः, *अदृश्ये* इति अचिद्व्यावृत्तिः । अनात्म्ये इति बद्धव्यावृत्तिः । स हि परमात्मना व्याप्यः । यद्वा आत्म्यं व्याप्यम्,

---

1. सुखेन - क,ख । 2. तस्याऽऽनन्दस्य - ग । 3. भयाभावाय - क,ख,च ।

कर्मकृतशरीरम् । तद्रहितः अनात्म्यः । **अनिरुक्तः** इति मुक्तव्यावृत्तिः । स हि बद्धावस्थायां देवादिशब्दैः उक्तः । **अनिलयने** इति नित्यमुक्तव्यावृत्तिः । तेषां हि *भगवान् आधारः* इत्युक्तम् । एवं विहितायाः प्रतिष्ठायाः विच्छेदे अनर्थं दर्शयति - **यदा हि** इति । **एषः** उपासकः । **एतस्मिन्** - परमात्मनि, ध्यानस्य **अन्तरम्** - विच्छेद, **अरम्** - अल्पमपि यः कुरुते तस्य भयम् उद्भवति इत्यर्थः । पूर्ववाक्ये **प्रतिष्ठा**शब्देन निरन्तरध्यानवाचिना ध्यानगतनैरन्तर्यस्य विहितत्वात् अत्र **अन्तर**शब्देनापि तस्यैव ध्यानगतनैरन्तर्यस्य विरोधिनो ध्यानविच्छेदस्य ग्रहणम् उचितम्; न तु परोक्तरीत्या । ब्रह्मणि अन्तरं भेदं यः कुरुते जानाति इत्यर्थः उचितः इति द्रष्टव्यम् । वस्तुतस्तु ब्रह्मैक्यवादिनाम् अस्माकं ब्रह्मणि नानात्वनिषेधो न प्रतिकूलः । अस्माभिः नानाब्रह्मवादस्य अनभ्युपगमात् । तथापि प्रकरणानुगुण्यात् उक्तः एवार्थः उचितः इति द्रष्टव्यम् । किं भयम् ? तत्राह **तत्त्वेव** इति । **विदुषः** ब्रह्मोपासननिष्ठस्य तदतिरिक्तविषयस्पृहया निरन्तरं मननम् अकुर्वतः, **तदेव** अमननं भयम् । न हि तदपेक्षया अन्यत् भयमस्ति । उक्तञ्च महर्षिभिः

*यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ।*
*सा हानिः, तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ।।* (ग.पु.पू.२२२-२२)
*वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः ।*
*न शौरिचिन्ताविमुखजनसंवासवैशसम् ।।* **(कात्यायनवचनम्)** इति ।

**कू.भा. - असद्वा इदमग्र आसीत् ततो वै सदजायत** । **इदं** पृथिव्यादि तमःपर्यन्तत्वजातं, ब्रह्मादिजीवजातं च । **अग्रे** - सृष्टेः पूर्वकाले । **असदासीत्, ततः** - पश्चात्तु विपश्चिदानन्दमयात् जातं **सदजायत** । **वै** इति सकलोपनिषत् प्रसिद्धिप्रदर्शनम् । *नान्यत् किंचन मिषत्* (ऐ.उ.१-१-) *नैवेह किञ्चनाग्रे आसीत्* (सु.उ.६) *तमः परे देवे एकीभवति* (सु.उ.२) *तद्विष्णोः परमं पदम्* (सु.उ.६) *एको ह वै नारायण आसीत् न ब्रह्मा नेशानः* (महो.१-१) *अपहतपाप्मा दिव्यो देव एको नारायणः* (सु.उ.६-१) *यस्मिन्निदँ सञ्चविचैतिसर्वम्* (महा.ना.७२) *यस्माज्जाता न परा नैव किंचन, सप्तप्राणाः प्रभवन्ति* (महा.ना.उ.६७) इत्यारभ्य *हिरण्यगर्भं पश्यत जायमानम्* (महा.ना.उ.८४) इत्यन्तं द्रष्टव्यम् । अतः देवतान्तरोपासकः तन्मात्रसायुज्यात् तैरेव सह असन्नेव भवतीति भावः । परस्परविचित्र-विरुद्धानन्तप्रपञ्चस्य तर्हि किम् उपादानकारणम् इति आशंक्य केवलं सत्यज्ञानादिलक्षणः स्वात्मैव सर्वविधकारणम् इत्याह **तदात्मानं स्वयमकुरुत** । **तत्** सत्यं ब्रह्म, आत्मानमेव

उपादानादितया स्वीकृत्य सत्यसंकल्पत्वाद्यनन्तगुणतया निमित्तकारणमपि स्वयं भूत्वा निखिलजगदाकारेण आनन्दमयं स्वात्मानमेव स्वयम् अकरोत् । *तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः* (तै.उ.आन.२) इति भूतसृष्टिक्रमेऽपि उक्तम् । एवं सति सर्वथा सम्भोगप्राप्त्यादिदोषप्रसङ्गः इत्याशंक्य परिहरति **तस्मात्तत्सुकृतमुच्यते इति** । तथा जीववत् अन्येन, *बहुधा विजायते, तस्य धीराः परिजानन्ति योनिम्* (तै.उ.आर. ३-१३-४०,४१) *स उ श्रेयान् भवति जायमानः, तं धीरा सः कवय उन्नयन्ति* (तै.सं.३-६-३) *तस्माद्विराडजायत* (पु.सू.५) इत्यारभ्य *वेदाहमेतं पुरुषं महान्तम्* (पु.सू.१६) *मां तु वेद न कश्चन,* (भ.गी.७-२६)

*अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।*
*इति मत्वा भजन्ते मां बुधा भावसमन्विताः ।।* (भ.गी.१०-८)
*अव्यक्तं व्यक्तमापन्नं मन्यन्ते मामबुद्धयः* (भ.गी.७-२४)
*जन्मकर्म च मे दिव्यमेवं यो वेत्ति तत्वतः ।*
*त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ।।* (भ.गी.४-९)

इति । *लोकवत्तु लीलाकैवल्यम्* (ब्र.सू.२-१-३३) इति च ब्रह्मसूत्रम् । एवं ब्रह्मविद्भिः तस्मात् तत्सुकृतमुच्यते । **इतिः** श्लोकसमाप्तौ । एवंविधस्य स्वात्मनः एव वैश्वरूप्येण निर्माणसामर्थ्यं न अन्यस्यास्ति *ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्* (श्वे.उ.१-३) *ब्रह्मणस्तास्तु सर्गाद्याः भावशक्तयः । भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ।।* (वि.पु.१-३-२) *समस्ताः शक्तयश्चैताः नृप यत्र प्रतिष्ठिताः* (वि.पु.६-७-७०) इति तस्यैवास्ति ।

एवं निखिलजगन्मयं कार्यम् अनुभवतः एव परमानन्दः नैव कारणं ब्रह्मानुभवत इत्यत आह - **यद्वै तत्सुकृतं रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति** - प्रधानादिविशेषान्तं तत्वजातं हिरण्यगर्भादि जीवजातञ्च स्वात्मना एव स्वकामात् एव लीलया चकार । तमेव कामनया वितत्य समागतं स उत्सुको लब्ध्वा आनन्दी भवति । उभयानुरागोऽपि भवेत् । **वै** प्रसिद्धौ । **तत्** सर्ववेदवेदान्तमहर्षिमतसम्मतस्वाच्छन्द्यं अचिन्त्य दिव्यलीलाप्रवृत्त-निश्शेषानन्ताश्चर्यमय-निखिलजगदेककारणभूत-स्वात्मना एव कृतम् । **रसो वै सः** किम् उत्पाद्यः कारणवादी ? सत्यज्ञानवाक्येऽपि आनन्दमयादिशब्दाः प्रयुक्ताः । कार्यान्तरात्मतया एव आनन्दमयो रसः इत्युच्यते । अतः परम् अमृतं **कारणब्रह्म,** तस्य रसांशो निष्कृष्टो निष्यन्दमानः कार्यात्मना अवस्थितं ब्रह्म इति रसः एव इत्युक्तः । अविद्याकर्मवासनादि-परतन्त्रतया स्वपरपूर्वापरावस्थापरिज्ञानेन स्वकर्मभिः गळे पात्रिकया तोयेन जीवान् व्यससर्ज भूम्याम् । *यदोषधीभिः पुरुषान् पशूंश्च विवेश भूतानि चराचराणि* (महा.ना.उ.४)

इत्यनुप्रविष्टेन अनेन कृतत्वात् । जीवानां दुष्कृतवशेन न कथंचिदपि दुष्कृतत्वसम्भवः । अयमेकः एव सुकृतः । तस्याम् अवस्थायां परमलीलानन्दाधिक्यात् परमसारभूतः । अतः एनं लब्ध्वा अयं जीव आनन्दी भवति । हिरण्यगर्भादिसायुज्ये *तु गत्वागत्वा निवर्तन्ते* (वि.पु.१-६-४०) *गतागतं कामकामाः लभन्ते* (भ.गी.९-२१) इति निष्कर्षे केवलदुःखलाभः एव इत्युच्यते । अतो निखिलविकारपुरुषार्थमय-प्रपञ्चात्मकतया अवस्थितं ब्रह्म अनुभवतो पुरुषार्थसम्भवः इत्याशंकापि दूरोत्सारिता । उक्तं भूमविद्यायामपि

*न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।*
*सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ।।* (छां.उ.७-२६-२)

इति । वैश्वानरात्मविद्यायामपि *स सर्वेषु लोकेषु सर्वेष्वात्मस्वन्नमत्ति* (छां.उ.५-१८-१) इति । दहरविद्यायां *च तस्य सर्वेषु लोकेषु कामचारो भवति* (छां.उ.७-२५-२) इत्यादिकम् । *इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्* (तै.उ.भृ.१०) इति अस्यामेव विद्यायां वदति । अतः संकल्पमात्रेण निश्शेषकार्यानुप्रवेशात् [1]क्लेशकर्मविपाकाशया परामृष्टतया अजोऽपि सन्नव्ययात्मा (भ.गी.४-६) इति अजहत्स्वभावतया च कारणरूपम् अत्र अस्ति । इदमेव अनन्तलीलत्वं इति रसं ह्येवायं लब्ध्वा ज्ञानी यावदात्मसु उत्तमानन्दी भवति ।

संसारमध्ये परमात्मनः सानुरागस्य एव अनुप्रवेशो हि दुर्लभतरः । तृषितस्य मरुभूमिपानीयवत्; मध्याह्ने पथिकस्य सच्छायालाभवत्; अन्धकारप्रविष्टस्य आलोकवत्; आतुरस्य दिव्यौषधवत्; पूर्वं महाब्धिमग्नस्य यानपात्रवत्; वनगहनप्रविष्टस्य देशिक-दर्शनवत्; दवाग्निलीढस्य उपरि अनभ्रामृतऽऽसारवत् । तापत्रयानलसंकुलभवमहार्णवनिमग्नस्य हृदयं सदयानुप्रविष्टः । एवं सकामं हृदयगुहायाम् आगत्यापि स्थितं भक्तिश्रद्धासमन्वितः एव उपासीत ।

किञ्च कटकमकुटाद्यलंकाराणाम् एव भोग्यता, न कनकमात्रस्य । *रसो वै सः* अत्यन्तभिन्नानन्तविचित्ररुचीनां सर्वजीवानाम् अविशेषाणाम् अनुभवसम्भवे परमानन्द सम्भवः। वै इति सकल श्रुतिस्मृतीहासपुराणप्रसिद्धः ऋक्ष-वानर-गोलांगूल गृध्रादयः । *सर्वे सर्वं परित्यज्य राममेवान्वयुस्तदा* (रा.अयो.४१-१६) *अलमद्य हि भुक्तेन* (रा.आयो.१७-१०) *सर्वलोकप्रियो रामः , रामः कमलपत्राक्षस्सर्वसत्त्वमनोहरः* (रा.यु.१३१-९९) *अमृतस्येव नातृप्यन्* (महा.भा.५-९२-५१) इत्यादि । आत्मजेषु एवंविधस्नेह*ः* इति किमत्र चित्रम् ।

---

१. *क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः* (यो.सू.१-१४) इति योगसूत्रे ।

**आत्मानं स्वयमकुरुत** *अङ्गादङ्गात् सम्भवसि* (कौ.उ.२-११) *आत्मा वै पुत्रनामासि* (कौ.उ.२-११) । एवं स्वातन्त्र्यकाष्ठा, वात्सल्यकाष्ठा, आनन्दत्वकाष्ठा, सकलेतर-सहकार्यादिनैरपेक्ष्यकाष्ठा, निरतिशयभोग्यत्वकाष्ठा, अनन्तज्ञानादिगुणानां नैसर्गिकत्वकाष्ठा च प्रतिपादिता । तदितरस्य सर्वस्य निश्शेषेण असत्त्वाविशेषश्च प्रतिपादितः । स्वयमेव निरतिशयपुत्रस्नेहेन सर्वतः सहिष्यति चेत् इतः सरसरूपो भवेत् न वा इत्याशंका च परिहृता *रसो वै स* इति निमित्तसमविकार्यादिकारणान्तरं स्वसंकल्पमपि तदानीं नासीत्, केवलम् आत्मना एव आत्मानम् अकुरुत इत्यत्र अनन्तसर्वमंगळगुणजातम् उक्तं भवति । अगणितगुणदोषतया निश्शेषजगत्सर्गनिश्शेषनिखिलभावात् अतिनैसर्गिकं सौहार्दं तत्र प्राधान्येन उक्तम् । *आत्मानं स्वयमकुरुता* इति कार्यकारणयोः अनन्यत्वं च उक्तम् । अतः [1]एकविज्ञानेन सर्वविज्ञानं च ।

यक्षरक्षःपिशाचभूतप्रेतवेताळादि-सकलजगदानन्दनस्य किं चित्रं स्वचरणारविन्दैक शरणानन्दनम् इत्याह - **को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति** इति । ब्रह्मादिषु उपासकेषु च **कः अन्यात्** जीवेत् । *येन जातानि जीवन्ति* (तै.उ.भृ.१) इति हि वक्ष्यति । *अन्यादिति अन प्राणने* (धा.पा.१०७०) **अन्यात्** - अननचेष्टां कुर्यात् इत्यर्थः । **कः** पुनः **प्राण्यात्** प्राणनं वा कः कुर्यात् । अन्यात् प्राण्यात् इति उच्छ्वासनिश्वासौ विवक्षितौ । **यत्** - यदि । **एषः आकाशो आनन्दो न स्यात्** । सम्भवति च परस्य ब्रह्मणः प्रकाशत्वात् आकाशशब्दाभिधेयत्वं आ-काशते आ-काशयति च इति । *आकाशस्तल्लिङ्गात्* (ब्र.सू.१-१-२३) इति सूत्रम् । आकाशशब्दाभिधेयः प्रसिद्धाकाशात् अचेतनात् अर्थान्तरभूतः यथोक्तलक्षणः परमात्मैव, कुतः? तल्लिङ्गात् । *सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते* (छां.उ.१-९-१) इति निखिलजगदेककारणत्वं, सर्वस्मात् ज्यायस्त्वं, परायणत्वम् इत्यादीनि परमात्मलिङ्गानि इति उपलभ्यन्ते । तस्मात् आकाशः परंब्रह्म । *आनन्दः कं ब्रह्म खं ब्रह्म* (छां.उ.४-१०-५) इति अनवच्छिन्नसुखविशिष्टाभिधानम् इति सूत्रोक्तम् । *सुखविशिष्टाभिधानादेव च* (ब्र.सू.१-२-१५) *कं ब्रह्म खं ब्रह्म* इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मणः उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थं च *य एषोऽन्तरक्षिणि पुरुषः* (छां.उ.४-१५-१) इत्यभिधानात् । एवकारः नैरपेक्ष्यं हेतोः द्योतयति । *कं च तु खं च विजानामि* (छां.उ.४-१०-५)

---

१. **एकविज्ञानेन सर्वविज्ञानम् -** सूक्ष्मचिदचिद्विशिष्टब्रह्मणः कारणत्वात्, स्थूलचिदचिद्विशिष्टब्रह्मण एव कार्यत्वात् च कारणभूतब्रह्मज्ञानेन सर्वविज्ञानम् उपपद्यते - *उत तमादेशमप्राक्ष्यः, येनाश्रुतं श्रुतं भवति, अमतं मतं, अविज्ञातं विज्ञातमिति।* (छां.उ.६-१-१) इति । *कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति* (मुं.उ.१-१-३) इति च ।

इत्युक्तस्य उपकोसलस्य इमां आशङ्कां जानन्तः अग्नयः *यद्वाव कं तदेव खं यदेव खं तदेव कम्* (छां.उ.४-१०-५) इत्यूचिरे । ब्रह्मणः सुखरूपत्वमेव अपरिच्छिन्नं इत्यर्थः । तथैव अत्रापि प्रतिपत्तव्यम् । **आनन्दः** इति । अयमर्थः - आकाशवत् व्यापी परमसुखरूपः पुरुषोत्तमः न स्यात् यदि को ह्येवान्यात् कः प्राण्यात् इति । निखिलजगत् उज्जिजीवयिषया न केवलं उच्छ्वासनिश्वासहेतुत्वेन धारकमात्रं, अपि तु **एष ह्येवानन्दयाति** इति धारकपोषकभोग्यदानेन एष एव सर्वं लोकम् आनन्दयति । *अन्नादो वसुदानः* (बृ.उ.४-४-२४) *तद्विश्वमुपजीवति* (महा.उ.ना.९१) इति । एवंविधं परमानन्दरूपं स्वात्मानं हृदिस्थम् अविदित्वा येऽपि अन्यदेवताभक्ताः विनिन्दका वा, तेऽपि *लभन्ते च ततः कामान् मयैव विहितान् हि तान्* (भ.गी.७-२२) । *मूढोऽयं नाभिजानाति लोको मामजमव्ययम्* (भ.गी.७-२५) यथा ज्ञातमपि क्षितिसलिलतेजःप्रभृतीनां वृक्षादीनां च स एव जीवनं यथा सिद्धौषधम् *पुष्णामि चौषधीस्सर्वाः सोमो भूत्वा रसात्मकः (भ.गी.१५-१३),*

*अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।*
*प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।।* (भ.गी.१५-१४)

*मत्तस्स्मृतिर्ज्ञानमपोहनं च* (भ.गी.१५-१५) *कीर्तिश्श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा* (भ.गी.१०-३४) इति ।

**एष ह्येवानन्दयाति** इति । अवधारणेन अन्नमय-मनोमय-विज्ञानयानन्तधारक-पोषक-भोग्यरूपेण दिव्यम्, आनन्दमयात्मानम् एवम् अनंकुशस्वातन्त्र्यात् स्वयमेव अकुरुत। कोऽन्यः एवं समर्थः सौशील्यौदार्यवीर्यादिगुणोत्तुङ्गः ? पुरुषापुरुषविभागं च को जानाति ? यद्वत् मधुकैटभ-हिरण्याक्ष-बलि-बाण-विरोचन-वालि-दूषण-रावण-मुर-नरक-कंसाद्यनन्तोद्धरासुररक्षोनिरसनेन च धर्मस्थापनेन च, एष एव आनन्दयाति *बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः* (रा.सु.३४-३१) *विष्णुरात्मा भगवतो भवस्यामिततेजसः* (महा.भा.कर्ण.३५-५०) इति । अथवा स्वाप्ययसमये सर्वेषाम् अहरहर्विश्रमस्थानतया च आनन्दयति ।

गर्भवासजरामरणनरकाद्यनन्तदुःखभयनिरसनाय अनवधिकातिशयानन्दलाभाय च संक्षेपेण एतावदेव कर्तव्यम् इत्याह - **यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने अभयं प्रतिष्ठां विन्दते, अथ सोऽभयंगतो भवति** इति सत्यापयति हि कृपातिशयप्रसिद्धः, तथा कदाचिदपि ह्येषः यः कोऽपि जीवः । न कालावस्थानिबन्धः इत्यर्थः । *अपवित्रः पवित्रो वा* (वि.ध.१०९-६६) *अमृतस्यन्दिनि पादपंकजे निवेशितात्मा* (स्तो.र.२७) **एषः** जीवः **एतस्मिन्** मन्त्रवर्णादारभ्य उक्तस्वरूपस्वभावगुणविभवलीले हृदयावस्थिते हस्तापचये च अभिप्राये परमवत्सले परमकारुणिके महोदारं अनाघ्रातदोषगन्धे गुणिनि

गुणज्ञे, **अदृश्ये** - *न सन्दृशे तिष्ठति रूपमस्य । न चक्षुषा पश्यति कश्चनैनम्* (क.उ.६-९), *अदृष्टो द्रष्टा* (बृ.उ.३-७-२३), *न चक्षुषा गृह्यते नापि वाचा* (मुं.उ.१-३-८), *मनसा तु विशुद्धेन* (व्या.स्मृ.?)

*देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ।* (भ.गी.११-५२)
*यस्यावताररूपाणि समर्चन्ति दिवौकसः ।।* (?)

*अपश्यन् तत्परं रूपम्* इति ब्रह्मादिकरणागोचरे प्रपञ्चविलक्षणे, **अनात्म्ये** आत्म्यं शरीरं अशरीरे, अतः जीवात्मविलक्षणे । **अनिरुक्ते** मुक्तेः पूर्वं सुरनरादि निरुक्तो जीवः, तस्मादपि व्यावृत्तः । **अनिलयने** स्वे महिम्नि प्रतिष्ठिते । **विष्णोः पदं पश्यति** इति । तदाश्रयेभ्यो नित्यमुक्तेभ्योऽपि अतिदूरे विलक्षणे । एवं निखिलहेयप्रत्यनीकत्वं उक्तं भवति । सकलेतरसातिशयसुखविमुखः एव तस्मिन् भगवति प्राप्यत्वनिष्ठां *त्वमेव देवदेवेश* (महा.भा.शां.२८-२५८) इत्येवं रूपाम्, अत एव अभयरूपां यदि लभते, **अथ** - अनन्तरं तत्क्षणे एव उत्तरपूर्वाघयोः अश्लेषविनाशरूपफलं ददाति एव विपश्चित्परमकारुणिकः । प्रतिष्ठालक्षणं श्रीमद्रामायणोक्तम्

*स्नेहो मे परमो राजन् त्वयि नित्यं प्रतिष्ठितः ।*
*भक्तिश्च नियता वीर भावो नान्यत्र गच्छति ।।*(रा.उ.४.१६) इति वायुसुतेन।
*न देवलोकाक्रमणं नामरत्वमहं वृणे ।*
*ऐश्वर्यं वापि लोकानां कामये न त्वया विना ।।* (रा.अयो.३१-५) इति ।

*सर्वे सर्वं परित्यज्य राममेवान्वयुस्तदा* (रा.अयो.४१-१८) *रामो रामो राम इति प्रजानामभवन् कथाः* (महा.भा.स.२१-५७३) इत्यादि च । *विमुक्तान्यसमारंभो नारायणपरो भव* इति उपायत्वकाष्ठा च तत्रैव । **यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति । यदा एषः** उपासकः एव, **उत्** अपि, **अरं**-अल्पं **अन्तरं** अवकाशः, सन्तानविच्छेदः । **अथ तस्य भयं भवति** पुष्कलभगवदनुसन्धानन्यूनता भवति । विषयान्तरस्य लयः प्रवेशो वा । तथा *सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ।।* (छां.उ.७-१६-२) *वासुदेवे मनो यस्य,* (वि.पु.२-६-४३)

*यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ।*
*सा हानिः तन्महत् छिद्रं सा भ्रान्तिः सा च विक्रिया ।।* (ग.पु.पू.२२२-२२)

इति । अभयं प्रतिष्ठाम् इति अनुयोगिशब्दौ उदरमन्तरं इति प्रयुक्तौ । अतः अत्र भयरूपसंसारप्रवेशः उदरशब्देन उक्तः, स च आत्मभोगं परित्यज्य देहभोगचिन्ताप्रवेशः ।

**अन्तरम्** इति ब्रह्मणि प्राप्यत्वविषयमनःप्रतिष्ठाविच्छेदः । लोके येषु अर्थेषु प्रतिष्ठानि यानि तानि सति सम्भवे तदर्थानि एवेति हि भाष्यम् । किं तत्र भयम् इत्यत्र स्वयमेवाह - **तत्त्वेव भयं विदुषो मन्वानस्य** तत् ब्रह्मेन्द्रादिदेहप्राप्तिकामहतत्वम् एव अस्य आत्मनः भयम् । तु शब्देन अतिदूरं वाचामगोचरं द्योतयति ।

*क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।*
*क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ।।* (वि.पु.२-६-४४)
*तच्चिन्ताविमलाह्लादक्षीणपुण्यचया तदा ।*
*तदप्राप्तिमहादुःखविलीनाशेषपातका: ।।* (वि.पु.५-१३-२१)
*सत्वासक्तमतिः कृष्णे दश्यमानो महोरगैः ।*
*न विवेदात्मनो गात्रं तत्स्मृत्याह्लाददंशितः ।।* (वि.पु.१-१७-३९)
*वरं हुतवहज्वाला पञ्जरान्तर्व्यवस्थितिः ।*
*न शौरिचिन्ताविमुखजनसंवासवैशसम् ।।* (कात्यायनवचनम्)
*दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः ।*
*वृष्टिमन्तं महामेघं नृत्यन्त इव बर्हिणः ।।* (रा.अर.१-१०)
*एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ।*
*दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ।।*

इत्यादि । *यस्य देवे परा भक्तिः* (१६-२) इति च सुबालोपनिषत् । *ज्ञात्वा तमेवं मनसा हृदा च* (महा.ना.उ.१७-१४) इति । एवं परभक्तिरूपतया परमानन्दरूपे ज्ञाने वर्तमाने । **अमन्वानस्य** तदन्यचित्तस्य । संसारदुःखरूपं तदेव महद्भयं भवत्येव ।

कश्चित्परमभक्तोऽपि क्षणं मृगस्मरणात् मृगोभूत् । शिशुपालोऽपि द्वेषेण ऐकाग्र्यात् तत्सायुज्यमवाप । इत्थं भगवद्भक्तिविच्छेदः एव अनन्तदुःखभयरूपः संसारः । वाङ्मनसा अगोचरं ब्रह्म । एवं स्थिते सति कथं चेतनस्य मुहूर्तमपि तच्चिन्ताविमलाह्लादविच्छेदसहनम् ? कथन्तराम् अनन्तदुःखभयापहं मननम् ? कथन्तमाम् उभयदवाग्निदहनम् ? विदुषो मन्वानस्य इत्यस्य अयम् अभिप्रायः - मनुष्याणां सहस्रेषु केषांचिदेव सुकृतिनां सदाचार्यसेवातिशयवतां, तत्रापि लब्धानन्दमयविषयसदुपदेशकाष्ठानां, तत्रापि तदानन्दानुभवप्रतिष्ठानां चेतनानां इहैव परमानन्दो भविष्यति इति वक्ष्यति-*स एकः प्रजापतेरानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य* (तै.उ.आन.८) इत्यारभ्य *यतो वाचो* (तै.उ.आन.९) इत्यन्तेन । अतः एवंविधानन्दमयप्रतिष्ठापर्यन्त ज्ञानपरिकरवतः सकलेतरसांसारिकविषयानलभीतस्य तदानन्दानुभवविच्छेदो भयमिति सुव्यक्तम्

इति । *यमादित्यो न वेद यं मृत्युर्न वेद* (बृ.उ.५-७-१३) इति ये परमात्मविरहेण केवललोकाधिकारचिन्तकाःवर्तन्ते, तेषां तत्सायुज्यम् आपन्नानां च किम् आयातम् इत्याशंक्य तत्र श्लोको भवति इत्याह **तदप्येष श्लोको भवति ।।**

**आ.भा. - अग्रे** सृष्टेः प्राक्काले **इदम्** नामरूपवत्तया दृश्यमानं स्थूलचिदचिच्छरीरकं ब्रह्म **असद् -** नामरूपविभागरहितचिदचिच्छरीरकम् आसीत् । नामरूपराहित्येन अदृश्यमानत्वात् असत् शब्देन व्यपदेशः । **ततः** सृष्ट्यनन्तरं सूक्ष्मचिदचिद्विशिष्टं ब्रह्म एव स्थूलचिदचिद्विशिष्टतया सद्रूपम् **अजायत** - अभवत् । दृश्यमानतया तत्रैव सच्छब्देन व्यपदेशः । तत्कथं सदाभवत् इत्यत्राह **तदात्मानम्** इति । **तत्** सूक्ष्मचिदचिद्विशिष्टं ब्रह्म, **आत्मानम्** स्वमेव **स्वयमकुरुत** स्वात्मानमेव उपादानं कृत्वा स्वयमेव निमित्तं भूत्वा स्थूलचिदचिच्छरीरकं ब्रह्म अभवत् । एतेन ब्रह्मणः एव जगत् प्रति उपादानत्वं, निमित्तत्वं च, उक्तं भवति । अत एव ब्रह्म एव अभिन्ननिमित्तोपादानतया तत्र तत्र वर्ण्यते । **तस्मात्** - यस्मात् कारणात् ब्रह्म स्वयमेव स्वकार्यं भवति तस्मादेव हेतोः तद् ब्रह्म **सुकृतं** सुष्ठु कृतं यस्य तादृशम् उच्यते, श्रुतिभिः इति शेषः । श्रुतयश्च *निःश्वसितमेतन् महतो भूतस्य* (बृ.उ.४-४-१०) इत्यादयः । निःश्वसितशब्देन निःश्वासकरणे यथा न प्रयत्नरूपः क्लेशः तथा क्लेशं विना लीलान्यायेनैव ब्रह्म सर्वं कुरुते इति लभ्यते । स एव च अर्थः सुकृतशब्दव्यङ्ग्यः । क्लेशं विनैव जगत्सर्गो ब्रह्मकृतः इति । जगतः स्वात्मककार्यत्वात् । इतिशब्दो मन्त्रसमाप्तिं द्योतयति ।

**यद्** ब्रह्म, **सुकृतम्** इत्युच्यते श्रुतिभिः तद्ब्रह्म **रसः** अनवधिकानन्दरूपः । **वै**शब्दः अस्यार्थस्य सुकृतशब्देन कथितस्य ब्रह्मणः रसस्वरूपतात्मकस्य अवधारणं बोधयति । **रसम्** - रसस्वरूपं परमात्मानं, **लब्ध्वा** - प्राप्य, अयं जीवः उपासकः **आनन्दी भवति** आनन्दयुक्तो भवति । **हि**शब्दो निश्चये । एतेन आनन्दमयस्य श्रीरामस्य आनन्दयितृत्वकथनात् उपासनीयता प्राप्यता च उक्ता भवति । तस्याः एव विवेचनाय अग्रिमः ग्रन्थः **को हि** इत्यादिः प्रवर्तते । **यदेष** इत्यत्र यच्छब्दो यद्यर्थकः । यदि, **एषः** आनन्दमयस्वरूपः **आकाशः** - आसमन्तात् प्रकाशमानः **आनन्दो न स्यात्** - तदा कोऽन्य अलौकिकं सुखजातम् अनुभवेत् ? **कः प्राण्यात्** - अपवर्गकालिकं सुखं कः अनुभवेत् ? आनन्दस्वरूपस्य परमात्मनः अभावे द्वयोः अन्यतरदपि सुखं कोऽपि अनुभवितुं न

शक्नुयात् इति । तत्कथम् इत्यत्राह **आनन्दयाति** इति । **एष ह्येव** आनन्दरूपः परमात्मा एव । निश्चये **हि**शब्दः । **आनन्दयाति** - आनन्दयति, जीववर्गं यथाधिकारं लौकिकापवर्गिकसुखप्रदानेन । आनन्दयाति इत्यत्र दीर्घश्छान्दसः । उभयविधः आनन्दप्रदः अयमेव, तस्मात् एतदभावे कोऽपि नान्यत् प्राप्याञ्च इति हेतुः उक्तः । उभयविधानन्दहेतुतया अस्यैव प्राप्यत्वम् इति व्यञ्जितम् । **एषः** उपासकः **यदा** - यस्मिन् काले **एतस्मिन्** - आनन्दमये परमात्मनि श्रीरामे । **अदृश्ये** - इन्द्रियागोचरे । **अनात्म्ये** - आत्मा शरीरं तच्च प्राकृतम् इह विवक्षितम् । तस्य इदम् आत्म्यं प्राकृतशरीरसम्बन्धवत् । तद्रहितत्वात् अनात्म्यः परमात्मा । तस्मिन् **अनात्म्ये** प्राकृतशरीरसम्बन्धरहिते । **अनिरुक्ते** जात्यादिविशिष्टतया देवमनुष्यादिशब्दवाच्यं **निरुक्तम्** इत्युच्यते । तद्भिन्नतया अयम् अनिरुक्तः । तस्मिन् प्राकृतशरीररहिततया देवादिशब्दैः निर्वचनाऽयोग्यः इत्यर्थः । **अनिलयने** - निलीयते अस्मिन् इति निलयनम् आधारः, तदस्य नास्तीति अयम् अनिलयनः आधाररहितः इत्यर्थः । परमात्मनः एव सर्वाधारत्वेन तस्य स्वयम् अनाधारत्वम् इति भावः । अत एवोक्तं जगद्गुरु श्रीगङ्गाधराचार्यैः *सर्वाधार नमस्तुभ्यं निराधार नमोऽस्तु ते* (श्रीरामस्तवकलानिधिः इति । **अभयम्** - अभयहेतुभूतां **प्रतिष्ठाम्** - प्रतिष्ठानं प्रतिष्ठा, सा च परमात्मनि जीवस्य नैरन्तर्येण तत्स्मरणादेव भवति । निरन्तरस्मृतिविषयीकरणमेव जीवस्य परमात्मनि अवस्थानम् इत्येतत् । यो यत् सदैव चिन्तयति वदति सोऽहम् अत्रैव सदा तिष्ठामि नान्यत्र विषये मद्रतिः र्भवति इति । तादृशीं प्रतिष्ठां यो **विन्दते** - लभते । **अथ** - अनन्तरं, **सः** - उपासकः **अभयं** सर्वतो भीतिविच्छेदं सांसारिकजन्ममरणादिजन्यभयाभावं **गतो भवति** - निरन्तरस्मृतिलक्षणप्रतिष्ठोत्तरकालीनं सांसारिकभयविच्छेदम् एति इति । यदा तु एषः एवोपासकः **एतस्मिन्** - आनन्दमये ब्रह्मणि, **उदरम्** - अल्पमपि, **उत्** इत्यस्य अपि शब्दसमानार्थता । **अर**शब्दः अल्पार्थकः । **अन्तरम्** विच्छेदं **कुरुते** अभयहेतुनिरन्तरस्मृतिलक्षणायां प्रतिष्ठायां व्यवधानं करोति तदा अभयहेतुभूतायाः तस्याः अभावेन विच्छेदोत्तरकालमेव **तस्य**-स्मृतिविच्छेदकर्तुः उपासकस्य **भयं भवति** । **विदुषः** ब्रह्मज्ञानवतः तत्तु एव भयं, तदेव स्मृतिविच्छेदलक्षणं **भयं** नान्यत् । ब्रह्मज्ञानवतः कथं तदभयं भवति इत्याह - **अमन्वानस्य** - सांसारिकविषयाशावशीकृतमनस्तया यदा कदाचित् स्मृतिविच्छेदो भवति तदा **तत् भयं भवति** । अमननमेव तस्य भयं मननं स्मृतिसन्तानरूपं, तद्विच्छेदः अमननम् उच्यते । स एव स्मृतिविच्छेदः । तदेव च **भयं विदुषः** इति । स्मृतिविच्छेदः न कदापि कार्यः इति भावः । **तदप्येष श्लोको भवति** । तस्मिन् परमात्मनि एव भयहेतुत्वमधिकृत्य वक्ष्यमाणः **श्लोकः** प्रवर्तते इत्यर्थः ।।

**सु.** - असत्कार्यवादव्यावर्तनमुखेन सत्कार्यवादं प्रकाशयन् एकस्य एव अवस्थाभेदेन उपादान-उपादेयभावं च ज्ञापयन् ब्रह्मणः जगदुपादानतां निरूपयति **असद्वा** इति । **अग्रे** सृष्टेः प्राक् आसीत्, न हि विना हेतुं कार्यं स्यात् । किं तदा आसीत्? **इदं आसीत्**, सृष्टेः प्राक् इदम् आसीत् इति व्याहतम् । नैतत्; **असदासीत्** - इदंशब्दाभिप्रेत-नामरूपविभागरहितम् आसीत् । एतेन असीत् इति व्याहतम् इति शंकायां नावकाशः, न हि असत् इत्यनेन अत्यन्तासत्ता विवक्षिता । **ततो वै सदजायत** - नामरूपविभागावस्थारहितात्, अत एव सूक्ष्मात्, इदं सत् नामरूपप्रविभक्तम् **अजायत** । न च अन्यः आसीत् असतः सद्भावापादकः, तदेव **आत्मानम्** - असद्रूपेण अवस्थितं स्वयं विभक्तनामरूपम् **अकुरुत** । नामरूपविभागाापन्नस्थूलचिदचिच्छरीरकम् इदं ब्रह्म प्राक् नामरूपविभागरहितसूक्ष्मचेतनाचेतनशरीरकम् आसीत् । तदेव स्वयं स्वात्मानं अकुरुत । नामरूपविभागापन्न स्थूलचिदचिच्छरीरकम् अकुरुत इति भावः ।

ननु कथम् अयं भावो गम्यते ? प्रकरणात् । प्रकरणं हि ब्रह्मणः उपादानतानिरूपणे प्रवर्तते । **तत् इदम्** इत्यनेन ब्रह्मणः अन्यदेव ग्राह्यम्, दृश्यमानप्रपञ्चमात्रपरिग्रहे आनुमानिकप्रधानारभ्यजगद्वादः कापिलः प्रोक्तः स्यात् । तथा सति औपनिषदः पक्षः एव समुल्लङ्घितः स्यात् । तत् इदंशब्देन समुपलभ्यमान-स्थूलचेतनाचेतनप्रपञ्चमुखेनब्रह्म बोध्यते । गवादिशब्दैः जात्यादिमुखेन व्यक्तिरिव । जात्यादिरिव जगत् ब्रह्मणाः अपृथक्सिद्धविशेषणम् । **तस्मात्** - यस्मात् स्वयमेव स्वात्मानम् अकुरुत; तस्मात्, तत् ब्रह्म **सुकृतम्** - सुखेन कृतं कार्यं यस्य तथाभूतम् उच्यते । अक्लिष्टकार्यं ब्रह्मेति यावत् । यत्र अन्यत् आरम्भकम् आरब्धा च अन्यः, तत्र कारणभेदेन कार्यस्य न सुखेन सिद्धिः । यत्र सर्वविधकारणभावः एकस्यैव, तत्र न कार्यसिद्धौ क्लेशः । **इति**शब्दः श्लोकपरिसमाप्तौ । तस्यैव अस्य परस्य ब्रह्मणः उपास्यत्वं प्राप्यत्वं च निरूपयन्नाह - **यद्वैतत्सुकृतम्** इत्यादिना । **यद्वैतत्सुकृतं** ब्रह्म **रसो वै सः** । स हि आनन्दस्वरूपः आनन्दमयश्च । **अयम्** - उपासको, रसं तमेव **लब्ध्वा ह्यानन्दीभवति** । तद्रसभूतः आनन्दमयः स एव उपास्यः प्राप्यश्च । सकलफलप्रदश्च स एव, **यद्येष आकाशः** - प्रकाशमयः आनन्दः परमात्मा न स्यात् इह **को वाऽन्यात् को वा प्राण्यात्** अननलक्षणं लौकिकसुखयोगं, प्राणनलक्षणम् आपवर्गिकसुखं च कः प्राप्नुयात् ? अननप्राणनहेतुः स एव इत्यर्थः ।

यद्वा अननं सामान्यतो जीवनम् । प्रकृष्टम् अननम् अपहतपाप्मत्वादिलक्षण स्वाभाविकरूपाभिनिष्पत्तिलक्षणम् । एतदुभयं परमात्मायत्तम् इति । यद्वा अन्यात्

स्यात् इह कोवाऽन्यात् को वा प्राण्यात् - अननलक्षणं लौकिकसुखयोगं प्राणनलक्षणम् आपवर्गिकसुखं च कः प्राप्नुयात् ? अननप्राणनहेतुः स एव इत्यर्थः ।

यद्वा अन्यात् प्राण्यात् इति क्रियाभेदग्रहणं प्राणापानादिवृत्तिभेदोपलक्षकम् । यदि अयम् आनन्दमयः अन्तरात्मतया न सन्निहितः स्यात् को वा प्राणापानादिवृत्तीः प्रवर्तयितुं प्रभवेत् ? तथा च अन्यत्र श्रूयते -

*ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति ।*
*मध्ये वामनमासीनं विश्वेदेवा उपासते ।।* (क.उ.२-२-३) इति ।

इति भावः । **एष एवानन्दं** प्रापयति च । **एषः** - उपासकः **यदा एतस्मिन् अदृश्ये** - चक्षुराद्यगोचरे, **अनात्म्ये** अशरीरे (प्राकृतशरीररहिते) अत एव **अनिरुक्ते** नामजात्यादिनिरुक्तिशून्ये, **अनिलयने** अनाधारे आनन्दमये परब्रह्मणि, **अभयम्** - भयाभावाय प्रतिष्ठां निरन्तरस्मृतिलक्षणां विन्दते, **अथ** तस्योपासकस्य **अभयम्** आत्यन्तिकी भयनिवृत्तिः भवति । यदा उपासकः एतस्मिन् अल्पमपि अन्तरम् - स्मृतिविच्छेदं पूर्वोक्तप्रतिष्ठाव्यवधानलक्षणं कुरुते **अथ तस्य भयं भवति** - सांसारिकम् । न तस्य संसारभयनिवृत्तिः इति यावत् । प्रतिष्ठापदेन योऽर्थो अवगम्यते तत्प्रतिद्वन्द्व्यर्थकेनैव हि अन्तरपदेन भाव्यम् । प्रतिष्ठा च प्रकर्षेण निष्ठा, सा च निरन्तरस्मृतिलक्षणा एव, तस्य अविरोध्यन्तरं च स्मृतिविच्छेदः एव । तदयमेव अन्तरपदार्थः समुचितः । अविदुषां साधारणम् इदं सांसारिकभयम् । **विदुषो मन्वानस्य** मननैकशीलस्य तु, **तत्त्वेव** स्मृतिविच्छेदलक्षणम् अन्तरमेव स्वतो **भयम्** । प्रमादतोऽपि स्मृतिविच्छेदे विच्छेदमेव ते भयं मन्यन्ते इति भावः । तथा च वचनम् -

*यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ।*
*सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ।।* (ग.पु.२२२-२२)

इति । **तत्** - तस्मिन्नर्थे, आनन्दमयविषये इति यावत् । **एषोऽपि श्लोको भवति ।।**

## अष्टमोऽनुवाकः

### [आनन्दमीमांसा]

**भीषाऽस्माद् वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः इति ।। सैषाऽऽनन्दस्य मीमाँसा भवति । युवा स्यात् साधु [1]युवाध्यायिकः[1] । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः ।। १ ।।**

---

1. युवाध्यायकः - अ,ग,घ । *युवाध्यापकः*, इति रामानन्दभाष्य तथा सुबोधिनीसम्मत पाठः ।

ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः ।। २ ।।

स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं आजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानाम् आनन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः ।। ३ ।।

स एको इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । तेये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः ।। ४ ।।

श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानम् उपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति । एतं मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति ।। ५ ।। एतमानन्दमयमात्मानमुपसङ्क्रामति । तदप्येष श्लोको भवति ।।

।। इति अष्टमोऽनुवाकः ।।

**प्र.दी.** - वायुसूर्याग्नीन्द्रादिदेवाः स्वस्वविहितकार्याकरणे परब्रह्मणः किं भविष्यति इति भिया स्वस्वकार्यप्रवर्तने जागरूकाः भवन्ति इत्याह **भीषास्माद्वातः पवते** इति । **अस्मात्** आनन्दमयपरब्रह्मणः आज्ञोल्लङ्घने किं भविष्यति इति **भीषा** - भयेन **वातः** वायुः, **पवते** - सञ्चलति । **भीषोदेति सूर्यः** तथैव सूर्यः प्रातःकाले उदयति । **भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः इति** । तथैव अग्नीन्द्रयमाश्च परब्रह्मभयात् स्वस्वविहितकार्यप्रवर्तने धावन्ति । एते देवाः पञ्च परब्रह्माज्ञोल्लङ्घने किं भयं भविष्यति इति स्वविहितकार्यकरणे जागरूकाः भवन्ति । अतः परब्रह्मप्राप्तिव्यतिरिक्तं चतुर्मुखब्रह्मत्वादिकृत्स्नम् अपि अधिकारं दुःखप्रचुरम् इति यावत् । **सैषाऽऽनन्दस्य मीमांसा**[१]

---

१. मीमांस्यते जिज्ञास्यते सोपपत्तिकं प्रतिपाद्यते आनन्दमयो यया सा आनन्दस्य मीमांसा । (भट्टभास्करभाष्यम्)

**भवति - आनन्दस्य** आनन्दप्रचुरस्य आनन्दमयस्य परब्रह्मणः आनन्दस्य, सा प्रसिद्धा, **एषा** - वक्ष्यमाणा मीमांसा भवति । श्रुतिः मीमांसां वदति इत्यर्थः । जगत्कारणत्वादि धर्मयुक्तानन्दप्रचुर परब्रह्मणः आनन्दस्य इयत्ताभावनिरूपणार्थं **युवा स्यात् साधु युवाध्यापकः** इत्यारभ्यते । **ते ये शतं मानुषा आनन्दाः** इत्यन्तं मनुष्यानन्दस्य इयत्तामाह - **युवा** इति । युवा प्रथमवयस्कः । युवत्वे साधुत्वं नास्ति इत्याह - **साधु-युवा** इति । साधुश्चासौ युवा च साधुत्वधर्मविशिष्टनूतनवयस्कः । यद्वा साधु यथा भवति स्वरवर्णादिलोपरहितं सत् । युवा नवं नवं यथा भवति, तथा अध्ययनं करोति इति **साधु युवाध्यायकः** । यद्वा सम्प्रदायक्रमागतध्ययनशाली वा । यद्वा अभिनवबुद्धिशालिनामध्यापकः । **आशिष्ठः** - आशुतरक्रियाकारी अशनक्षमो वा । *सर्वान् देवान् नमस्यन्ति* इतिवत् सर्वजनमङ्गलाशासनार्हः इति वा, **द्रढिष्ठः** - दृढतरशरीरः, **बलिष्ठः** शरीरमानसबलवान् इत्यर्थः । **तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्** इति । एतादृशसर्वविधबलिष्ठस्य मनुष्यस्य **इयं सर्वा** - परिदृश्यमाना भूमिः **वित्तेन** - धनेन परिपूर्णा सती दृश्यते यदि सः **एको मानुष आनन्दः** इति । तथा च पूर्वोक्तयुवत्वसर्वबलैश्वर्यादिकं यत्र सङ्घीभूय वर्तते **सः एको मानुष आनन्दः** इत्युक्तं भवति । *श्रोत्रियस्य चाकामहतस्य* इति । **अकामहतस्य** सर्वविधसांसारिकदुःखानभिहितस्य, **श्रोत्रियस्य श्रोत्रियं ब्रह्मनिष्ठम्** (मुं.उ.१-२-१२) इत्युक्त ब्रह्मनिष्ठस्यापि पूर्वोक्तः मानुषानन्दः अस्तीति शेषः । अयं मानुष आनन्दः मुक्तस्यापि अस्तीत्यर्थः । मुक्तस्य मनुष्यानन्दप्रभृतिपरब्रह्मानन्देनापि युक्तत्वात् । मनुष्यानन्दस्यापि मुक्तानन्दान्तर्गतत्वेन मुक्तस्यापि मनुष्यानन्दोऽस्तीत्युक्तं । **ते ये शतम्** इति । **ये मानुषाः** मनुष्यसम्बन्धिनः शतम् शतसंख्याकाः पूर्वोक्ताः **आनन्दाः** वर्तन्ते **ते मनुष्यगन्धर्वाणाम्** - ये मनुष्याः कर्मविशेषलब्धादर्शनादिविद्यया गन्धर्वत्वं प्राप्ताः ते मनुष्यगन्धर्वाः इत्युच्यन्ते । तेषाम् **एकः** - एकसंख्याकः यः **आनन्दो** वर्तते सः आनन्दः **अकामहतस्य** - सांसारिकदुःखानपहतस्य **श्रोत्रियस्य** चशब्दस्तु अपिशब्दार्थकः ब्रह्मविदोऽपि अस्ति इत्यर्थः । **ते ये शतम्** इति । **मनुष्यगन्धर्वाणां**- ये शतसंख्याकाः आनन्दाः वर्तन्ते, ते **देवगन्धर्वाणाम्** - देवलोके विद्यमानगन्धर्वाणाम् **एक आनन्दः** इत्युच्यते । **सः** पूर्वोक्त देवगन्धर्वानन्दः, **अकामहतस्य श्रोत्रियस्य** च ब्रह्मनिष्ठस्यापि अस्तीत्यर्थः । **ते ये शतम्** इति । **देवगन्धर्वाणाम्** देवलोकविद्यमानदेवगन्धर्वाणाम् शतसंख्याकाः ये आनन्दाः वर्तन्ते ते आनन्दाः चिरलोकलोकानां पितृणाम् एकः आनन्द इत्युक्तं भवति । **चिरलोकस्थायिलोकः** - चिरलोकः[१] लोकनिवासस्थानं येषां ते चिरलोकः लोकाः तेषां पितृणां एकः आनन्दः एक संख्याक आनन्द इत्युच्यते।

---

१. *चिरकालं लोक्यते भोगाय तिष्ठति यो लोकः स चिरलोकः । लोक्यत इति लोकः* इति भट्टभास्करभाष्ये ।

संख्याकः आनन्दः इत्युच्यते । सः चिरलोकलोकपित्रानन्दः **अकामहतस्य श्रोत्रियस्य** ब्रह्मविदोऽपि अस्ति । **ते ये शतम्** इति चिरलोकनिवासिपितॄणां ये शतसंख्याकाः आनन्दाः वर्तन्ते ते आनन्दाः **आजानजानां देवानामेकः आनन्दो** भवति । आजाननामक लोके जाताः ये देवाः वर्तन्ते तेषां एकसंख्याकः आनन्दो भवति । स आजानजलोकस्थ देवानन्दः, अकामहतस्य श्रोत्रियस्यापि अस्तीत्यर्थः । पूर्ववदर्थः । **ते ये शतम् इति** - ये शतसंख्याकाः आजानजलोकदेवानन्दाः वर्तन्ते ते आनन्दाः **स एकः कर्मदेवानां देवानामानन्दः** इत्यादि । **ये** अग्निष्टोमादि **कर्मणा देवानपियन्ति** - अग्नीन्द्रादिसायुज्यं प्राप्नुवन्ति तेषां कर्मदेवानाम् एकसंख्याकः आनन्दः इत्युक्तं भवति । सः कर्मदेवानन्दः । **अकामहतस्य श्रोत्रियस्यापि** अस्तीत्यर्थः । **ते ये शतम् इति । कर्मदेवानाम् ये** शतसंख्याकाः आनन्दा वर्तन्ते **ते देवानां** त्रयस्त्रिंशद्धविर्भुजां वसुरुद्रादिदेवानां एक संख्याकः आनन्दः इत्युक्तं भवति । **सः आनन्दः अकामहतस्य** ब्रह्मविदोऽपि अस्तीत्यर्थः । **ते ये शतम्** इति । ये शतसंख्याकाः आनन्दाः **देवानामानन्दाः** वर्तन्ते । **ते इन्द्रस्य** देवाधिपस्य एकसंख्याकः आनन्दः इत्युच्यते । सः इन्द्रानन्दः अकामहतस्य ब्रह्मविदोऽपि अस्तीत्यर्थः । **ते ये शतम्** इति । **इन्द्रस्य** शतसंख्याकाः ये **आनन्दाः** वर्तन्ते **ते बृहस्पतेः** - इन्द्राचार्यस्य एकसंख्याकः आनन्दः इत्युक्तं भवति । सः बृहस्पत्यानन्दः **अकामहतस्य श्रोत्रियस्यापि** अस्तीत्यर्थः । **ते ये शतम्** इति । ये - शतसंख्याका बृहस्पत्यानन्दाः वर्तन्ते ते आनन्दाः **प्रजापतेः** चतुर्मुखब्रह्मणः एकसंख्याकः आनन्दः इत्युक्तं भवति । सः चतुर्मुखब्रह्मानन्दः, **अकामहतस्य** ब्रह्मज्ञानिनोऽपि अस्तीत्यर्थः । **ते ये शतम्** इति । चतुर्मुखब्रह्मणः ये शतसंख्याकाः आनन्दाः वर्तन्ते; ते परब्रह्मणः श्रियःपतेः एकसंख्याकः आनन्दः इत्युक्तं भवति । सः आनन्दमयपरब्रह्मवाच्यश्रियः पत्यानन्दश्च **अकामहतस्य** सर्वविधसांसारिकदुःखरहितस्य ब्रह्मविदः अस्तीत्यर्थः । सः परमात्मा कुत्र वर्तते इत्याकाङ्क्षायाम् आह **स यश्चायं पुरुषः** इति । यः चतुर्मुखानन्दात् अपरिमितानन्दविशिष्टपरब्रह्मवाच्यः श्रियःपतिः, **सः पुरुषे** जीवे *यो वेद निहितं गुहायां परमे व्योमन्* इत्युक्तसर्वजीवहृदयपुण्डरीकपरमाकाशे विद्यमानः **यः** - परमात्मा **सः** आदित्ये च विद्यते । स एकः आश्रितोपासनार्थं जीवे आदित्ये च अन्तर्यामितया विद्यमानः परमात्मा एकः एवेति **यः** उपासकः **एवं** जानाति । **स वित्** - ब्रह्मज्ञानी इत्यर्थः। तथा च *कप्यासं पुण्डरीकमिवाक्षिणी तस्योदिति नाम* (छां.उ.१-६-७) इति । आदित्यमण्डलान्तवर्तिविज्ञानमयात् अन्तरः आनन्दमयपरब्रह्मशब्दवाच्य-पुण्डरीकाक्षत्वादिविशिष्ट

श्रीमन्नारायणोपासकस्य अर्चिरादिगत्या आनन्दमयपरब्रह्मप्राप्तिमाह **अस्माल्लोकात् प्रेत्य** इति । अस्मात् लोकात् - परिदृश्यमानमनुष्यलोकात् परिदृश्यमानप्रारब्धदेहात् वा - **प्रेत्य** प्रारब्धदेहत्यागानन्तरं वा देहाभिमानत्यागानन्तरं वा, **एतमन्नमयमात्मानमुपसङ्क्रामति** इत्यादि । अन्नमयकोशशरीरकपरमात्मानं एषः उपासकः उपसङ्गतवान् भवति । अनन्तरं प्राणमय-मनोमय-विज्ञानमय शरीरकपरमात्मोपसङ्क्रमणानन्तरं एतम् आनन्दमयम् आत्मानम् **उपसङ्क्रामति** इति । एवं पूर्वोक्तजगत्कारणत्वादिविशिष्टानन्दमय - परब्रह्मशब्दवाच्यश्रियःपत्युपसङ्क्रमणं करोति । *क्रम आक्रमणे* (धा.पा.) इति धातोः । *तं यथा यथोपासते* (मुद्र.उ.३) इति श्रुत्या परमात्मानम् उपसङ्गम्य तेन सङ्गतो भवतीत्यर्थः । तेन संगतः **स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य** इति । *आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन* इति वक्ष्यमाणकुतश्चिद्भयरहित-ब्रह्मानन्दवान् भवतीत्यर्थः । **आनन्दमयमात्मानमुपसंक्रामति** इति कर्तृकर्मनिर्देशेन ब्रह्मणोप्यन्यजीवस्य सत्त्वात् जीवब्रह्मणोः ऐक्यमिति वदतां पक्षो निरस्त इति वेदितव्यः । **तदप्येष श्लोको भवति । तत्** अभयं प्रतिष्ठाम् विन्दते । अथ सोभयं गतो भवति इति पूर्वोक्तमन्त्रार्थविषये साक्षित्वेन उक्तोऽयं श्लोकः इत्यर्थः । यद्वा - **तत्** परब्रह्मशब्दवाच्य- श्रियःपत्युपासकस्य परब्रह्मोपसंक्रमणविषयः **एषः** पूर्वोक्तः **श्लोको भवति** ।।

**तै.भा.** - तत्र किञ्चिद्गुणप्रतिपादको भवति इत्यर्थः । **अस्मात्** - ब्रह्मणः सकाशात्, **भीषा** - भीषया, अत्र वातः वायुः इति स्यात् **पवते** - सदा सञ्चरति । नियमेन तिर्यक् गच्छतीत्यर्थः । **अस्मात् भीषा सूर्यः उदेति** अस्तम् एति च इति द्रष्टव्यम् । **अस्माद्भीषा अग्निश्च** ऊर्ध्वं ज्वलति इति शेषः । अस्मात् भीषा इन्द्रश्च जगत् पालयतीत्यर्थः । अस्मात् भीषा **मृत्युः** - यमः **धावति** - नित्यसंहाराय अश्रान्तं भ्रमति । **पञ्चमः** इत्यनेन मृत्योः गणना पूरणात्मकत्वमेव न तु वातादिवत् जगद्रक्षाधिकारत्वम् इत्युच्यते । वातादयः सर्वे व्यतिरेके दण्डभयात् सर्वदा भगवदाज्ञाभङ्गं न कुर्वन्तीत्यर्थः ।

एवं ब्रह्मणः सृष्टि-स्थिति-संहारकर्तृत्वमुक्तम् । अथ सृष्ट्यादीनां भगवतः लीलात्वसिद्धये पूर्वम् आनन्दमय इति सङ्ग्रहेणोक्तम् अपरिच्छिन्नानन्दत्वं विवरितुम् अपक्रमते - **सैषाऽऽनन्दस्य** इत्यादिना । **सैषा** - वक्ष्यमाणा ब्रह्मानन्दस्य **मीमांसा** - विचारणा भवतीति प्रतिज्ञातमेवाह **युवा** इत्यादिना । **स्यादिति** सम्भावनायां लिङ् । युवत्वादिगुणको यदि कश्चित् ब्राह्मणः स्यात् तस्य आनन्द एव इत्यन्वयः । **युवा** - तरुण इत्यानन्दहेतुः वयः

दर्शितम् । **साधु** - सम्यक् शुद्धसम्प्रदायता यूनाम् अध्यापकः चतुर्दशविद्यास्थानानां प्रतिपादयिता युवैव सन् यूनाम् अध्यापको महानन्दी इत्युक्तम् । यद्वा साधूनां ग्रहणधारणपटूनां यूनाम् अध्यापकः इत्यर्थः । असमर्थस्य अध्यापनम् अतीव दुःखाय, विद्यानन्दोऽयम् । **आशिष्ठः** - अशितृतमः, अशितृशब्दादि*ष्ठनि तुरिष्ठेमेयःसु* (पा.सू.६-४-१५४) इति टिलोपः शरीरानन्दोऽयम्, **द्रढिष्ठः** - दृढतमः, आरोग्यानन्दोऽयम् । रत्वाभावश्छान्दसः । **बलिष्ठः** - बलवत्तमः, बलानन्दोऽयम् । **तस्य** - तादृशस्य यथोक्तवयः प्रभृतिहेतुकानन्दशालिनः पुंसः **इयं पृथिवी सर्वा** अपि स्वभूता यदि स्यात् कीदृशी **वित्तस्य पूर्णा** स्वर्णधान्यगवाश्वादिधनैः सर्वतः समृद्धा स्यात् । पूरणगुणसमासप्रतिषेधेन षष्ठी ज्ञापिता । अत्र **युवा तस्येयं पृथिवी** इति विशेषणाभ्यां गुणविभूतिसंयोगजानन्दः फलितः एवमुत्तरत्रापि क्रमेण ब्रह्मणोऽपि अपरिच्छिन्नगुणविभूतिजानन्दः अपरिच्छिन्नो बोध्यः ।

**स मानुषानन्दः एकः** - अद्वितीयः । ततोऽधिको मनुष्याधिकारिणाम् आनन्दो नास्ति । मनुष्यप्रत्यायनार्थत्वात् शास्त्रस्य प्रथमं मनुष्यानन्दः एव दर्शितः । मानुषानन्दात् शतगुणातिशयो मनुष्यगन्धर्वानन्दः इत्याह **ते ये शतम्** इत्यादि । पूर्वोक्ताः **ये मनुष्यानन्दाः ते शतम् मनुष्यगन्धर्वाणामेक आनन्दः** । मनुष्याः सन्तः कर्मविद्याविशेषात् गन्धर्वत्वं प्राप्ताः ते मनुष्यगन्धर्वाः सिद्धादयः । ते ह्यन्तर्धानशक्तिसम्पन्नाः सूक्ष्मकार्यकारिणः अप्रतिहतक्रमाः, अतः तदानन्दस्य मनुष्यानन्दात् उत्कर्षः । एवम् उत्तरत्रापि ऊह्यम् ।

उक्तमर्थमन्यत्रापि अतिदिशति **श्रोत्रियस्य** इति । **अकामहतस्य** भगवद्व्यतिरिक्तसमस्त-पुरुषार्थनिस्पृहस्य विरक्तस्य **श्रोत्रियस्य** - श्रुतवेदान्तस्य ये मानुषा आनन्दाः ते शतं मनुष्येषु अकामहतस्य - श्रोत्रियस्य एकः आनन्दः; यथा मानुषानन्दात् । मनुष्यगन्धर्वानन्दशतगुणितोत्कर्षः तथा अकामहतस्य श्रोत्रियस्य मनुष्यस्यपि आनन्दोऽपि इति भावः । मनुष्यस्य इति प्रक्रमात् लभ्यते । एवमुत्तरत्रापि योजना । देवगन्धर्वहाहाद्याः, चिरलोकाख्यो लोको येषां ते **चिरलोकलोकाः** तेषां **पितृणां** - यमाग्निकव्यवाहनादीनाम् । आजानाख्ये लोके स्वस्मात् कर्मविशेषात् जाताः **आजानजाः** कर्मदेवशब्दं श्रुतिः स्वयमेव व्याचष्टे **ये** इत्यादि । **ये कर्मणा** अग्निहोत्राद्यश्वमेधान्तेन देवानपि देवान् प्रति **यन्ति** - गच्छन्ति । देवाः त्रयस्त्रिंशत् हविर्भुजः इन्द्रः स्तेषां स्वामी तस्य आचार्यो बृहस्पतिः । श्रोत्रियस्य कुत्रचित् कल्पे श्रोत्रियस्य इन्द्रस्य । प्रजापतिः चतुर्मुखः एकवचनस्वारस्यात् श्रोत्रियस्य कुत्रचित् कल्पे **श्रोत्रियस्य** - बृहस्पतेः **ब्रह्मणः** - ब्रह्मवित् इति उपक्रान्तस्य श्रोत्रिस्य क्वचित् कल्पे **श्रोत्रियस्य** - प्रजापतेः । यथा मनुष्यगन्धर्वादीनां गुणविभूतिकृतउत्कर्षः तथा

श्रोत्रियस्याकामहतत्वकृतः एव आनन्दोत्कर्षः इति ज्ञेयम् । सर्वत्रोदाहरणद्वयं बुद्धिवैशद्यं संदृश्यत इति श्रुतिशैली । एवं व्याख्याने स एको मानुष आनन्दः इत्यत्र प्रथमपर्वणि श्रोत्रियस्याकामहतस्य इत्यनुक्तिः उपपन्ना । न तु व्याख्यानान्तरे ।

यत्तु व्याख्यानान्तरम् - *श्रोत्रियस्य चाकामहतस्य* मुक्तस्येत्यर्थः । प्रत्यानन्दभेदं श्रोत्रियस्य इत्युक्त्या मुक्तानाम् आनन्दतारतम्यम् उच्यते इति तत्परास्तम् । मुक्तानन्दकल्पनस्य अप्रकृतत्वात् । कथञ्चित्प्रकृतत्वेऽपि तारतम्यवाचकम् अत्रकिमपि न पश्यामः । मनुष्यगन्धर्वाद्यानन्दकथनानन्तरं ते ये शतं मनुष्यगन्धर्वाणाम् इत्यादिवत् ते ये शतं श्रोत्रियस्यानन्दाः इत्येवं निष्कर्षाकथनात् । यथा श्रेष्ठिनो ग्रामीणधनं, नृपतिधनं, सार्वभौमधनं च अस्तीत्युक्ते अपरिमितधनत्वेनावगतस्य श्रेष्ठिनो धनतारतम्यप्रतीतिः, तथा *सोऽश्नुते सर्वान् कामान्* इत्युपक्रमावगतापरिच्छिन्नानन्दस्य मुक्तस्य न तारतम्यावगतिगन्धोऽपि । उपसंहारेऽपि *एतं ह वाव न तपति किमहं साधु नाकरवम्* इति सुकृतनिमित्ततापाभावः श्रूयते । तन्मुक्तानन्दतारतम्ये विरुद्धम् । आनन्दतारतम्यं हि सुकृततारतम्यनिबन्धनम् । तत्र च सुकृतातिशयकृतानन्दभूयस्त्वदर्शनेन निकृष्टानन्दस्य भवत्येव सन्तापः । किञ्च मुक्तस्य आनन्दो न जन्यते किन्तु आविर्भवति, स्वाभाविकः *सम्पद्याविर्भावः स्वेन शब्दादिति* (ब्र.सू.४-४-१) बादरायणोक्तिः । तथा च मुक्तिदशायां सकलप्रतिबन्धकनिवृत्तेः न तारतम्यावकाशः ।

ननु तथापि अस्य आनन्दतारतम्यं क्वचित् स्वातन्त्र्यपारतन्त्र्यरूपस्वरूपतारतम्यात् । यथा राजभृत्ययोः क्वचित् प्रणयतारतम्यात् । यथा पत्नीपरिजनयोः क्वचित् व्यापारतारतम्यात् । यथा अधिकृदनधिकृतोः क्वचित् साधनतारतम्यात् । यथा बह्वल्पकुक्षिमतोः यथा दर्शपूर्णमासज्योतिष्टोमयोः । मैवम्; स्वातन्त्र्यपारतन्त्र्याभ्यां हि भोगोपकरणसाकल्यवैकल्ये स्तः तेन आनन्दतारतम्यम् । एवमुदाहरणान्तरेष्वपि द्रष्टव्यम् ।

मुक्तौ तु नोपकरणसंनिधानाधीनः आनन्दः । आविर्भावमात्रस्य उक्तत्वात् न हि जीवानां स्वतः एव आनन्दतारतम्यमस्तीति शक्यं कल्पयितुम् । ननु गुरुलघुभूतविद्यातारतम्यात् फलतारतम्यं वक्तव्यम् । अन्यथा गुरुषु कस्यापि प्रवृत्तिः न स्यात् इति चेन्न । शक्तितारतम्यात् तदुपपत्तेः । अत एव सूत्रयतिस्म - *विकल्पोऽविशिष्टफलत्वात्* (ब्र.सू.३-३-५७) इति ।

ननु निष्पन्नेऽपि उपासने पुनः तदनुवर्तनं कर्मानुष्ठानं च फलाधिक्याय इति चेन्न । आदिमप्रत्यये तदनिष्पत्तेः । अत एव सूत्रितम् *आप्रयाणात् तत्रापि हि दृष्टम्* (ब्र.सू.४-१-१२), *सहकारित्वेन च,* (ब्र.सू.३-४-३३) *अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्* (ब्र.सू.४-१-१६) इत्यादिना ।

ननु *यो वेद निहितं गुहायाम्* इति हृदयगुहान्तर्वर्तिनो वेदनेन आनन्दावाप्तिः उक्ता । तत्कथं सङ्गच्छते । अन्यत्र अन्तरादित्यविद्यादौ आदित्यान्तर्वर्तिनः एव वेदनेन तत्प्राप्तिश्रवणात् इत्याशङ्क्य आह - **स यश्चायम्** इति । यः इति स्थाने सः यः इत्यपि निर्देशः । योऽयं पुरुषे उपास्यतयोक्तः स एकः नान्यः । स्थानभेदमात्रं न स्थानिभेदः इत्यर्थः ।

तथा च हृदयकमले वा आदित्यान्तः वा ब्रह्म उपासितव्यम् इति उपास्यस्थाने विकल्पोऽपि उक्तः । अथ प्रारब्धशरीरावसाने एव परप्राप्तिः इत्याह **स य** इति । **य एवम्** - उक्तरीत्या हृदयकमले आदित्यमण्डले वा ब्रह्मोपासकः **अस्मात् लोकात्** - संसारमण्डलात् **प्रेत्य** - *परमे व्योमन्* इत्युक्तपरमपदं प्राप्य **एतम्** - पूर्वोक्तम्, **अन्नमयम् आत्मानम्** - अन्नमयात्मकशरीरं ब्रह्म **उपसङ्क्रामति** - प्राप्नोति । अन्यत्र अनिष्ठस्य अन्यप्राप्तिः सङ्क्रान्तिः । अत्र संसारमण्डलनिष्ठस्य परमपदवर्तिब्रह्मप्राप्तिः । एवमुत्तरत्रापि योज्यम् ।

प्रेत्य इत्युक्तिः पूर्वं *तस्यैष एव शारीर आत्मा* इति पृथगुक्तत्वात् पक्षान्तरेऽपि तुल्यत्वात् अन्नमय-प्राणमय-मनोमय-विज्ञानमयशरीरकम् आनन्दमयम् आत्मानं प्राप्नोति इत्यर्थः ।

यत्तु शाङ्करैः व्याख्यातम् अन्नमयादिपञ्चकोशान् त्यजति इत्यर्थ इति तन्न । उपसङ्क्रामतेः त्यागार्थत्वे नियामकाभावात् । अथ **स एको ब्रह्मण आनन्दः** इत्यनेन प्राप्तात् परिच्छिन्नत्वाशङ्कां व्युदस्यन् ब्रह्म प्राप्तवतो न पुनरावृत्तिशङ्का इत्याह **तदप्येष** इति । **तत्** - तस्मिन् ब्रह्मप्राप्तिविषये **एषः श्लोकोऽपि भवति ।।**

**प्र.** - भीषाऽस्मात् इति । अग्नीन्द्रसूर्यप्रमुखाः सर्वेऽपि देवप्रवराः परमात्मशासनातिवृत्तौ किं भविष्यतीति भीत्या स्वस्वकर्मसु जागरूका भवन्ति । अतश्च ब्रह्मव्यतिरिक्तं कृत्स्नमपि पदं दुःखोदर्कत्वात् अनर्थरूपमेव । अतश्च तादृशपदकामनया मननविच्छेदस्य अत्यन्तभयावहत्वात् [1]ततोपि[1] न भयं किञ्चिदस्ति इत्यर्थः ।

एवं ब्रह्मवेदनस्य जगत्कारणत्वतदौपयिकसार्वज्ञ्यादिगुणविशिष्टविषयकत्वम् अविच्छिन्नत्वं च विधाय प्राप्यस्याऽऽनन्दमयस्य ब्रह्मणः आनन्दमयशब्दप्रवृत्तिनिमित्तम् आनन्दप्राचुर्यं दर्शयति - **सैषा** इति । वक्ष्यमाणानन्दविषयकविचारो भवतीत्यर्थः । **युवा** इत्यादि । अत्र व्यासार्यैः, साधु युवाध्यायकः साधु यथाविधि, सम्यक् संप्रदायसिद्धतया, स्वरवर्णादिभ्रंशरहितं वा । युवशब्देन प्रत्यग्रत्वं विवक्षितम् । अविस्मरणात् नित्यं नवं यथा भवति, तथाऽध्ययनवान् इत्यर्थः । यद्वा - **स्वसमयवस्कानां** सर्वेषामध्यायिकः अध्यापकः ।

---

१. ततो - अ,क,ख ।

तदधिकज्ञानः[१] इत्यर्थः । **आशिष्ठः** - आशुतरक्रियः । यद्वा अशनक्षमः, अरोगः इत्यर्थः । यद्वा - आशीर्वादविषयभूतः । सर्वानुरञ्जकः इत्यर्थः । सर्वान् देवान् नमस्यन्ति इतिवत् । **बलिष्ठः** - मनोबलवान् । **द्रढिष्ठः** इति शारीरबलस्य उक्तत्वात् । यद्वा - **द्रढिष्ठः** - दृढतरः । न तु अव्यवस्थितस्वभावः इत्यर्थः । **बलिष्ठः** [1]शारीरमानस[1] सर्वविधबलवान् । **वित्तस्य पूर्णा** वित्तेन पूर्णा । [२]*पूरणगुणसुहितार्थ......* (पा.सू.२-२-११) इति षष्ठ्या अनुज्ञानात् । एवं गुणसमुदायं [2]विभूति[2]पौष्कल्यं च उक्त्वा, *स एको मानुष आनन्दः* इति [3]श्रुत्या स्वरसतः[3] तस्यैव आनन्दत्वम् उक्तम् । न च ज्ञानभिन्नस्य गुणविभूत्यादेः कथम् आनन्दत्वम् इति शंक्यम् । अनुकूलत्वं हि आनन्दत्वम् । तच्च स्वतः एव इष्टत्वम् । तच्च गुणविभूत्योः अपि सम्भवति । तद्विषयज्ञानस्यापि अनुकूलत्वं विषयानुकूलत्वप्रयुक्तमेव इति अन्वयव्यतिरेकसिद्धम् । [4]अतः[4] श्रुतिस्वारस्यात् गुणविभूत्यादेः आनन्दत्वम् । **श्रोत्रियः** - ब्रह्मनिष्ठः । **अकामहतः** - समस्तसांसारिकभोगानुपहतः । अतः मुक्तः उच्यते इत्युक्तम् । एवञ्च युवत्व-दृढगात्रत्व-सौन्दर्य-ज्ञानबलैश्वर्यादयः सम्भूय यत्र भवन्ति स एको मानुष आनन्दः । अकामहतश्रोत्रियस्य मुक्तस्यापि सः आनन्दोऽस्ति । मुक्तस्य सर्वानन्दानुभव[5]शलित्वात् तत्र[5] मानुषांनन्दस्य अन्तर्गतत्वात् इति भावः । **ते ये शतम्** इति । ये मनुष्या एव सन्तः कर्मविशेषेण विद्याविशेषेण वा अन्तर्धानादिशक्त्युपेततया गन्धर्वत्वं प्राप्ताः, ते **मनुष्यगन्धर्वाः** । अन्तरिक्षलोकवासिनः **देवगन्धर्वाः** । चिरकालस्थायी लोकः चिरलोकः । चिरलोको लोको येषांते **चिरलोकलोकाः पितरः । आजानः** देवलोकः तत्र जाताः **आजानजाः** । स्मार्तकर्मविशेषतो देवस्थानेषु जाता इत्यर्थः । अग्निहोत्रादिकर्मणा अग्नीन्द्रादिसायुज्यं प्राप्ताः **कर्मदेवाः । देवास्तु** वसुरुद्रादयः त्रयस्त्रिंशत् हविर्भुजः । इन्द्रबृहस्पती प्रसिद्धौ । **प्रजापतिः** चतुर्मुखः; न तु दक्षादयः, एकवचनश्रवणात् । **ते ये शतं प्रजापतेः** इति । अत्र ब्रह्मशब्दः, ब्रह्मविदाप्नोति परम् इति प्रकृतब्रह्मपरः । न च ब्रह्मानन्दस्य ते ये शतम् इति परिच्छिन्नत्वं कथम्? इति शंक्यम् - क्षणार्धेन बहूनि योजनानि गच्छति रवौ, इषुवद्गच्छति सविता इति इषुसाम्यप्रतिपादकवचनस्य गतिमान्द्यनिवृत्तिपरत्ववत् ते ये शतम् इति वाक्यस्यापि [6]चतुर्मुखानन्दान्यूनानधिकत्व[6]परत्वाभावात् ।

एवंभूत-आनन्दमयः *यो वेद निहितं गुहायाम्* इति हृदयगुहानिहितत्वेन उपास्यमानः [7]कीदृशविग्रहविशेष[7]विशिष्टः को वा देवताविशेषः? इत्याकाङ्क्षायाम् आह **स यश्चायम्**

---

१. इयमेव व्याख्या युक्ता । *समानानामुत्तमश्लोको अस्तु* इति वैदिकी आशंसा ।

२. *पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन* इति पूर्णसूत्रपाठः ।

1. शरीरमानस - अ,क,ख । 2. वित्तेऽति - ग । 3. श्रुत्याः - अ,क,ख,च । 4. अत्र - क,ख,च ।

5. शालितया तत्र - अ,ग,घ । 6. चतुर्मुखानन्दानधिकत्व - ग,घ । 7. कीदृशविग्रहविशेषण - अ ।

इति । *य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम* (छां.उ.१-६-६) इति आदित्य[1]मण्डलान्तर्वर्ती[1]कमनीयविग्रहयुक्तो यः पुण्डरीकाक्षः, स एव हृदयगुहावर्ती विज्ञानमयादन्तरः । ततश्च पुण्डरीकाक्षत्वादिविग्रहोपेतो नारायण एव इत्यर्थः । ततश्च तादृशविग्रहविशिष्टत्वेन हृदयगुहावर्तिनो [2]भगवतो ध्यानं[2] कर्तव्यमिति फलितार्थः ।

अत्र सच्च त्यच्चाभवत् इति चिदचिच्छरीरकत्वेन अनुसन्धानम् उक्तम् । सत्यं ज्ञानम् इति स्वरूपेण अनुसन्धानम् उक्तम् । तच्च स्वरूपेण अनुसन्धानम् आदित्यमण्डलान्तर्वर्ति[3]पुण्डरीकाक्षत्व[3]विशिष्टतया च उक्तं भवति । *जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यात्* (ब्र.सू.१-१-३२) इति सूत्रे भगवता भाष्यकृता तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेषु अपि आश्रितम् । *सत्यं ज्ञानमनन्तं ब्रह्म* इत्यादिषु स्वरूपेण अनुसन्धानम् । *तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्* इति भोक्तृशरीरकतया भोग्यभोगोपकरणशरीरकतया च अनुसन्धानम् इत्युक्तम् ।

एवमस्य प्राप्यत्वोपयुक्तम् उक्त्वा, उताहो विद्वानमुं लोकम् इत्यादिना उपक्षिप्तानां प्रश्नानामुत्तरमाह **स य एवम्** इति । अत्र स य एवंवित् अस्मात् लोकात् प्रेत्य इत्यनेन सर्वेषां ब्रह्मविदामर्चिरादिमार्गः उक्तो भवति । **आनन्दमयमात्मानमुपसङ्क्रामति** इति मुक्तिदशायां जीवब्रह्मणोः उपास्योपासकयोः भोग्यभोक्तृभावप्रतिपादनात् मुक्तौ ब्रह्मणा ऐक्यपक्षो निरस्तो भवति । एतमन्नमयं [4]इत्यादिषु[4] पञ्चस्वपि पर्यायेषु एतच्छब्दः परमात्मपरः । अन्नमय-प्राणमय-मनोमय विज्ञानमयशब्दाः तच्छरीरकपरमात्मपराः । अत्र व्यासार्यैः, सर्वोऽपि विद्वान् अस्माल्लोकात् प्रेत्य अन्नमयादिसमष्टिव्यष्टिभूतिकं निरतिशयानन्दं परमात्मानं भोग्यभूतं भोक्ता सन् अनुभवति इति प्रश्नोत्तरम् उक्तं भवति इत्युक्तम् ।

*अभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति* इत्युक्तार्थे साक्षित्वेन श्लोकं पठति **तदपि** इति ।।

**कू.भा. - भीषास्माद्वातः पवते** वासुदेवं परित्यज्य ये अन्यं देवम् उपासते, तैषां भयं भवतीति किमाश्चर्यम् ? उपास्यदेवतानां एव महद्भयम् । *कम्पनात्* (ब्र.सू.१-३-४०) इति सूत्रम् । सर्वेषां ततो निस्सृतानां तस्मात् संजातं महाभयनिमित्तं यजनं श्रूयते ।

---

1. मण्डलान्तर्वर्ति - अ,क,ख,च । 2. ध्यानं - क,ख,च । 3. पुण्डरीकाक्षविग्रह - अ,ग,च ।
4. इत्यादि - अ,क,ख ।

यच्छासनातिवृत्तौ किं भविष्यतीति महतो भयात् आज्ञातिवर्तनात् कृत्स्नं जगत् कम्पत इत्यर्थः । *भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पंचमः* (क.उ.६-३) इति कृत्स्नस्य जगतः अस्माद्भयं निस्सृतमिति । अस्मात् आनन्दमयात् निमित्तात् । **भीषा** - भयेन, तदाज्ञाभंगभयेन । देहादिषु सततगतिः । **वातः** - वायुः । तथा पर्वत प्रभञ्जनसमर्थोऽपि स्वेदापनयमात्रं कुर्वन् सर्वसाधुः एव वर्तते, न तु स्वगुणेन इत्यर्थः । एवं **भीषोदेति** सूर्यः क्षणाणुकालानतिलंघनेन सदा पथि एव उदेति। वृष्ट्यादिकार्यान्तराणि तत्समयानतिलंघनेन सदा करोति भयेन, न तु स्वस्वभावगुणाभ्याम् । एवं **भीषास्मादग्निश्चेन्द्रश्च** - अग्निः यथापाकादिकं मृदु सर्वदा कुर्वन् तदाज्ञाभंगभयेनैव वर्त्मनि धावति, उदरगतश्च गर्भं न दहति । किं बहुना, सर्वदेवानाम् ईश्वर इन्द्रः तद्भयादेव मर्यादाम् अनुवर्तते, नतु अन्यशासनभंगभयात् इत्यर्थः । **मृत्युर्धावति पंचम इति** सकलप्रजासंहरणाद्यधिकृतोऽपि कालो जीवन् धावति । इतरधा तेषामपि ब्रह्महत्याद्यभिभवश्च श्रूयते । सर्वसंहाराधिकृतयमचतुर्मुखपर्यन्तानां सर्वेश्वरादेव भयमुक्तम् । **इति** समाप्तिद्योतनाय । **पंचम** इति निर्देशः प्राधान्यात् । *कम्पनात्* (ब्र.सू.१-३-४०) *सा च प्रशासनात्* (ब्र.सू.१-३-१०) इति ब्रह्मसूत्रम् । *प्रशासितारं विद्यात्* (म.स्मृ.१२-१२२) इति मनुः । एवं सर्व लोकपालाः कालः निर्वाहकाश्च सूर्यादयः एतेषां संहाराधिकृतः श्च सर्वे पुण्डरीकाक्षस्य भ्रुकुटिभंगात् सर्वलोकरक्षणादिषु सदा उद्युञ्जानाः भीतभीता एव वर्तन्ते इति निखिलजगदेककारणस्य निखिलजगदन्तरात्मभूतस्य निखिलजन्तुवात्सल्यस्यापि सर्वातिशायिप्रशासनम् उक्तम् । यद्यपि निरतिशयानन्दमये भगवति भावगर्भं मनः परित्यज्य अधिकारचिन्तकानाम् अग्नीन्द्रसूर्यादीनां किंचित् सुखलवः अस्त्येव । तथापि तत्सर्वं भयप्राचुर्यकलुषतया दुःखपक्षनिक्षिप्तमिति अनाविलसुखलेशोऽपि नास्तीत्यर्थः । *दृष्ट्वा दीप्तां परां श्रियम्* इति । स्वर्गेऽपि सुखपातभीतस्य अनेकमदमानमत्सरादिदुःखसहस्रकलितदैत्यदानवराक्षसादिभयातुरमिति सर्वलोकसिद्धम् । सततहृच्छल्याज्ञाभंगभयोपेक्षाया न स्वल्पमपि सुखम् इत्यत्रोक्तम् ।

ननु आसां देवतानां सायुज्यप्राप्तिकामैः समाश्रयणीयतया शतशः प्रभावः कर्मकाण्डे श्रूयते । तत्र तु दिनकरप्रभासमीपे खद्योतद्युतिवत् देवादिसुखं महापुरुषसन्निधाने न विभाति इत्याह **सैषानन्दस्य मीमांसा भवतीति** कस्य गुणाधिक्यं? आनन्दाधिक्यं च कस्य? कस्यानन्दो निरवधिकः? अत एव का देवता त्याज्या? उपादेया च का? इति विषसंसृष्टान्नवत् कलुषपानीयवत् (हालाहलमिश्रनासिकामलवत्) च आध्यात्मिकादि भयभरगर्भाणामपि देवतिर्यक् मनुष्यादीनां सुखलवपरिच्छेदनिर्णयार्था निरूपणा क्रियते,

ब्रह्मस्वरूप-रूप-गुणाविभव-लीलानन्द-तदुपासकानन्दाश्चर्यानन्दमीमांसा इत्यन्ततो वक्तुम् । तत्र सार्वभौमस्य सकलपरावरदेवानन्ताज्ञाभंगभीतस्य तत्तदुपासना व्यसनिनः गुर्वीं धर्मधुरां वहतो नितरां खिन्नस्य मनुजपतः एतावानेव आनन्द इत्याह - **युवास्यात्साधु युवाध्यापकः । युवा** पंचविंशतिवर्षावस्थाभेदप्राप्त्या मनुष्याणां यः सुखातिशयः, साधूनां श्रावयितुः च आर्यस्य यः आनन्दः । **साधवः** - क्षीणदोषाः । **युवत्वं** - पटुत्वम् समानवयस्कोऽपि साधुभिः ज्ञानाधिक्यात् अधिगम्य इत्यर्थः *सर्वदाभिगतस्सद्भिः समुद्र इव सिन्धुभिः* (रा.बा.१-१६) *अरोगस्तरूणो वाग्मी वपुष्मान् देशकालवित्* (रा.अयो.१-१८) *उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा* (रा.अ.१-१७) । एषमानन्दप्रथमावधिरपि स्वयमेव साधुरेव सन् सर्वेषामध्यापकः इति च वदन्ति । शोभनप्रत्यग्राध्ययनः इति च **आशिष्ठो द्रढिष्ठो बलिष्ठः । आशिष्ठः** पृथुकीर्तिः । आशितॄणाम् अत्यन्तसमर्थः । यद्वा आशिष्ठः - आशुतमः । द्रढिष्ठः अरोगतया दृढगात्रः दृढचित्तश्च । समेषु बलिष्ठः बलवत्तमः सर्वशत्रुनिबर्हणश्च । एवं उक्तासंख्येयगुणगणानन्दसमुच्चयस्य अनुरंजनादिगुणैः परिपूर्णस्य **तस्य इयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्** - निश्शेषा पृथिवी सप्तद्वीपालंकृता । सा च वित्तस्य वित्तेन पुष्टजनधनधान्यादिना । पूर्णा स्यात्

*यावत्सूर्य उदेत्यस्तं यावच्च प्रतितिष्ठति ।*
*सर्वं तद्यौवनाश्वस्य मांधातुः क्षेत्रमुच्यते ।।* (वि.पु.४-२-६५)

एवं युवत्व-दृढगात्रत्व - सौन्दर्य-सौगन्ध्य-सौकुमार्यादयो रूपगुणज्ञानबलैश्वर्यवीर्यपराक्रमादयः आत्मगुणाः आनन्दाः शतशः सन्ति मनुष्याणाम् । एते आनन्दाः सम्भूय यत्र भवन्ति, **स एको मानुष आनन्दः** - एवं विध गुणा इश्वरेऽ नवधिकातिशया असंख्येयाश्च इति स एव सर्वात्मना स्पृहणीयः । सर्वमन्यत् परित्याज्यम् इति दर्शयितुं उपक्रमः । तथा हि भूपालनमात्रस्य एतावत् गुणजन्म अपेक्षितं भवति । अथ किंपुनः उभयविभूतिनाथस्यः लक्ष्मीराजधानीवक्षसः बद्ध-मुक्त-नित्यकोटिनिर्दिष्टानन्दपर्यन्तस्थानभेदपुरुषप्रशासितृत्वेन उक्तस्य सर्वस्रष्टुः इति वालव्युत्पादनाय इत्थं प्रक्रमः । एवं जातीयाः एव तस्यापि आनन्दमहार्णवाः । तत्र अयं विशेषः तापत्रय-भावनात्रय-जन्मादित्रयनिमित्त भयमात्सर्यादि कर्दमराहित्यम् इति । अत्र श्लोकः *उपर्युपर्यब्जभुवोऽपि पुरुषान्* (स्तो.र.६) इति ।

**ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणां आनन्दः । ते** मनुष्यानन्दा एव । **ये शतं** शतगुणिताः **स मनुष्यगन्धर्वस्य** वेदरहस्यज्ञस्य वा *वीणावादनतत्वज्ञः श्रुतिविद्याविशारदः ताळज्ञश्चाप्रयासेन*[1] (याज्ञ.स्मृ.३-११५) इति

---

१. *मोक्षमार्गं नियच्छति* इति शिष्टः पादः ।

संगीतवाद्यादिरहस्यज्ञस्य वा । यद्वा मनुष्याः सन्तः विद्याकर्मविशेषात् गन्धर्वत्त्वं प्राप्ताः मनुष्यगन्धर्वाः । ते ध्यानादिशक्तिसम्पन्नाः, तेषां मनुष्यगन्धर्वाणाम् आनन्दः ।

**श्रोत्रियस्य चाकामहतस्य । श्रोत्रियस्य** *शास्त्रदृष्ट्या तूपदेश* (ब्र.सू.१-१-३१) इति शास्त्रैकदृष्टेः एतत् एव निरतिशयदशाशिरस्कानन्दमयं सर्वकारणं सर्वात्मभूतं सर्वमयं स्वात्मनोऽपि आत्मतया अनुभवतः, तत् एव अतिक्षुद्रं देवेन्द्रत्वादिकं पदम् इति च जानतः । *जायापत्योर्न विभागो विद्यते* (आप.ध.सू.२-६-१४-१६) इत्युच्यते, किं पुनः नित्यशरीर-शरीरिणोः आत्मपरमात्मनोः । *अविभागेन दृष्टत्वात्* (ब्र.सू.४-४-४) इति सूत्रम् । किमयं मुक्त आविर्भूतस्वरूपः प्रत्यगात्मा परं ब्रह्म स्वात्मनो विभक्तम् अनुभवति ? उत स्वात्मनोऽपि आत्मतया अविभागेन *अहं ब्रह्मास्मि* इति ? इति संशयः । *निरंजनः परमं साम्यमुपैति* (मुं.उ.३-१-३) *सोऽश्नुते सर्वान् कामान् सहब्रह्मणा विपश्चितेति* (तै.आन.१) *इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः* (भ.गी.१४-२) इति श्रुतिस्मृतिभ्यो विभक्तम् अनुभवति इति पूर्वपक्षः । *सिद्धान्तस्तु सर्वं खल्विदं ब्रह्म* (छां.उ.३-१४-१) *ऐतदात्म्यमिदं सर्वम्* (छां.उ.६-८-७) *तत्त्वमसि* (छां.उ.६-८-७) इत्यादि सामानाधिकरण्यैः *यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरम्* (बृ.उ.५-७-३) *य आत्मनि तिष्ठन् यस्यात्मा शरीरम्* (बृ.उ.मा.५-७-२२) इत्यादिषु सर्वस्य चिदचिद्वस्तुनः ब्रह्मशरीरतया ब्रह्मप्रकारत्वेन *तत्तद्वस्तुबुद्धिशब्दास्तत्पर्यन्तविषयाः* इत्यारभ्य *आत्मेति तूपगच्छन्ति* (ब्र.सू.४-१-३) इति न्यायेन स्वात्मनोऽपि आत्मतया *अहं ब्रह्मास्मि* (ते.बिं.३३-७०) इत्युपासनेन यथावस्थितपरमात्मात्मकतया आत्मनो द्रष्टृत्वगुणैः तत्साधर्म्यं प्रतिपादयति । *सर्वान् कामान् सह ब्रह्मणा विपश्चितेति* (तै.आन.१) ब्रह्मशरीरतया ब्रह्मप्रकारभूतत्वात् स्वात्मभूतेन ब्रह्मणा सह तद्गुणान् अनुभवतीति वदति । कल्याणगुणविशिष्टब्रह्म अनुभवति इत्यर्थः । अतो अंगांगिनोः एकफलत्वात् परमात्मसमृद्धिं स्वसमृद्धिमेव अनुभवति ज्ञानी स्वसमृद्धित्वादेव । *एते वयं सर्वसमृद्धिकामाः लोको जनस्यास्य यदेष* (रा.अयो.१६४५) इत्यार्षम् उपबृह्मणं च । ननु स एको मानुष आनन्दः श्रोत्रियस्य चाकामहतस्य इति किं न अधीतम् ? उच्यते । मानुषानन्दस्य असमाप्तत्वात् । गन्धर्वसुखपर्यन्तो हि मनुष्यानन्दः पुष्कलो भवति । तर्हि तत्र विभज्य वचनं किमर्थम् ? सर्वपर्यायेषु उक्ताः तज्ज्ञानबलैश्वर्यादिगुणानन्दाः सर्व एव एकतः तत्तल्लोकवर्तिगन्धर्वानुभवानन्दः एकतः इति प्रदर्शनाय प्रथमपर्यायेे एव विभागः उक्तः ।

**ते ये शतं मनुष्यगन्धर्वाणामानन्दाः** । एवं स्वैश्वर्यादिगुणपूर्णमनुष्यगन्धर्वाणां शतस्य ये आनन्दाः ते संभूय, **स एकः देवगन्धर्वाणां** अन्तरिक्षलोकवासिनो देवयोनयः सर्वे

देवगायकाः गन्धर्वाः, तेषाम् । एतेन देवानाम् उपकरणभूत-सिद्धाप्सरःप्रभृतीनां, आपाताळसप्तलोकवासिनां दैत्योरगादिदेवयोनिभेदानां च आनन्दोऽपि उक्तप्रायः एव । **श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणमानन्दाः ; स एकः पितृणां चिरलोकलोकानां आनन्दः** चिरस्थायी लोको एषां ब्रह्मसुतानां देवयोनिभेदानां सः चिरलोकाः भवति । **श्रोत्रियस्य चाकामहतस्य** ।

**ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः, स एकः कर्मदेवानां देवानां आनन्दः** । कर्मदेवान् स्वयमेव व्याचष्टे **ये कर्मणा देवान् अपियन्ति** - ये यागादिकर्मणा त्रयस्त्रिंशद्देवान् गच्छन्ति । ब्रह्मणि लयवत् देवष्वपि लयो देवत्वप्राप्तिः । पूर्वस्थूलरूपत्यागात्मकोत्तरसूक्ष्मावस्था लयः । ते ययातिप्रमुखाः **। श्रोत्रियस्य चाकामहतस्य, ते ये शतं कर्मदेवानां देवनामानन्दाः। स एको देवानामानन्दः ।** वस्वग्निरुद्रादित्यरूपत्रयस्त्रिंशद्देवतानाम् । **श्रोत्रियस्य चाकामहतस्य ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य ।** तल्लोकवासिनः अकामहतश्रोत्रियस्य तत्समानैश्वर्यं प्राप्तस्य इति सर्वत्र योज्यम् ।

**ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः ।। श्रोत्रियस्य चाकामहतस्य ।** ननु महर्जनस्तपोलोकवासिनां धर्मध्रुवादीनां सनकादीनां वैराजादीनां च आनन्दा नोक्ताः ? नैष दोषः । तेषां योगित्वेन अकामहतश्रोत्रियान्तर्भावात् ।

**ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः । ते** - प्रजापतेरानन्दाः । एवमुक्तप्रकारेण गुणिता ये शतं **स एको ब्रह्मण आनन्दः** सम्भूय एक आनन्दः । स्वनाभिपद्मजन्य-एकाण्डाधिपतेः सृष्टि-स्थिति-नियमने एव शतगुणं । एवमण्डानन्त्यात् अतीतानागताण्डानन्त्यात् ब्रह्मानन्त्याञ्च उत्तरत्र *यतो वाचो निवर्तन्ते* (तै.उ.आन.९) इत्युच्यमानम् अविरुद्धम् । शतशब्दः संख्याशतवाची वा ? *यतो वाचः* इति पूर्वापरैकार्थ्यात् सर्वपर्यायेषु शतादन्यूनतापरं भविष्यति । **श्रोत्रियस्य चाकामहतस्य** चतुर्मुखलोकवासिनः एव उक्तलक्षणनिरतिशयसर्वानन्दमय-स्वान्तर्याम्यनुभवनिरतस्य शास्त्रैकदृष्टेः । अत एव अकामहतस्य चतुर्मुखात् शतगुण आनन्द एव । तल्लोकवासिनां योगिनां शतगुणितानन्द वचनार्थं वा । ब्रह्मणोऽपि शतगुणितानन्दवचनं ब्रह्मानन्दात् अधिकत्वज्ञापनाय । तदुपासकस्य तद्भक्तिरसातिशयप्रदर्शनेन सर्वत्र अनुक्रमणम् । सोऽयं श्रोत्रियानन्दः अमृतस्रुग्भवतीत्युच्यते । दृश्यते च अस्मिन् शरीरे एव प्रह्लादादीनां क्षेत्रज्ञानाम् ।

सृष्टि-स्थिति-संहारविषयत्वात् शास्त्रवश्यतया तदाज्ञाभंगभरकालुष्य-परिखिन्नानन्दत्वात् तदज्ञानावृतत्वाच्च सर्वप्रकारानुपादेयत्वप्रदर्शनपूर्वकं परमात्मनः एव जिज्ञास्यत्वम् उक्तम् । सोऽयं निरुपाधिकानन्तविपश्चिदात्मानन्दमयादिशब्दैः उच्यमानः सर्वोपरितनः कः इति न विद्मः इत्यत्राह-**स यश्चायं पुरुषे यश्चासावादित्ये स एकः ब्रह्मण आनन्द** इत्येवमन्तेन। उक्तानन्तस्वरूपगुणविभवविपश्चिदात्मानन्दमयोऽयं पुरुषः, विज्ञानमये तदनुजिघृक्षया सकामः अवस्थितः इति दर्शितः । **यश्चासावादित्ये** अन्तरादित्यविद्यायां *य एषोऽन्तरादित्ये हिरण्मयः पुरुषः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी* (छां.उ.१-६-६-७) *माहारजनं वासः* (बृ.उ.२-३-६) *यस्यादित्यो भामुपयुज्य भाति* ( ) *येनादित्यस्तपति तेजसेद्धः । न तत्र सूर्यो भाति न चन्द्रतारकम्* (क.उ.५-१५) *तस्य भासा सर्वमिदं विभाति* (क.उ.२-५-१५) *नारायण परो ज्योतिः* (महा.ना.उ.९३) इत्यतिशयतेजोविशिष्टो हिरण्यवर्णः पुरुषः पुण्डरीकाक्षः पीताम्बररूपी उपास्यत्वेन उच्यते । **स एकः** तस्य चास्य च एकं रूपं, नाम च इत्यतिदेशः क्रियते छान्दोग्ये *यदमुष्यरूपं यावमुष्यगोष्णौ यन्नाम* (छां.उ.१-७-५) इति ।

*ब्रह्मा कमलगर्भाभो रुद्रः कालाग्निसन्निभः ।*
*पुरुषः पुण्डरीकाभो रूपं तत्परमात्मनः ।।*
*ध्येयस्सदा सवितृमण्डलमध्यवर्ती*
*नारायणः सरसिजासनसन्निविष्टः ।*
*केयूरवान् मकरकुण्डलवान् किरीटी*
*हारी हिरण्मयवपुः धृतशङ्खचक्रः ।।* (ना.पु.६२-१७) इति ।

*रुक्माभम्* (म.स्मृ.१२-१२२) इत्यादि सकलधर्मशास्त्रभूषणमनुवचनं शुभाश्रयप्रकरणे । उपबृह्मणं च भारतरामायणाभ्यां *पुरुषः पुण्डरीकाक्ष* **(वाराहे)** इति । पुण्डरीकाभ इति पाठे कमलाकरवत् इति स्यात् । यद्वा *शशिवर्णं चतुर्भुजम्* (वि.स.पू.पी.१) इति कार्तयुगो वर्णः उच्यते । एकः इत्यनेन तन्नियाम्यत्वेऽस्माकं देवानां च न विशेषः इति दर्शितम् । *स यश्चायं पुरुषे यश्चासावादित्ये* इति उभयत्र चशब्देन जातिवत् परिसमाप्य वर्तमानत्वं उक्तम् ।

अत्र सावित्र्युपदेशश्च पुष्कलः । तथा हि । *स यश्चायं पुरुषे, धियो यो नः प्रचोदयात्* (ऋ.सं.३-६२-१०) *इति* चैकार्थ्यम् । *यश्चासावादित्ये, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि* (ऋ.सं.३-६२-१०) इत्युभयमेकार्थम् ।

**स य एवं वित्** । अतिदिष्टस्य पुण्डरीकाक्षस्य उपासनार्थं पूर्वोक्तोपासकश्च परमव्योमहृदयः उपासनं उक्तरूपाविशेषेण यः कुरुते । **अस्माल्लोकात् प्रेत्य** - तच्छब्दस्य अनुषंगः । अमुं लोकं

प्रेत्य इति चानुवर्तते । स हि इत्युक्तश्च अर्चिरादिमार्गः । **एतमन्नमयमात्मानमुपसंक्रामति पूर्ववत् । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति ।** अन्तःकरणचतुष्टयात्मानं स्वात्मानम् । एवं चतुर्विंशतितत्त्वम् अतीत्य एतं विज्ञानमयम् आत्मानं उपसंक्रामति । बद्धमुक्तरूपं सर्वम् । अथ **एतमानन्दमयमात्मानमुपसंक्रामति**- मान्त्रवर्णिकं परमव्योमनिलयं परमकारणम् । उपसंवेशनम् उपक्रमणं तदनुभवानन्दकाष्ठा । यथा भूमविद्यायां *न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः । स स्वराड्भवति । तस्य सर्वेषु लोकेषु कामचारो भवति । नान्यत् पश्यति नान्यत् शृणोति स भूमा* (मैत्रा.उ.७-११) इति । **तदपि** - आनन्दमयं प्राप्तस्य अनवच्छिन्नानन्दानुभववैशद्याय श्लोकः ।

**आ.भा.** अस्मात् आनन्दमयात् परब्रह्मणो भीषा - भयेन, **वातो** - देवविशेषो वायुः **पवते** वाति । **भीषा** - परमात्मजनितभयेन, **सूर्यः** - प्रसिद्धो देवः, **उदेति** - प्रतिदिनं नियते काले नियमितम् उदयं प्राप्नोति । **अग्निश्चेन्द्रश्च** प्रसिद्धौ देवौ अपि परमात्मभीत्या एव स्वस्वव्यापारेषु नियमतः प्रवर्तेते । पञ्चमः वर्णितचतुर्देवापेक्षया पञ्चत्वसंख्याको मृत्युः, सर्वमरणहेतुः यमोऽपि **धावति** । परमात्मभयेन स्वव्यापारनिर्वाहाय इतस्ततो द्रुतगत्या याति इत्यर्थः । सर्वेषां वातप्रभृतीनां सर्वेषामपि देवानां भयं भवति भगवतः शासनोल्लङ्घने मम किमनिष्टं भवेदिति । तस्मात् ते स्वस्वक्रियासु तत्पराः भवन्ति । अत इन्द्रादिपदस्य दुःखमिश्रितत्वात् अनुपादेयता एव केवलं भगवत्पदमेव उपादेयम् । तत्र कतमस्याऽपि अनर्थस्य गगनकुसुमायमानत्वात् । निरन्तरस्मृतिविच्छेदश्च तत्पदप्राप्तौ प्रतिबन्धकः । तस्मात् स एव परमं भयं मुमुक्षूणाम् । अतः उक्तं प्रमिताक्षरकारैः - *त्वदीया स्मृतिस्तारिका मृत्युसिन्धोः तथा विस्मृतिः पातिका तत्र चैव* इति । एवम् अनेन मन्त्रेण आनन्दमयस्य स्तुतिः कृता भवति तदीयैश्वर्यवर्णनात्मिका, इति भावः । **इति** शब्दो मन्त्रसमाप्तौ ।

आनन्दमयः प्रकृतः । स एव **रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति। एष ह्येवानन्दयाति** इत्यादि श्रुतिभिः आनन्दस्वरूपः आनन्दप्रदश्चोक्तः । तस्यैव आनन्दस्य प्रकृतस्य मीमांसाविचारः क्रियते । प्रसिद्धश्च आनन्दो विषयसम्पर्कजनितो लोके । ब्रह्मानन्दोऽपि तादृशः एव उतान्यादृशः इति विचार्यते । यद्यपि लोकप्रसिद्धाऽनन्दोऽपि ब्रह्मानन्दस्यैव लेशः। *एतस्यैव आनन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति* इति श्रवणात्। तथापि स

आनन्दः कुत्र कियान् ? इति प्रदर्शनमुखेन निरवधिकातिशये ब्रह्मानन्दे बुद्धिः अवतार्यते इति **मीमांसा** शब्दाभिप्रायः । लोके हि अत्यल्पीयसा मानभूतेन अङ्गुल्यादिना परिमितः कश्चित् मानदण्डः स्थिरीक्रियते । तेन महदपि वस्त्रादिकं परिमीयते। तथैव गन्धर्वानन्दम् आरभ्य चतुर्मुखानन्दपर्यन्तस्य परिच्छिन्नानन्दजातस्य परिच्छेदाय प्रत्यक्षविषयाऽत्यल्पीय-स्वकीयानन्दगम्यम् एकं परिमाणम् आनन्दविशेषस्वरूपं स्थिरीकरोति । प्रथमं यस्य शतगुणोत्तरोत्कर्षेण चतुर्मुखानन्दं यावत् सुकरपरिच्छेदः आनन्दः स्यात् **युवा स्यात्** इत्यादिना । स्वयं युवा स्याद् यौवनसम्पन्नो भवेत् । **साधु** - शास्त्रीयविधम् अनतिक्रम्य यूनां समवयसाम् अध्यापकः उपदेशपरः । **आशिष्ठः** अनलसतया क्षिप्रकारी । **द्रढिष्ठः** - अतिशयेन दृढः अतिदृढशरीरः । **बलिष्ठः** - अतिशयितमनोबलवान् । **वित्तस्य पूर्णा** - वित्तेन परिपूर्णा दृष्टाऽदृष्टार्थसाधनोपयोगिवस्तुसम्पन्ना । **सर्वा पृथिवी** इयं दृश्यमाना तस्य **स्यात्** - तदधीना स्यात् । सकलभूमण्डलेश्वरः सम्राट् इत्येतत् । तस्य ईदृशविशेषणैः विशिष्टस्य सम्राजः यः आनन्दः स एव **एको मानुषः** - मनुष्यसम्बन्धी, प्रकृष्टः **आनन्दः** इत्युच्यते । अयमेव आनन्दो मानदण्डस्थानीयः स्थिरीकृतः । अनेनैव हि शतगुणोत्तरोत्कर्षक्रमेण अन्ये आनन्दाः परिच्छेत्स्यन्ते । अयं च आनन्दः श्रोत्रियेण विदुषा न अनुभूयते । अत्र तस्य विरागवत्तया एव ब्रह्मानन्दलाभाय कृतप्रयत्नत्वात् । अत एव अत्र पर्यायेऽग्रिमपर्यायेषु इव **श्रोत्रियस्य चाकामहतस्य** इति वाक्यं नोपात्तम् । अतः परम् अनेनैव मानेन आनन्दान् परिच्छेत्तुमाह - **ते ये शतम्** इति । **ये शतम्** मानुषा आनन्दाः ते एव **मनुष्यगन्धर्वाणाम्** एकः आनन्दः । शतगुणितमानुषानन्दसमानः एको मनुष्यगन्धर्वानन्दः इत्येतत् । ये मनुष्याः एव कर्मविशेषवशात्, विद्याविशेषवशात् वा गन्धर्वतां प्राप्ताः ते मनुष्यगन्धर्वाः इत्युच्यन्ते । तदानन्दो मनुष्यसम्राजः आनन्दापेक्षया शतगुणः उत्कृष्टः इति गम्यते । **श्रोत्रियस्य चाकामहतस्य** । काम्यन्ते इति कामाः । स्त्र्यपत्यादयः तैः हतः तद्विषयवासनापरिभूतः । तद्भिन्नः **अकामहतः** सांसारिकवासनापरिमुक्तः श्रोत्रियः ब्रह्मनिष्ठः तस्यापि अयं मनुष्यगन्धर्वानन्दः अनुभवविषयो भवति । प्रतिपर्यायम् अस्य वाक्यस्य व्याख्या समाना एव विज्ञेया । आनन्दः केवलं तत्तत्पर्यायगतो ग्राह्यः । मनुष्यगन्धर्वणां ये शतमानन्दाः ते देवगन्धर्वस्य एकः आनन्दः। मनुष्यगन्धर्वापेक्षया शतगुणितोत्कर्षो देवगन्धर्वानन्दस्य भवति । गन्धर्वाख्ये देवयोनिविशेषे जाता देवगन्धर्वाः । ते अन्तरिक्षलोके वसन्ति । मनुष्यगन्धर्वास्तु देवयोनौ न उत्पद्यन्ते। किन्तु मनुष्ययोनौ उत्पन्नाः सन्तः कर्मविशेषादिना अन्तर्धानशक्त्यादिकं गन्धर्वसमानं प्राप्ताः गन्धर्वाः कथ्यन्ते इति विवेकः । देवगन्धर्वानन्दोऽपि

अकामहतश्रोत्रियानुभवविषयो भवति । **देवगन्धर्वाणां ये शतम् आनन्दाः** ते एकः आनन्दः **चिरलोकलोकानां पितृणां** भवति । चिरस्थायी लोकः चिरलोकः । सः लोको निवासभूमिः येषां तादृशानां पितृणाम् आनन्दो देवगन्धर्वानन्दापेक्षया शतगुणोत्कृष्टः भवति । अयमपि आनन्दः अकामहतश्रोत्रियानुभवविषयो भवति । ईदृशानां पितॄणाम् ये शतमानन्दाः स एकानन्दः **आजानजानां देवानाम्** । आजानः देवलोकः, तत्र जाताः आजानजाः, स्मार्तकर्मविषयतः तत्र लब्धजन्मानः । पित्रानन्दापेक्षया शतगुणोत्कर्षः आजानजदेवानन्दस्य भवति । अयमपि अकामहतश्रोत्रियानुभवगम्यः।

आजानजदेवानन्दम् अपेक्ष्य शतगुणं उत्कृष्टः आनन्दः **कर्मदेवानां** भवति । केवलेन वैदिकेन अग्निहोत्रादिकर्मणा देवसायुज्यं प्राप्ताः कर्मदेवाः उच्यन्ते । अयमानन्दोऽपि श्रोत्रियविद्वदनुभवगोचरो भवति । कर्मदेवानन्दापेक्षयापि शतगुणः उत्कृष्ट आनन्दो देवानां भवति । देवास्तु त्रयस्त्रिंशत् संख्याकाः । देवानन्दोऽपि अकामहतश्रोत्रियानुभवगम्यो भवति । देवानन्दतः शतगुणश्रेष्ठः आनन्दः इन्द्रस्य भवति । इन्द्रस्तु प्रसिद्धो हविर्भुजां देवानां स्वामी । तदीयम् आनन्दमपि श्रोत्रियः अकामहतः अनुभवति । इन्द्रानन्दतोऽपि शतगुणश्रेष्ठो **बृहस्पतेरानन्दः** । बृहस्पतिस्तु देवस्वामिनः इन्द्रस्य आचार्यः । आनन्दप्रतिबन्धककामक्रोधादिनिवर्तकशक्तिमत्तया अधिकविशुद्धिः एतस्य चेतसः इन्द्रचेतोऽपेक्षया भवति । तस्मात् बृहस्पतेः उत्कृष्टानन्दः । आनन्दोत्कर्षे च सर्वत्रैव चित्तविशुद्धिः एव हेतुः अवधेयः । बृहस्पतेरपि आनन्दो अकामहतश्रोत्रियगम्यो भवति। बृहस्पतिसम्बन्धिनः आनन्दात् अपि शतगुणितोत्कर्षवान् आनन्दो भवति प्रजापतेः । प्रजापतिश्च अत्र चतुर्मुखो ब्रह्मा । एकवचनश्रुत्या दक्षादीनां प्रजापतिशब्दवाच्यानामपि न ग्रहणम् । तदीयानन्दोऽपि अकामहतश्रोत्रियभोग्यः भवति । प्रजापतेः आनन्दतः शतगुणोत्कर्षवान् आनन्दः प्रकृतस्य आनन्दमयस्य इत्यर्थः । अयं ब्रह्मानन्दोऽपि अकामहतब्रह्मनिष्ठविद्वद्भोग्यो भवति । एतदर्थमेव विद्वान् प्रकृतं ब्रह्म समुपास्ते । ननु गन्धर्वानन्दादिवत् प्रकृतब्रह्मानन्दोऽपि मानदण्डस्थानीयेन मानुषानन्देन क्रमिकशतगुणोत्कर्षबोधनद्वारा परिमितः एव इति अपरिच्छिन्नानन्दः आनन्दमयो न स्यात् श्रुतिश्च अपरा अनवधिकातिशयम् अपरिच्छिन्नम् आनन्दमयस्य बोधयति। सत्यम्, प्रजापत्यानन्दतः उत्कर्षमात्रबोधने श्रुतितात्पर्यात् । न हि इयं श्रुतिः गन्धर्वानन्दादिवत् प्रकृतब्रह्मानन्दस्य परिच्छेदं तात्पर्यतो ब्रवीति । किन्तर्हि प्राजापत्यानन्दतः शतगुणम् उत्कर्षं ब्रुवाणाऽनवधिकातिशयिताम् एव विवक्षति प्रकृतानन्दमयानन्दस्य इति । न हि इषुवत् सविता गच्छति इत्युक्ते सवितुः इषुसमानैव गतिः उक्ता भवति । क्षणमात्रेण सवितुः अनेकयोजनान्तगतिमत्वात् इषोश्च तावती गतिः न क्वचिदपि काले सम्भाव्यते। किन्तु सवितुः अगतौ मन्दतामात्रं पराक्रियते । तद्वत् उत्कर्षमात्रं ब्रुवती श्रुतिः अपरिच्छिन्नत्वे एव ब्रह्मानन्दस्य पर्यवस्यति ।

अयमानन्दमयो महता प्रपञ्चेन उपपादितः । कीदृशः कश्च अयमिति जिज्ञासां समाधातुमाह **यश्च** इत्यादि । **योऽयं पुरुषे** पुरुषस्य हृदयगुहायां निहितः अन्नमयादिविज्ञानमयपर्यन्तस्य सर्वस्य अन्तरात्मा । **यश्चासौ आदित्ये** आदित्यमण्डलान्तर्वर्तितया श्रुतिसमधिगम्यः *य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः* (छां.उ १-६-६) इत्यादि श्रुत्या सुवर्णसदृशकान्तिविग्रहविशिष्टतयाऽभिधीयमानो देवताविशेष इत्येतत् । **स एको** हृदयगुहावर्ती आदित्यमण्डलवर्ती च देवताविशेष एकः एव न परस्परं भिन्नः । तथा च कमनीयविग्रहविशिष्टस्य आदित्यमण्डलवर्तिनः एव देवस्य हृदयगुहानिहिततया समुपासनं कार्यम् । स एव प्रकृतः आनन्दमयः *ब्रह्मविदाप्नोति परम्* इत्यत्र परशब्दवाच्योऽपि स एव । दिव्यकमनीयविग्रहविशिष्टतामस्य श्रुतिरेव भगवती ब्रवीति। ततो निर्विशेषज्ञानरूपता परोक्ताऽपाकृता भवति ।

एवमानन्दमयस्य प्राप्यतायाम् उपयोगिनः आनन्दप्रदत्व-भयहेतुत्व-निरवधिकातिशयानन्दत्वादीन् गुणान् उक्त्वा सम्प्रति पूर्वोक्तान् प्रश्नान् समाधातुम् उपक्रमते - **स यः** इत्यादिना । **य एवंवित्** आनन्दप्रदत्वादिगुणगणविशिष्टम् आनन्दमयं वेत्ति समुपास्ते सः उपासकः, **अस्माल्लोकात् प्रेत्य** - मूर्धन्यया सुषुम्नया नाड्या शरीरात् निष्क्रम्य अर्चिरादिना देवपथा अप्राकृतं साकेताख्यं देशविशेषं गत्वा अन्नमयशरीरकं, प्राणमयशरीरकं, मनोमयशरीरकं, विज्ञानमयशरीरकम्, एतेषाम् अन्नमयादीनां सर्वेषामन्तर्यामिणं च एतं परमात्मानं निरतिशयानन्दम् आनन्दमयशब्दाभिधेयं श्रीरामपदप्रसिद्धम् **उपसङ्क्रामति** प्राप्नोति । तदनुभवरूपम् उपभोगं लभते इत्येतत् । अत्र लोकान्तरगमनकथनात् प्रेत्य अमुं लोकं कश्चन गच्छति इति प्रथमप्रश्नस्य विधिरूपम् उक्तम् । इहैव ब्रह्म प्राप्नोति किम् ? इति द्वितीयप्रश्नस्य निषेधरूपं समाधानम् उक्तम् । अमुं लोकं गत्वा समश्नुते किम् ? इति तृतीयप्रश्नस्य विधिरूपं समाधानम् उक्तं ब्रह्मानुभवकर्तृत्वकथनात् । ब्रह्मस्वरूपेण एकताम् आपद्यते किम् ? इति चतुर्थप्रश्नस्य निषेधरूपम् उत्तरं कथितं भवति । एवं चत्वारोऽपि अनुप्रश्नाः समाहिताः इति अवधेयम् । **तदप्येष श्लोको भवति** तदानन्दमयं मीमांसितम् अभिलक्ष्य वक्ष्यमाणो मन्त्रः प्रवर्तते । आनन्दवल्ल्यां प्रतिपादितस्य अस्य अर्थस्य सर्वस्य प्रकाशकः मन्त्रोऽयं वक्ष्यमाणः इत्येतत् ।।

**सु.** - उक्तं सर्वप्राणिप्राणनम् आनन्दमयायत्तम् इति । न केवलं प्राणनमात्रम् आनन्दमयायत्तं, किं तु पवनादिमहाभूतचेष्टितम् आदित्यादिग्रहपरिभ्रमणम् इन्द्राद्यसाधारणलोकनिर्वहणादिव्यापारः मृत्योः संहरणव्यापारश्च सर्वम् आनन्दमयायत्तम् इत्यधुन उच्यते । **अस्मात्**

परब्रह्मणः, **भीषा** भीत्या **वातः पवते । भीषा सूर्यः** प्रत्यहं काले काले **उदेति** । **अस्मात्** भीत्या, **अग्निरिन्द्रश्च** स्वस्वकार्यं निर्वहतः । **पञ्चमो मृत्युः** अस्मात् भीत्या अतन्द्रितः स्वकार्ये धावति, इति आनन्दमयस्य परमम् ऐश्वर्यम् उपवर्णितं भवति । आनन्दप्रचुरस्य परस्य ब्रह्मणः निरवधिकानन्दलक्षणं आनन्दप्राचुर्यं गमयितुम् **आनन्दस्य मीमांसा** - विचारः **भवति** । स्वयं **युवा स्यात्** । यूनां च स्वयम् **अध्यापकः** स्यात् । एतेन सवयसाम् अध्यापकत्वम् ऐश्वर्यम् उक्तं भवति । **साधु** - सम्यक् स्वरवर्णादिभ्रंशरहितम् । **अध्यापकः । आशिष्ठः** अशनसमर्थः । अरोगः इत्येतत् । **द्रढिष्ठः** - शारीरबलसम्पन्नः । **बलिष्ठः** - मानसबलसम्पन्नः । सर्वा इयं पृथिवी वित्तपूर्णा तस्य स्यात् - तदधीना स्यात् । सम्राड् इत्येतत् । तस्य यः अयम् आनन्दः **स एको मानुष आनन्दः** । सः अयं मानुषानन्दः **श्रोत्रियस्य** - श्रुतवेदान्तस्य ब्रह्मनिष्ठस्य, **अकामहतस्य** कामैः प्राकृतैः अनुपहतस्य मुक्तस्य भवति । समुद्रे गोष्पदवत् ब्रह्मानन्दे निरवधौ मानुषानन्दः अपि अन्तर्गतः इत्येतत् । **ते ये शतं मानुषा आनन्दाः स एकः मनुष्यगन्धर्वाणामानन्दः** - मनुष्याः एव सन्तः तपोबलेन, विद्याबलेन वा अन्तर्धानादिशक्तिविशेषं प्राप्ताः मनुष्यगन्धर्वाः उच्यन्ते । सः अयं मनुष्यगन्धर्वानन्दः, **श्रोत्रियस्य चाकामहतस्य** - अतिरोहितार्थम् एतत् । **ते ये शतम्** इत्यादि । शतगुणितोत्तरक्रमेण देवगन्धर्वादीनाम् आनन्दान् अभ्यस्य तेषां ब्रह्मानन्दे अन्तर्गततां प्रदर्श्य ब्रह्मानन्दस्य सर्वतः प्रकृष्टतां प्रदर्शयन्ती सा इयम् आनन्दमीमांसा आनन्दमयशब्दाभिप्रेतम् आनन्दप्राचुर्यं निगमयति । **देवगन्धर्वाः** - देवलोके निवसन्तः गन्धर्वाः । चिरकालस्थायी लोकः चिरलोकः, सः लोकः येषां ते **चिरलोकलोकाः** । आजानः देवलोकः, तस्मिन् स्मार्तकर्मोपात्तैः सुकृतैः सञ्जाताः आजानजाः **देवाः** । श्रौतकर्मोपात्तैः सुकृतैः अग्नीन्द्रादिसायुज्यं प्राप्ताः **कर्मदेवाः । देवाः** वसुरुद्रादयः । इन्द्रः प्रसिद्धः । तथा बृहस्पतिश्च । प्रजापतिः चतुर्मुखः । **ते ये शतं प्रजापतेरानन्दाः स एकः ब्रह्मणः** *ब्रह्मविदाप्नोति परम्* इति प्रस्तुतस्य परस्य ब्रह्मणः **आनन्दः । न च एक** इति निर्देशात् ब्रह्मानन्दस्य परिच्छिन्नता । प्रजापत्यानन्दात् प्रकृष्टताज्ञापनमात्रे तात्पर्यात् । *इषुवत् सविता गच्छति* इति वचनस्य गतिमान्द्यनिवृत्तौ तात्पर्यवत् । तस्य अस्य आनन्दमयस्य परस्य ब्रह्मणः उपासनास्थानविशेषं गमयन्ती श्रुतिः इयं देवताविशेषताम् व्यनक्ति **स यश्चायम्** इत्यादिना । **यश्चासावादित्ये** *हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः* (छां.उ.१-६-६) इति श्रुतः, **यश्चायं पुरुषे** - विज्ञानमयस्यापि अन्तरात्मतया हृदयगुहायां सन्निहितः **स एकः** - अभिन्नः ।

हृदयगुहावर्तितया तादृशदिव्यविग्रहविशिष्टत्वेन च ध्यानं कर्तव्यम् इत्येतत् । एवं प्राप्यत्वोपयुक्ताः गुणाः उपवर्णिताः । *उताहो विद्वानमुं लोकम्* इत्यादिना पूर्वं प्रस्तुतानां प्रश्नानाम् उत्तरमाह - **स य एवम्** इत्यादिना । **एवंवित् सः** - उपासकः **अस्माल्लोकात्** - प्रारब्धावसाने **प्रेत्य** - अर्चिरादिना मार्गेण निर्गतः **एतमन्नमयम्** अन्नमयान्तर्यामिणं, **एतम् मनोमयम्** मनोमयान्तर्यामिणम्, **एतं विज्ञानमयम्** विज्ञानमयान्तर्यामिणं **एतमानन्दमयमात्मानं उपसङ्क्रामति** - प्राप्नोति । अत्र प्रेत्य सङ्क्रामति इत्युक्त्वा प्राप्तृप्राप्ययोः भेदः देशविशेषगमनं चेति मुक्तौ विशेषः निरूपितः भवति । तस्मिन् मीमांसिते आनन्दप्राचुर्ये **एषः** वक्ष्यमाणः **श्लोको भवति** ।।

## नवमोऽनुवाकः

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति । एतँ ह वाव न तपति किमहँ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानं स्पृणुते । उभे ह्येवैष एते आत्मानँ स्पृणुते । य एवं वेद । इत्युपनिषत् ।।**

**।। इति नवमोऽनुवाकः ।।**

**।। इति आनन्दवल्ली समाप्ता ।।**

**प्र.दी.** आनन्दमयपरब्रह्मणः आनन्दस्य इयत्तालक्षणं पारम् अवगन्तुं प्रवृत्ते वाङ्मनसी तदप्राप्य निवृत्ते भवतः इत्याह **यतो वाचो निवर्तन्ते** इति । आनन्दमयपरमात्मानं परिष्वजति इति यावत् । *एषः सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः* (रा.यु.१-१३) इत्युक्तम् । ततोऽपि अधिकस्य अभावात् तत्रैव उपसङ्क्रमणं समाप्तम् । अन्यत्र न गतः । **यतः** - यस्मात् ब्रह्मानन्दात् **वाचः** - वचांसि तदुपलक्षितवेदाः इत्यर्थः । **मनसा सह अप्राप्य** - परम् अप्राप्य **निवर्तन्ते** निवृत्ताः भवन्ति इत्यर्थः । **आनन्दम्** इति । **ब्रह्मणः** - परब्रह्मसंबन्धिनम् आनन्दं, **विद्वान् न बिभेति कुतश्चनेति** । इतिशब्दः हेतौ । कुतश्चन हेतोः देवतान्तरात् वा सांसारिकदुःखात् वा न । **न बिभेति** - भयं न प्राप्नोति इत्यर्थः । एतदेव उपपादयति - **एतँ ह वाव न तपति** इत्यादि । **अहं साधु** - पुण्यकार्यं किमपि **नाकरवम्** इति - किमपि न अकार्षम् इति । **अहं पापम्** - अकार्यकरणं, किमपि - किञ्चित् अकरवं करोमि इति उभयविधचिन्ता स्वर्गादिफलेच्छाभावात्,

ब्रह्मज्ञानदग्धसर्वपाप्मत्वाच्च **एतं** - ब्रह्मविदं वाऽऽह उभयविधचिन्ता **न तपति** - न बाधते । **स य एवं विद्वान्** इति । **य एवं विद्वान्** - एवं प्रकारेण पुण्यपापे न बाधते इति जानाति । **सः विद्वान् आत्मानम्** - स्वात्मानं **स्पृणुते** - रक्षति प्रणयति इत्यर्थः । **उभे ह्येवैष एते आन्मानँ स्पृणुते** - रक्षति प्रीणयति इत्यर्थः । **उभे ह्येवैष एते आत्मानँ स्पृणुते । एषः** विद्वान्, **एते उभे** पुण्यपापे पुण्यपापाभ्याम् इव इत्यर्थः । **आत्मानम्** - स्वात्मानं जीवं स्पृणुते - रक्षति इत्यर्थः । द्विरुक्तिः पुण्यपापविधूनन-सातत्यद्योतनार्थं वा अनुवाकसमाप्त्यर्थं वा इति वेदितव्या । **य एवं वेद इत्युपनिषत्** । **यः** - विद्वान्, **एवं वेद** - ब्रह्मविदः पुण्यपापविधूननं भवति इति जानाति । **इत्युपनिषत्** - इत्थं परमरहस्योपदेशः ।।

**।। इति आनन्दवल्ली प्रतिपदार्थदीपिका ।।**

**तै.भा.** - तमेव श्लोकं पठति - **यतः** इति । व्याख्यातम् ।

नन्वेवं सविभूतिकं ब्रह्मानुभवतः अपि पूर्वकृतसुकृतदुष्कृतस्मरणेन दुःखमपि स्यात् इत्यत्राह **एतम्** इत्यादि । **एतम्** - ब्रह्मानुभवितारं **ह वाव** प्रसिद्धौ । **अहं साधु** - सत्कर्म **नाकरवम्** किमिति चिन्ता **न तपति** - न पीडयति । *नोपजनं स्मरन्निदं शरीरम्* (छां.उ.८-१२-३) इत्युक्तरीत्या ब्रह्मानन्दानुभवसागरनिमग्नो न किञ्चित् स्मृत्वा शोचति इत्यर्थः । अतापे हेतुमाह - **स य** इति । **य एते** - साध्वसाधुकर्मणी **आत्मानम्** पराधीनं मत्वा तन्निग्रहानुग्रहरूपं मत्वा **स्पृणुते** - प्रीतो भवति । *सु प्रीतौ* (धा.पा.१२६०) सौवादिकः । **उभे** इत्यादि पुनर्वादः आदरार्थः । **य एवं वेद** सः **एते उभे** पुण्यपापे **आत्मानं** मत्वा **स्पृणुते । इत्युपनिषत् । इति** - इयम् उपक्रान्ता ब्रह्मविद्या, **उपनिषत्** - अतिरहस्यम् इत्यर्थः ।

संवत्सरवासिने प्रणताय भक्ताय शान्ताय अन्तेवासिने इमाम् आनन्दवल्लीं ख्यातिलाभपूजाद्यनभिलाषी प्रब्रूयात् इति भावः ।

अयमत्र सङ्ग्रहः *ब्रह्मविदाप्नोति परम्* इति ब्राह्मणेन ब्रह्मवेदनस्य परमपुरुषार्थप्राप्त्युपायत्वं उक्त्वा किंलक्षणकं ब्रह्म ? कीदृशं वेदनम् ? कः परमपुरुषार्थः ? इत्यपेक्षायां तत्र त्रयमपि *सत्यम् ज्ञानम्* इत्यादिना सङ्ग्रहेण उपपाद्य, पुनः विस्तरेण उपपादयितुं *तस्माद्वा एतस्मादात्मनः आकाशः स्संभूतः* इत्यादिना जगदुपादानत्वं प्रतिपाद्य *स वा एष पुरुषोऽन्नरसमयः* इत्यादिना स्थूलारुन्धतीन्यायेन अन्नमय-प्राणमय-मनोमय-विज्ञानमयक्रमेण सर्वान्तरत्वम् आनन्दमयत्वं च प्रदर्श्य, *सोऽकामयत* इत्यादिना तस्यैव उपादानभूतस्य

आत्मनः निमित्तत्वम् उक्त्वा, *तत्सृष्ट्वा* इत्यादिना सृष्टपदार्थेषु जीवद्वारा अनुप्रवेशं तत्तन्नामरूपभाक्त्वं, *निरुक्तं चानिरुक्तं च* इत्यादिना मिश्रस्य कारणत्वेऽपि चिदचिद्धर्म-व्यवस्थां च अभिधाय चिदचिन्मिश्रत्वेऽपि प्रधानेन ब्रह्मणा व्यपदेश्यत्वम् उद्दिश्य तदितरस्य कारणत्वाभावप्रदर्शनाय *असद्वा इदम्* इत्यादिना अभिन्ननिमित्तोपादानस्य ब्रह्मणः सहकारिनैरपेक्ष्यम् आनन्दस्वरूपत्वं च उक्त्वा पूर्वं *परमाप्नोति कामान् अश्नुते* इत्युक्तम् अर्थं *रसं ह्येवायं लब्ध्वा* इत्यनेन विवृत्य *को ह्येव* इत्यादिना सर्गहेतोः तस्यैव स्थितिहेतुत्वं मोक्षहेतुत्वं च उक्त्वा *यदा हि* इत्यादिना वेदननिरन्तरस्मृतिरूपत्वेन विशेष्य *भीषास्मात्* इत्यादिना नियन्तृत्वम् आवेद्य *सैषा आनन्दस्य* इत्यादिना आनन्दमयत्वं प्रपञ्चयित्वा *स यश्चायम्* इति उपासनस्थानविकल्पं विधाय *अस्माल्लोकात्* इत्यादिना लोकान्तरे मुक्तस्य ब्रह्मप्राप्तिं सर्वतः अभयम् उक्त्वा आनन्दतारतम्याभावं च दर्शयामास दयावती श्रुतिः इति निरवद्यम् ।।

**।। इति आनन्दवल्लीभाष्यम् ।।**

**प्र. - यतो वाचः** इति । वाङ्मनसी आनन्दस्य इयत्तालक्षणं पारं गन्तुं प्रवृत्ते तदप्राप्यैव निवृत्ते भवतः । तादृशाऽऽनन्दगुणकब्रह्मोपासनेन सर्वक्लेशभयात्यन्तिकनिवृत्तिः भवति इत्यर्थः । तदेव उपपादयति । **एतम्** इति । स्वर्गादिहेतुभूतं सुकृतं न अकार्षम् । नरकादिहेतुभूतं दुष्कृतम् अकार्षम् इति ईदृशी चिन्ता **एतं** ब्रह्मविदं न बाधते । स्वर्गादिलोकेषु इच्छायाः अभावात् । [1]ब्रह्मज्ञानाग्निदग्धपापतया[1] नरकादिभयस्यापि अभावात् । एतादृशं ब्रह्मविद्याप्रयुक्तमाहात्म्यमपि ध्येयम् इत्याह - **स यः** इति । **एते** - एताभ्यां पुण्यपापाभ्याम् आत्मानं **स्पृणुते** - रक्षति इत्यर्थः । पुण्यपापफलानुभवो नास्तीति उक्तं भवति । **उभे** इति । पुनर्वचनं पुण्यपाप-[2]विधूनन[2]सातत्यतात्पर्यद्योतनाय, अनुवाकसमाप्तिद्योतनाय च । **इत्युपनिषत्** इति । इत्थं [3]परमरहस्यरूपोपदेशयोग्यायैव वक्तव्यम्[3] इति भावः ।

**[आनन्दमयाधिकरणविचारः]**

इदञ्च प्रकरणं समन्वयाध्याये प्रथमपादे चिन्तितम् । *तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तरात्मा आनन्दमयः* इति श्रुतः आनन्दमयः जीवः एव । *नित्यं वृद्धशरादिभ्यः* (पा.सू.४-३-१४४) इति वृद्धादानन्दात् विकारार्थे मयट् प्रत्ययस्य [4]विधानेन[4] अविकारे

---

1. ब्रह्मज्ञानदग्ध - अ,क,ख,च । 2. विधूननध्यान - ग,घ ।
3. परमरहस्योपदेशः तादृशोपदेशयोग्यायैव वक्तव्यः - अ,क,ख,च । 4. विधाने - अ,क,ख ।

परमात्मनि मयट्प्रत्ययार्थासम्भवात्, शारीरः इति शरीरसम्बन्धश्रवणात्, *अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाः मे शुद्ध्यन्ताम्* इति आनन्दमयस्य शोध्यत्वश्रवणात् । नित्यशुद्धस्य परमात्मनः शोध्यत्वासम्भवात्, आनन्दमयः जीवः एव इति प्राप्ते उच्यते *आनन्दमयोऽभ्यासात्* (ब्र.सू.१-१-१३) । आनन्दमयः परमात्मा । कुतः ? अभ्यासात्, निरतिशयदशाशिरस्कतया, *ते ये शतम्, ते ये शतम्* इत्यभ्यस्यमानस्य अपरिच्छिन्नानन्दस्य परिमितसुखलवभाजि जीवे असम्भवात् । *विकारशब्दान्नेति चेन्न प्राचुर्यात्* (ब्र.सू.१-१-१४) । विकारवाचिमयट्प्रत्ययश्रवणात् आनन्दमयः जीवः एव इति चेत्, नात्र [1]विकारवाची, मयट् प्रत्ययः[1], *मयड्वैतयोर्भाषायामभयाच्छादनयोः* (पा.सू.४-३-१४३), इति पूर्वसूत्रात्, *नित्यं वृद्धशरादिभ्यः* (पा.सू.४-३-१४४) इत्यत्र भाषायाम् इत्यनुवृत्तेः विकारावयवयोः मयट्प्रत्ययस्य भाषाविषयत्वेन छन्दसि विकारार्थे मयटोऽसम्भवात् । *यस्य पर्णमयी* (तै.सं.३-५-७) *इत्यादौ तु, द्व्यचश्छन्दसि* (पा.सू.४-३-१५०) इति विधानबलात् उपपद्यते । प्रकृते तु आनन्दपदस्य द्व्यच्त्वाभावेन न मयट्प्रत्ययस्य सम्भवः । अतः आनन्दमयः इत्यत्र मयट्प्रत्ययः, *तत्प्रकृतवचने मयट्* (पा.सू.५-४-२२) इति सूत्रविहितः प्राचुर्यार्थ मयट्प्रत्ययः एव । अतश्च आनन्दप्रचुरत्वं च परमात्मनः सम्भवति इति परमात्मा एव आनन्दमयः ।

ननु, *ब्राह्मणप्रचुरो ग्रामः* इत्युक्ते तस्मिन् ग्रामे अब्राह्मणानामपि अल्पानां सत्त्वं प्रतीयते । एवम् इहापि ब्रह्मणः आनन्दप्राचुर्ये कथिते अनानन्दस्यापि लेशतः सत्त्वं प्रतीयते इति दुःखलेशशून्ये परमात्मनि आनन्दप्राचुर्योक्तिरपि न [2]सङ्गच्छते[2] इति चेत् मैवम् । *प्रचुरप्रकाशः सविता* इत्यत्र सवितुः प्रकाशप्राचुर्ये कथितेऽपि तद्विरोधितमोऽल्पत्वस्य तत्र अप्रतीतेः । न हि सवितरि तमोलेशस्यापि सम्भावना अस्ति । अतः तत्र यथा सवितरि प्रकाशप्राचुर्यं व्यधिकरणचन्द्रादिगतप्रकाशाल्पत्वापेक्षम्, न तु समानाधिकरणादित्यगततमोऽल्पत्वापेक्षम्, एवं ब्रह्मणि आनन्दप्राचुर्यमपि व्यधिकरण-जीवगतानन्दाल्पत्वापेक्षम् एव । न तु समानाधिकरणब्रह्मगतस्वविजातीयदुःखाल्पत्वापेक्षम् । अतः ब्रह्मणि आनन्दप्राचुर्ये नानुपपत्तिः ।

*तद्धेतुव्यपदेशाच्च* (ब्र.सू.१-१-५) । *एष ह्येवानन्दयाति* इति आनन्दमयस्य जीवानन्दयितृत्वं व्यपदिश्यते । अतः आनन्दयितव्यात् जीवानन्दयिता अन्यः एव । *मान्त्रवर्णिकमेव च गीयते* (ब्र.सू.१-१-१६) । *सत्यं ज्ञानमनन्तं ब्रह्म* इति मन्त्रवर्णोदितं ब्रह्मैव, *तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः* इत्यादिना आकाशादिकरणत्वेन आनन्दमयत्वेन च गीयते । न च सत्यज्ञानत्वादिकं सविकारस्य संकुचितज्ञानस्य जीवस्य सम्भवति ।

---

1. विकारवाची - अ,ग,घ । 2. सम्भवति - ग,घ ।

ननु परिशुद्धस्वरूपस्य मन्त्रवर्णोदितसत्यज्ञानत्वादिकं सम्भवति इति चेत् तत्राह - *नेतरोऽनुपपत्तेः* (ब्र.सू.१-१-१७) । **इतरः** मुक्तोऽपि जीवः नात्र प्रतिपाद्यः । **अनुपपत्तेः** । निरुपाधिकविपश्चित्त्व-सकलजगत्कारणत्व-भयाभयहेतुत्वादीनां प्रकरणप्रतिपादितानां धर्माणां परमात्मव्यतिरिक्ते अनुपपत्तेः । *भेदव्यपदेशाच्च* (ब्र.सू.१-१-१८) । *तस्माद्वा एतस्मात् विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः* इति [1]विज्ञानमय[1]शब्दितबद्धमुक्तात्मक-सकलजीवभेदव्यपदेशाच्च न मुक्तात्मा इह प्रतिपाद्यः । *कामाच्च नानुमानापेक्षा* (ब्र.सू.१-१-१९) । *सोऽकामयत बहुस्यां प्रजायेय* इति कामनामात्रात् एव आनुमानिकप्रधाननिरपेक्ष-जगत्स्रष्टृत्वप्रतीतेः न जीवः आनन्दमयः । *अस्मिन्नस्य च तद्योगं शास्ति* (ब्र.सू.१-१-२०) । अस्मिन् आनन्दमये लब्धे सति अस्य जीवस्य आनन्दयोगं *रसँ ह्येवायं लब्ध्वा आनन्दी भवति* इति शास्त्रं शास्ति । अतः जीवानन्दहेतुभूतलाभकर्मभूतस्य ब्रह्मणः न जीवाभेदः उपपद्यते ।

**[पुच्छब्रह्मवादविमर्शः]**

ननु न आनन्दमयस्य ब्रह्मत्वम् उपपद्यते । *ब्रह्म पुच्छं प्रतिष्ठा* इति तदाधारभूततया [2]तत्पुच्छत्वेन[2] निर्दिष्टस्य एव ब्रह्मत्वेन अभिधानात् । आनन्दमयस्य एव प्रधानप्रतिपाद्यत्वे, *असन्नेव स भवति* इति तत्पर्यायोक्तश्लोकः अपि आनन्दमयविषयः एव स्यात् । न च तस्मिन् श्लोके आनन्दमयस्य निर्देशः दृष्टः । तत्र ब्रह्मशब्दस्यैव श्रवणात् । अतः पुच्छमेव ब्रह्म न आनन्दमयः इति चेन्न। आनन्दमयस्यैव ब्रह्मणः कयाचन भेदविवक्षया अवयवावयविभावेन निर्देशोपपत्तेः । इतरथा, *आनन्द आत्मा* इति मध्यमावयवत्वेन निर्दिष्टस्य आनन्दस्यापि पुच्छत्वेन निर्दिष्ट[3]ब्रह्मणः अपि[3] भेदः प्रसज्येत । मध्यमावयवपुच्छयोः भेदावश्यंभावात् । न च इष्टापत्तिः । ब्रह्मणः अनानन्दरूपत्वप्रसङ्गात् । यदि च कयाचन भेदविवक्षया एकस्यैव ब्रह्मणः पुच्छत्वमध्यमाङ्गत्वनिरूपणम्, तर्हि अवयवावयविभावभेदकल्पनमपि अभेदेऽपि सङ्गच्छते इति न आनन्दमयब्रह्मणोः भेदप्रसक्तिः । न च आनन्दमयस्य ब्रह्मत्वे, *आनन्दमया मे शुद्ध्यन्ताम्* इति शोध्यत्वम् अनुपपन्नम् इति वाच्यम् । शोध्यत्वस्य प्रसाद्यत्वरूपतया भक्तिप्रपत्तिलक्षणोपायवशेन शान्तकोपत्वलक्षणप्रसादविशिष्टत्वरूपेण साध्यत्वसम्भवेन शोध्यत्वस्यापि सम्भवात् । आनन्दमयस्य अब्रह्मत्वे च, *आनन्दमयोऽभ्यासात्* (ब्र.सू.१-१-१३) इत्यादि सूत्रगणस्य असम्बद्धप्रलापत्वं स्यात् इति आस्तां तावत् ।

**[आनन्दाद्यधिकरणविचारः]**

तथा गुणोपसंहारपादे यथा विद्यान्तरे श्रुतानां संयद्वामत्वादीनां गुणानां न विद्यान्तरे उपसंहारः, तथा सत्यत्वज्ञानत्वादीनामपि विद्याविशेषप्रकरणश्रुतानां न विद्यान्तरे

---

1. विज्ञान - अ,क,ख । 2. तत्पुच्छत्वेन च - ग,घ । 3. ब्रह्मणः - ग,घ ।

उपसंहारः, प्रापकाभावात् इति पूर्वपक्षे प्राप्ते उच्यते - *आनन्दादयः प्रधानस्य* (ब्र.सू.३-३-११) । प्रधानस्य गुणिनः ब्रह्मणः सर्वेषु उपासनेषु अभेदात् गुण्यपृथग्भूतानां आनन्दादीनां गुणानामपि सर्वेषु उपासनेषु उपसंहारः । ननु एवं प्रियशिरस्त्वादीनामपि सर्वेषु उपासनेषु उपसंहारः प्राप्नोति । तत्राह - *प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे* (ब्र.सू.३-३-१२) । प्रियशिरस्त्वादीनां ब्रह्मणः बुद्ध्युपारोहाय कल्पितत्त्वेन ब्रह्मगुणत्वाभावात् न उपासनान्तरे तस्य प्राप्तिः । यदि हि ब्रह्मणः शिरःपक्षपुच्छाद्यवयवभेदः स्यात्, तर्हि ब्रह्मणः मध्यप्रदेशे उपचयः, शिरःप्रदेशे अपचयः, इत्यादिकं पक्षिवत् [1]प्रसज्यते[1] । न च अनन्तस्य ब्रह्मणः तत् उपपद्यते । ननु प्रियशिरस्त्वादीनाम् अब्रह्मगुणतया सर्वविद्योपसंहाराप्राप्तौ अपि संयद्वामत्वादीनां ब्रह्मगुणानाम् सर्वविद्यासु उपसंहारः प्राप्नोति । ब्रह्मगुणानाम् आनन्त्येन उपसंहारः अशक्यश्च । तत्राह - *इतरे त्वर्थसामान्यात्* (ब्र.सू.३-३-१३) इतरे तु आनन्दादयः अर्थसामान्यात् प्रयोजनसामान्यात् ब्रह्मस्वरूपावगतिलक्षणप्रयोजनैक्यात् सर्वासु परविद्यासु उपसंहर्तव्याः । ततश्च स्वरूपनिरूपकाः धर्माः सत्यत्व-ज्ञानत्व-आनन्दत्वादयः सर्वासु परविद्यासु उपसंहर्तव्याः निरूपितस्वरूपधर्माः सत्यकामत्वादयः न सर्वासु परविद्यासु उपसंहर्तव्याः । ननु प्रियशिरस्त्वादीनां वस्तुतः ब्रह्मधर्मत्वाभावे तदुपदेशः किमर्थम् ? इत्यत्राह - *आध्यानाय प्रयोजनाभावात्* (ब्र.सू.३-३-१४) आध्यानाय बुद्ध्यारोहणाय प्रियशिरस्त्वादिः उपदिश्यते । प्रयोजनान्तरस्य अभावात् । *आत्मशब्दाच्च* (ब्र.सू.३-३-१५) *अन्योऽन्तर आत्माऽऽनन्दमयः* इति आनन्दमयस्य आत्मशब्देन निर्देशात्, आत्मनश्च शिरःपक्षपुच्छाद्यसंभवात्, प्रियशिरस्त्वादिकं बुद्ध्यारोहाय कल्पितम् इत्येव अवसीयते । ननु, *अन्योऽन्तर आत्मा प्राणमयः* इति आत्मशब्दस्य अनात्मसु अपि पूर्वं प्रत्युक्तत्वात्, *अन्योऽन्तर आत्मा* आनन्दमयः इति आत्मशब्दस्य आत्मविषयत्वं कथं निश्चीयते ? तत्राह *आत्मगृहीतिरितरवदुत्तरात्* (ब्र.सू.३-३-१६) । *अन्योऽन्तर आत्माऽऽनन्दमयः* इति आत्मशब्देन परमात्मनः एव ग्रहणम् । इतरवत् यथा इतरत्र, *आत्मा वा इदमेक एवाग्र आसीत् । स ईक्षत लोकान्नु सृजा* (ऐ.उ.आत्मा.१) इत्यादिषु आत्मशब्देन परमात्मनः एव ग्रहणं तद्वत् । कुत एतत् ? उत्तरात् । *सोऽकामयत बहु स्यां प्रजायेय* इत्यानन्दमयविषयात् उत्तरात् वाक्यात् । *अन्वयादिति चेत्, स्यादवधारणात्* (ब्र.सू.३-३-१७) । पूर्वत्र प्राणमयादिषु अनात्मसु आत्मशब्दान्वयदर्शनात् न उत्तरात् निश्चेतुं शक्यते इति चेत्, स्यात् अवधारणात् । स्यादेव निश्चयः । कुतः ? अवधारणात् । पूर्वत्रापि, *तस्माद्वा एतस्मात् आत्मनः आकाशः सम्भूतः* इति परमात्मनः एव बुद्ध्या अवधारितत्त्वात् । अन्नमयात् अन्तरे प्राणमये

---

1. प्रसज्येत - क,ख,च ।

प्रथमं परमात्मबुद्धिः अवतीर्णा। तदनन्तरञ्च प्राणमयात् अन्तरे मनोमये, ततो विज्ञानमये, ततः आनन्दमये प्रक्रान्ता परमात्मबुद्धिः । तदन्तराभावात्, तदुत्तराञ्च *सोऽकामयत* इति वाक्यात्, प्रतिष्ठिता इत्युपक्रमेऽपि अपरमात्मनि परमात्मबुद्ध्या आत्मशब्दान्वयः इति निरवद्यम् । न च आनन्दमयेऽपि परमात्मबुद्ध्या आत्मशब्द[1]प्रयोगः[1] इति शंक्यम् । तद्वदत्र आत्मान्तरानुपदेशात् बाधकाभावात् ।।

**[स्वरूपनिरूपक-निरूपितस्वरूपगतधर्मव्यवस्थाविचारः]**

ननु इतरव्यावृत्तब्रह्मस्वरूपप्रतिपत्तिकाले सत्यत्वज्ञानत्वादीनां न प्रतीयमानत्वनियमः सम्भवति। अस्थूलत्वादिना वा अन्तर्यामित्व-जगत्कारणत्व-लक्ष्मीपतित्व-निरुपाधिकसर्वज्ञत्वादिभिः वा इतरव्यावृत्तब्रह्मस्वरूप[2]प्रतिपत्तेः[2] सम्भवात् । अतः आनन्दादीनां सत्यकामत्वसंयद्वामत्वादीनां च वैषम्यं दुर्विवेचम् इति चेत् ;

अत्र केचित् - धर्माः हि द्विविधाः - विशेष्यस्वरूपनिष्ठाः, सविशेषणस्वरूपनिष्ठाश्च । ये विशेष्यस्वरूपनिष्ठाः आनन्दत्वादयः ते सर्वानुयायिनः । इतरे तु व्यवस्थिताः । जगत्कारणत्वस्य प्रकृतिपुरुषकालविशिष्टलक्षणतया तदुपयुक्तसार्वज्ञ्यादेरपि तथात्वात् न सर्वानुयायित्वम् । अयं भावः - केचित् धर्माः स्वरूपप्रयुक्ताः [3]सततैकरूपाः[3] निर्विकाराः । अत एव,

*यञ्च कालान्तरेणापि नान्यसंज्ञामुपैति वै ।*
*परिणामादिसम्भूतां तद्वस्तु नृप तञ्च किम् ?*
*अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते* (वि.पु.२-१४-२४)

इत्यादिभिः उपपादिताः परमार्थशब्दवाच्याः सर्वज्ञत्वसर्वनियन्तृत्वादिविलक्षणाः ते सर्वविद्यानुयायिनः । संयद्वामत्वसर्वज्ञत्वादयस्तु [4]धर्माः[4] स्वरूपव्यतिरिक्त-सततैकरूपत्व-शून्य-प्रकृतितत्कार्यजीवकालेश्वरधर्मभूतज्ञानघटिताः । न ते एकरूपाः । ईश्वरधर्मभूतज्ञानस्यापि नानाविध[5]संकल्पत्वादि[5]लक्षणविकारशालितया ईश्वर तत्क्रियाणामपि अनेकरूपत्वात् तद्घटितधर्माणामपि नैकरूपत्वम् । अतः एव न परमार्थशब्दितत्वञ्च । अतः तेषां न सर्वानुयायित्वम् । ज्ञानत्वानन्तत्वसत्यत्वादीनां तु न तथा इति वैषम्यमाहुः ।

अन्ये तु स्वरूपप्रतीत्यन्तर्गताः धर्माः सर्वविद्यानुयायिनः । स्वरूपप्रतीत्यन्तर्गतत्वं स्वरूपान्तर्गतत्वमेव । ज्ञानत्वाऽऽनन्दत्वादयस्तु स्वरूपाभिन्नधर्माः । अतः एव परैरपि, आनन्दो विषयानुभवः नित्यत्वं च इति सन्ति धर्माः । ते च अपृथक्त्वेऽपि पृथगिव अवभासन्ते

---

1. प्रयोगोस्तु - ग,घ । 2. प्रतीतेः - क,ख,च । 3. सततैकरूपाः - घ । 4. धर्माः धर्मि - ग,घ ।
5. सङ्कल्पत्वादि - अ,क,ख ।

इत्युक्तम् । अतश्च ये स्वरूपाभिन्नाः धर्माः, ते सर्वविद्यानुयायिनः । सर्वज्ञत्व [1]सर्व[1]कर्तृत्वादयस्तु धर्मभूतज्ञानक्रियादिरूपाः धर्मिस्वरूपभिन्नाः इति न सर्वानुयायिनः [इत्याहुः] ।

अपरे तु स्वरूपोपदेशपरवाक्यप्रतिपन्नानां सर्वविद्यानुयायित्वम्, न उपासनार्थोपदिष्टानाम् । न च, *यः सर्वज्ञः सर्ववित्* (मुं.उ.२-२-७) इत्यादिषु स्वरूपोपदेशपरवाक्य-प्रतिपन्नतया सार्वज्ञ्यादीनामपि सर्वविद्यानुयायित्वप्रसङ्गः इति वाच्यम् । तस्यापि उपासनविध्यश्रवणेऽपि तत्परत्वात् । अतः एव, *सम्भृतिद्युव्याप्त्यपि चातः* (ब्र.सू.३-३-२३) इत्यधिकरणे अनारभ्य श्रुतानाम् अश्रुतोपासनविधीनामपि उपासनार्थत्वं सिद्धवत्कृत्य एव, किं सर्वविद्यानिवेशः ? उत अल्पायतनव्यतिरिक्तासु ? इति चिन्ता प्रवर्तिता । न चैवम् उपासनार्थत्वे सार्वज्ञ्यादीनां अपारमार्थ्यप्रसङ्गः इति वाच्यम् । बाधकाभावेन सत्यत्वात् । अतः एव, *ध्यानार्थेऽपि तद्गुणोपदेशे तद्गुणकः ईश्वरः सिद्ध्यति* इति व्यतिहारसूत्रे शंकरभाष्येऽपि उक्तम् । इतरथा परमते सत्यकामत्वादीनां वागादिपादत्वादिवत् व्यावहारिकसत्यत्वस्यापि अभावप्रसङ्गात् इत्याहुः ।।

**।। इति आनन्दवल्लीप्रकाशिका ।।**

**कू.भा. - यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चनेति** पूर्वमेव व्याख्यातः अयम् ।

कश्चिदाह वाङ्मनसोः निवृत्तिवचनेन निर्विशेषत्वं **प्रतिपाद्यते इति** । तदसंगतम् । **यतो वाचो निवर्तन्ते** इति वाक्यं यदि वाङ्मनसोः ब्रह्मणः निवृत्तिम् अधीते, ततः निर्विशेषतां ब्रह्मणः गमयितुं न शक्नुयात् । किन्तु वाङ्मनसोः तत्र अप्रमाणतां वदेत् । तथा च निरुपाख्यत्वमेव । *ब्रह्मविदाप्नोति परम्* (तै.उ.आन.१) इत्यारभ्य ब्रह्मणः परमप्राप्यत्वं वेद्यत्वं निरतिशयानन्त्यं विपश्चित्त्वं जगत्कारणत्वं आनन्दैकतानत्वं तदितरान् प्रति आनन्दयितृत्वं आत्मवत्वानात्मवत्वहेतुज्ञानविषयत्वं कामादेव विचित्रचिदचिदात्मकस्य सर्वस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृततदात्मकत्वं ज्ञानगुणितोत्तरक्रमेण चतुर्मुखात् उपरि निरतिशयानन्द-सर्वप्रकारानन्दमयत्वम् । अन्यच्च; अनेकमङ्गळं प्रतिपाद्य अथ वाङ्मनसोः ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणं ब्रह्म इत्युच्यते इति भ्रान्तजल्पितम् ।

**किञ्च यतो वाचो निवर्तन्ते** इति यच्छब्दनिर्दिष्टं **आनन्दं ब्रह्मणो विद्वान्** इति आनन्दशब्देन निर्दिश्य तस्य ब्रह्मसम्बन्धित्वं, ब्रह्मणः इति व्यतिरेकनिर्देशेन प्रतिपाद्य,

---

1. सर्ग - ग ।

तदेव वाङ्मनसागोचरं *विद्वान् न बिभेति* इति पुनरपि तद्वेदनम् अभिदधत् वाक्यं जरद्गवादिवाक्यवत् अनर्थकं च आम्नातं स्यात् ।

तर्हि कोऽर्थः ? उक्तैः हेतुभिः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्य सातिशयेयत्तां वक्तुम् उपक्रम्य तस्य इयत्तायाः अभावादेव वाङ्मनसोः तत्र निवृत्तिः उच्यते **यतो वाचः** इति । एवम् इयत्तारहितब्रह्मानन्दविद्वान् कुतश्चन न बिभेति इति सर्वसामञ्जस्यम् ।

किञ्च अस्य मान्त्रवर्णिकस्य विपश्चितः *सोऽकामयत* (तै.उ.आन.६) इति स्वसंकल्पाप्त-जगज्जन्मस्थिति-जगदन्तरात्मत्वादेः उक्तत्वात् मुक्तान्यस्वरूपान्यत्वं सुस्पष्टमेव ।

साक्षिश्लोकगतं **न बिभेति कुतश्चनेति** इत्यंशं व्याचष्टे **एतं ह वाव न तपति । एतं** - आनन्दमये लब्धप्रतिष्ठम् । **न तपति** वक्ष्यमाणम् । **वाव** अवधारणे । ह इति प्रसिद्धौ । *यथा तूलमग्नौ* (छां.उ.५-२४-३) *पुष्करपलाश आपः* (छां.उ.४-१४-३) *उत्तरपूर्वाघयोरश्लेषविनाशौ* (ब्र.सू.४१-१३) । मुक्तस्य कुर्यान्नकुर्यात् इत्युभयविद्यानुशासनाविषयत्वात् परमात्मनिमित्तमेव भयं नास्ति । अतः अन्यस्मात् परस्परवैरादिकृतं भयं च नास्ति । सूरीणां अविद्याद्यभावात् *कामान्नी कामरूपी* (तै.उ.भृ.१०) इति वक्ष्यति । *अथ तस्य भयं भवति* (तै.उ.आन.७) इति पूर्वं प्रस्तुतं भयमपि अत्रैव व्याख्यातम् । किमहं **साधु नाकरवं किमहं पापमकरवम् इति** । किं वा निषिद्धम् अकरवम् इति भयम् । न तपति इति पूर्वेण सम्बन्धः । *अवश्यमनुभोक्तव्यम्* (ब्र.वै.प्र.खं.२६-७०) इति अकृत प्रायश्चित्ताब्रह्मज्ञोभयविषयम् । अतः अनादिसञ्चितपापानुभवभयं नास्ति ।

एवं परब्रह्ममाहात्म्यकृतं स्वमाहात्म्यमपि ध्येयम् इत्याह **स य एवं विद्वानेते आत्मानं स्पृणुते ।** य एवं विद्वान् **स एते** एताभ्यां **आत्मानं स्पृणुते** रक्षति । पुण्यपापफलानुभवभयात् रक्ष्यति इत्युक्तेः फलानुभवःनास्ति इत्युक्तं भवति । **उभे ह्येवैष एते आत्मानं स्पृणुते, य एवं वेद** - पुनर्वचनं पुण्यपापविधूनन-ध्यानसातत्य तात्पर्यद्योतनाय निस्संशयत्वाय च । पुण्यस्यापि निरतिशयस्य विधूननज्ञापनाय च, अनुवाकसमाप्तिद्योतनाय च । **इत्युपनिषत्** - इत्थम् षट्कर्णपरमरहस्योपदेशरहितताद्दशाय न वक्तव्यः । यथाह -

*इदं ते नातपस्काय नाभक्ताय कदाचन ।*
*न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ।।*
*य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।*
*भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ।।*

*न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।*
*भविता न च मे तस्मादन्यः प्रियतरो भुवि ।।* (भ.गी.१८-६७-६९) इति ।

**।। इति आनन्दवल्ली कूरनारायणभाष्यम् ।।**

**आ.भा. - यतः** यस्मात् आनन्दमयात् **वाचः** असंस्कृतं मनश्च **निवर्तन्ते** - प्रत्यागच्छन्ति । किं कृत्वा इत्यत्राह - **अप्राप्य** इयत्तालक्षणं पारम् अलब्ध्वा, पारं गन्तुं कृतव्यापाराः अपि वाचः मनश्च इष्टसिद्धिम् अनिर्वर्त्य एव निवृत्तिं यान्ति इत्यर्थः । इयत्तावतः एव इयत्तां गन्तुं पारयेदपि कश्चित् न अनियत्ता अस्य इति भावः । तादृशस्य **ब्रह्मणः** आनन्दमयस्य आनन्दं **विद्वान्** - निरतिशयानन्दं ब्रह्म समुपासीनः **न कुतश्चन बिभेति** - सकलभयम् अतीतः भवति । सर्वबन्धविनिर्मुक्तिः अस्य भवति इत्यर्थः ।

**ह वाव** इति निपातद्वयम् अवतारयति वाक्यगतम् अर्थम् । **एतं यः** आनन्दमयम् एवं गुणविशिष्टं जानाति तादृशम् उपासकम् । **न तपति** - न सन्तापयति । किं न तपति इत्यत्राह - **किमहम्** इत्यादि । **किम्** - कस्मात् हेतोः, **अहं साधु** - शोभनं स्वर्गादि-साधनभूतं श्रुतिस्मृतिप्रोक्तं कर्म **न अकरवम्** - न अकार्षम् इति चिन्ता न उद्वेजयति । किञ्च **किं** - कस्मात् हेतोः, **अहं पापम्** - नरकसाधनं श्रुतिस्मृतिप्रतिषिद्धं कर्म **अकरवम्** - अकार्षम् इति चिन्ता च न उद्वेजयति । स्वर्गादिप्रेप्सावन्तमेव साधुकर्माकरणचिन्ता, असाधुकर्मकरणचिन्ता च दुःखाकरोति न विद्वांसं स्वर्गादिप्रेप्सायाः तस्याभावात् अपहतपाप्मत्वेन नरकमूलपापस्य अभावाच्च । एते साध्वसाधुनी कर्मणी **एवम्** एतयोः आचरणे अनाचरणे वा न मे अर्थः अनर्थः वा इति **विद्वान्** - जानन् **आत्मानं स्पृणुते** रक्षति । **य एवम्** एतयोः आचरणम् अनाचरणं वा न अर्थाय न वा अनर्थाय मे भावि इति **वेद** - जानाति । एषः एव हि विद्वान् **आत्मानं स्पृणुते** परिरक्षति । **इति** एवं स्वरूपा **उपनिषत्** सर्वासु विद्यासु परमरहस्यम् अस्तीति शेषः । परमरहस्यम् एतत् सर्वस्मै न उपदेष्टव्यं, किन्तु योग्याय एव शिष्याय इति भावः । पुनरुक्तिः उक्तार्थस्य दृढीकरणार्था ।।

**।। इति आनन्दवल्ली आनन्दभाष्यम् ।।**

**सु. - यतः** - निरतिशयानन्दात्, **वाचः** - **अप्राप्य** - पारं इयत्तालक्षणं **मनसा सह निवर्तन्ते** - तादृशं निरतिशयं ब्रह्मानन्दं **विद्वान्** निरतिशयानन्दब्रह्मोपासकः

इत्येतत् । **न बिभेति कुतश्चन** - सकलभयातीतः भवति इत्येतत् । अनेन अभयं प्रतिष्ठां विन्दते । अथ सः अभयं गतः भवति इत्युक्तः अर्थः व्याख्यातः भवति । **अहं किं साधु न अकरवम्, अहं किम् इति पापम् अकरवम्, इति** सुकृताकरणदुष्कृतकरणचिन्ते एतं विद्वांसं न तपतः । तौ हि तापौ स्वर्गम् अभिलषतः नरकपातात् भीतस्य च भवतः । अकामकामस्य विद्याविहतपाप्मनः अस्य न तयोः प्रसङ्गः । **एते** - साध्वसाधु च, **य एवं विद्वान्** - अनाचरितम् आचरितं वा न अर्थाय न अनर्थाय इति च जानन् **आत्मानं स्पृणुते** - रक्षति । **य एवम् उभे एते वेद, एष हि आत्मानं स्पृणुते** । पुनरुक्तिः इयम् उक्तार्थदार्ढ्याय ।।

**।। इति आनन्दवल्ली सुबोधिनी ।।**

**सह नाववतु । सह नौ भुनक्तु । सहवीर्यं करवावहै । तेजस्विनावधीतमस्तु । मा विद्विषावहै । ओं शान्तिः शान्तिः शान्तिः ।।**

**आ.भा.** अध्यायान्ते समाचरणीयः शान्तिपाठः । व्याख्या तु पूर्ववत् । त्रिपाठः शान्तिशब्दस्य तापत्रयनिवृत्तिसूचकः । ओं शब्दोच्चारणम् अध्यायान्ते परब्रह्मस्मरणार्थम् ।।

**।। इति आनन्दवल्ली आनन्दभाष्यम् ।।**

* * *

# अथ भृगुवल्ली[1]

[शान्तिपाठः]

**सह नाववतु । सहनौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ओं शान्तिः शान्तिः शान्तिः ।।**

**प्र.दी.** पूर्ववदर्थः ।।

**आ.भा.** सह नाववतु इति शान्तिमन्त्रः पूर्वं व्याख्यातः एव ।।

## प्रथमोऽनुवाकः

[ब्रह्मजिज्ञासा]

**भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तँ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ।। १ ।।**

।। इति प्रथमोनुवाकः ।।

**प्र.दी.** वरुणपुत्रः भृगुः पितरं वरुणं जिज्ञास्यं परं ब्रह्म कीदृशम् इति प्रष्टुम् इच्छुः आचार्यभूतपितृसन्निधिं यथाविधि उपगतवान् इत्याह **भृगुर्वै वारुणिः** इति । **वारुणिः** वरुणस्य अपत्यं वारुणिः, **भृगुः** भृगुनामकपुत्रः, **पितरम्** जनकम्, **वरुणम्** - वरुणनामकम् आचार्यं, **उपससार -** ब्रह्मजिज्ञासार्थम् आचार्यसन्निधिं यथाविधि गतवान् । गत्वा प्रोवाच - **अधीहि भगवो ब्रह्मेति** । हे भगवः - भगवन् ! सर्वज्ञ ! आचार्य ! **ब्रह्म -** परब्रह्म, अधीहि अस्मदुपदेशाय परब्रह्म, **अधीहि**[2] - अध्ययनं कुरु । मदर्थं ब्रह्म स्मर । यद्वा माम् अध्यापय इति वा । परमात्मानं मां कथय इत्यर्थः । **तस्मा एतत्** इति । **तस्मै -** शिष्याय भृगवे, **एतत्** - वक्ष्यमाणम्, **अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति**[3] । एतदन्नप्राणादिकं **ब्रह्मेति**

---

१. **भृगुवल्ली -** पितुः सकाशात् भृगोः विद्याग्रहणात् इयं भृगुवल्ली इति कथ्यते ।
आरण्यके तावत् अयं शान्तिमन्त्रः न विद्यते । परन्तु अध्येतारः *सह नाववतु* इत्यादि शान्तिं पठन्ति । किन्तु व्याख्यानादिकं नास्ति । पूर्वं व्याख्याततत्वात् ।

२. **अधीहि -** अधिगमय मां ब्रह्म । अन्तर्भावितण्यर्थः एतिः । बहुलमन्यत्रापि संज्ञाछन्दसोः इति णिलुक् । इति भट्टभास्करभाष्ये ।

३. अन्नं शरीरं तदभ्यन्तरं प्राणमत्तारम् । उपलब्धिसाधनानि चक्षुः श्रोत्रं मनो वाचम् इत्येतानि ब्रह्मोपलब्धौ द्वाराणि उक्तवान् इति शाङ्करभाष्यम् ।

**प्रोवाच** प्रकर्षेण उक्तवान् । एतानि सर्वाणि ब्रह्म वा उत प्रत्येकम् एकैकम् अन्नादिकं ब्रह्म इति प्रोवाच । व्याकुलचित्तं शिष्यभूतपुत्रम् आलोक्य आह - **तँ होवाच** इति । **तं** - पुत्रं वरुणः उवाच **ह - ह** इति प्रसिद्धौ । किमिति - **यतो वा इमानि** इति । **यतो वा** यस्मात् वस्तुनः वा, **इमानि** परिदृश्यमानानि **भूतानि** स्थावरजङ्गमात्मकानि देवमनुष्यादीनि इत्यर्थः । **जायन्ते** - उत्पन्नानि भवन्ति । **जातानि** - भूतानि येन वस्तुना, **जीवन्ति** आत्मभूतेन येन जीवनवन्ति भवन्ति । **यत्प्रयन्ति** - मोक्षकाले यद्वस्तु उद्दिश्य सर्वभूतानि **प्रयन्ति** - गच्छन्ति । **अभिसंविशन्ति** इति । प्रळयकाले यद्वस्तुनि सर्वभूतानि अभितः प्रविशन्ति । *सम्* इति एकीकरणे । एकीकृततया प्रविशन्ति इत्यर्थः । **तत्** - वस्तु तत् जगत्कारणत्वेन प्रसिद्धं जिज्ञास्यं परं ब्रह्म इति **विजिज्ञासस्व** - विशेषेण जिज्ञासां कुरु । मम इदं प्राप्यं वस्तु इति मननं कुरु इत्यर्थः । **स तपो अतप्यत । सः** - भृगुः **तपः** ब्रह्मविद्यान्तरङ्गसाधनभूतं इन्द्रियनियमनलक्षणरूपं तपः, **अतप्यत** - कृतवान् इत्यर्थः । **स तपस्तप्त्वा । सः** - भृगुः इन्द्रियनिग्रहलक्षणरूपतपः ब्रह्मविद्यान्तरङ्गोपायसाधनम् इति ज्ञात्वा तपः कृत्वा ॥

**तै.भा.** उक्तां ब्रह्मविद्यां आख्यायिकामुखेन विशदयति **भृगुर्वै वारुणिः** इत्यादि । भृगुर्नाम ऋषिः, वरुणस्य ऋषेः अपत्यं **वारुणिः** *अत इञ्* (पा.सू.४-१-९५) इति इञ् प्रत्ययः । अनेन पितृत्वे सिद्धेऽपि चिरशुश्रूषणादिनिरपेक्षत्वद्योतनाय **पितरम्** इत्युक्तम् । यद्वा - पितरि ब्रह्मज्ञे विद्यमाने नान्यं ब्रह्मज्ञानाय उपसरेत् इत्युक्तम् । अतः एवाहुः

*देहकृन्मन्त्रविन्न स्यात् मतिसंस्कारकृत्परः ।*
*तौ चेन्नात्मविदौ स्यातां एभ्यस्त्वात्मविदात्मकृत् ॥ इति ।*

**उपससार** - *तद्विज्ञानार्थं सः गुरुमेवाभिगच्छेत्* (मुं.उ.१-२-१२) इति विधिपरतन्त्रतया उपसन्नः कथम् **उपससार** इत्यत्राह - **अधीहि** इति । हे **भगवो !** - भगवन् ! भगवत् शब्दस्य *मतुवसो रु संबुद्धौ छन्दसि* (पा.सू.८-३-१) इति रुत्वम् । **ब्रह्म** - सर्वतः परिबृढं वस्तु **अधीहि** - अधिगमय, माम् इति शेषः । इति **उपससार** इत्यन्वयः । **तस्मै** - उपसन्नाय भृगवे पुत्राय ब्रह्मजिज्ञासमानाय **अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्** इत्येतत् **प्रोवाच,** ब्रह्मत्वेन इति शेषः । यद्वा ब्रह्मज्ञानसाधनतया प्रथमम् उपदिदेश इत्यर्थः । शुद्धान्नैः प्राणादिभिश्च ब्रह्म ज्ञातव्यम् इति शिष्यधर्माः उपदिष्टाः । अथवा तस्मै ब्रह्मज्ञानाय तत्सिद्धये

**प्रोवाच** इत्यर्थः । *आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः* (छां.उ.७-२६-२) इति अन्नस्य ज्ञानहेतुत्वम् । *नायमात्मा प्रवचनेन लभ्यः* (मुं.उ.३-२-३) इति प्राणस्य, चक्षुः पुस्तकाद्यवलोकनाय, श्रवणाय श्रोत्रम् , धारणाय मनः, वाक् अभिमतप्रश्नादिकरणाय। **इति** शब्दः प्रकारवाची । तेन तल्लब्धिः विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः[१] इत्युक्तं साधनसप्तकं दर्शितम् । अनेन ब्रह्मज्ञानाय तपः कुरु इत्युक्तं भवति । *स तपोऽतप्यत* इति वक्ष्यमाणत्वात् । एवं विशेषज्ञानाय साधनम् उक्त्वा तस्य उपदेशं विना अनुपपत्तेः सङ्ग्रहेणोपदिशति - **तं ह** इत्यादिना । तं श्रुतज्ञानसाधनं पुत्रं पिता उवाच । **ह** इति वाक्यालङ्कारे ।

ननु अत्र भूतशब्देन किं प्राणिनः विवक्षिताः ? उत पूर्वानुवाकोक्तानि पञ्चभूतानि ? आहोस्वित् कार्यमात्राणि ? नाद्यः समस्तजगत्कारणत्वासिद्धेः । न द्वितीयः ; अन्नादिषु तत्कारणत्वसंभवायोगात्, जीवयितृत्वासिद्धेश्च । अतः एव न तृतीयः **इमानि** इत्यस्य अस्वारस्याच्च इति चेन्न । चराचरमात्रपरत्वेऽपि प्रकृते विरोधाभावात् । तन्न्यायेन कार्यमात्रकारणत्वसिद्धेश्च । यद्वा **इमानि -** प्राणमात्रसिद्धानि कार्याणि ; तेषां जीवसाधारण्येन स्थितिः एव कथ्यते । **यतः** इति हेतौ पञ्चमी । तेन अभिन्ननिमित्तोपादानसिद्धिः । **वै** इति योगिप्रसिद्धिः । **इमानि** इति प्रत्यक्षादिसिद्धत्वोक्तिः । **जायन्ते** प्रादुर्भवन्ति इति असत्कार्यवादनिरसनाय । *जनि प्रादुर्भावे* (धा.पा.११४९) इति हि धातुः । **येन** इति । **येन** इति कर्तरि तृतीया । जीवनमात्रे ब्रह्मैव हेतुः । जीवनविशेषास्तु तत्तत्कर्मजन्याः इति बोध्यम् । **जातानि** इत्यत्र भूतानि इत्यनुषज्यते । एवं **प्रयन्ति** इत्यत्रापि । **प्रयन्ति -** नश्यन्ति । भूतानि **यदभिसंविशन्ति -** संश्लिष्यन्ति । ब्रह्मणः अविभक्तनामरूपाणि भवन्ति इत्यर्थः । अनेन अत्र तत्र श्रुतिषु प्रयुक्तलयशब्दः व्याख्यातः । **तद्विजिज्ञासस्व । यत्** सर्वेषां भूतानाम् उत्पादकम् जीवकम् लयस्थानम् तत् किंरूपम् ? इति विचारय **तत् ब्रह्म -** तादृशं ब्रह्म इति मा ज्ञायताम् इति भावः ।

ननु इदं न सम्भवति, स्थितिकाले उत्पत्त्यभावात्, उत्पत्तिकाले स्थित्यभावात्, तत्काले लयाभावाच्च, इति चेन्न। तत्परिहाराय हि अत्र **इमानि, जातानि, प्रयन्ति** इति पदानि प्रयुक्तानि । तेन सहकारानन्तरम् उत्पत्तिः; उत्पत्त्यनन्तरं जीवनम् तदनन्तरकाले लयः इति व्यवस्था उक्ता । अनेन जन्मादीनां विरुद्धानां विशेषणानां भेदकत्वेन ब्रह्मभेदापत्त्या

---

१. *सम्भवान्निर्वचनाच्च* इति वाक्यशेषः । इदं वाक्यकारवचनम् इति श्रीभाष्ये लघुसिद्धान्ते भगवता भाष्यकृता निरूपितम् ।

न लयकारणत्वम् इति शङ्का निरस्ता । **स** इत्यादि । **सः** - एवम् उपदिष्टः भृगुः तद्विशेषज्ञानाय **तपोऽतप्यत** । चान्द्रायणादिकम् अकरोत् । यद्वा आलोचनम् अकरोत् । *तप आलोचने* इत्यस्मात् धातोः अस्प्रत्ययः । उभयोः अपि तत्साधनत्वात् । अनेन गुरोः सकाशात् श्रुतार्थस्य विशेषः तपोमननाभ्याम् अवगन्तव्यः इति ज्ञायते । **स तपस्तप्त्वा** अनुवादः तस्य दुर्लभत्वसूचनाय ।।

**प्र.** अथ लक्षणान्तरमुखेन ब्रह्म प्रतिपादयितुम्, ब्रह्मप्रतिपत्तौ तपोनिर्धूतकल्मषान्तःकरणस्य हेतुत्वम् इति प्रतिपादनाय च भृगुवल्ली आरभ्यते **भृगुर्वै** इति । वरुणसुतः भृगुः **पितरं** - वरुणम्, **अधीहि भगवो ब्रह्मेति** मन्त्रपूर्वकम् उपसन्न इत्यर्थः । हे भगवन्! पूजार्ह! **ब्रह्म** प्राणः ब्रह्म **अधीहि** - उपदेशाय स्मर । अधीष्व इति वा, अध्यापय इति वा अर्थः । **तस्मा एतत्** इति । अन्नं ब्रह्म, प्राणो ब्रह्म इत्यादिकं तन्मनश्शोधनाय उपदिश्य किं सर्वाणि अपि ब्रह्माणि ? उत एकम् ? तत्रापि किं वा ब्रह्म इति व्याकुलचेतसं पुत्रम् आलोक्य वक्ष्यमाणम् उवाच इत्यर्थः । **यतो वा इमानि भूतानि** इति । **जीवन्ति** - आत्मभूतेन जीवन्ति इत्यर्थः । प्रयन्ति सन्ति भूतानि - यत् **अभिसंविशन्ति** लीयन्ते । **सम्** इत्येकीकरणे । एकीकृततया प्रवेशः संवेशः । यद्वा [1]प्रयन्ति[1] इति मोक्षः । **अभिसंविशन्ति** इति प्रलयः । अस्मिन् पक्षे यच्छब्दस्य आवृत्तिः । **यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति** [2]इत्यत्र हि[2] प्रतिवाक्यं तद् ब्रह्म [3]इत्युनुक्तेः[3] न जगज्जन्मादिप्रत्येकं लक्षणम् । प्रत्येकलक्षणत्वे लक्षणान्तरवैय्यर्थ्यप्रसङ्गाच्च । अतः समुदितमेव लक्षणम् ।

न च जन्मादिसमुदायस्य लक्षणत्वे व्यावर्त्याभावेन निष्प्रयोजनत्वम्; लक्ष्याकारविपरीतशंका-निवारणक्षमत्वेन सप्रयोजनत्वात् । उत्पत्तिकारणत्वमात्रे अभिहिते हि तस्य स्थितिप्रलयकारणी-भूतवस्त्वन्तरशंकया जगज्जन्ममात्रकारणस्य ब्रह्मणः निरतिशयबृहत्वं न सिद्ध्येत् । तथा लयकारणत्वाभिधाने [4]आत्यन्तिकलय[4]रूपमोक्षप्रदान्तरसद्भावशंकया मोक्षप्रदत्वप्राप्यत्वानुगुणगुणैः बृहत्त्वं न सिद्ध्येत् । अतः जगज्जन्मकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेऽपि जन्मादिसमुदायकारणत्वस्य एव बृहत्त्वातिशयौपयिकत्वात् सृष्टि-स्थिति-प्रलय-समुदायकारणत्वं लक्षणम् इति [5]ज्ञापितम्[5] ।

---

1. यत्प्रयन्ति - क,ख,च । 2. इत्यत्र - ग,घ । 3. इत्यनुवृत्तेः - ग । 4. प्रलय - ग,घ ।
5. व्यवस्थापितम् - ग ।

**[वाक्यस्य कारणत्वलक्षणविधानपरत्वम्]**

**यतः येन यत्** इति यद्वृत्तयोगात् कारणम् अनूद्यते । **तद्ब्रह्मेति** कारणस्य ब्रह्मत्वं विधीयते । तेन कारणत्वस्य ब्रह्मलक्षणत्वं सिद्धं भवति । **तद्विजिज्ञासस्व** इति न विचारस्य उपासनस्य वा विधिः । विचारात्मकज्ञानं रागप्राप्तत्वात् न विधेयम् । उपासनात्मकस्य तु ज्ञानस्य ब्रह्मविदाप्नोति इति प्राकरणिकवाक्यान्तरसिद्धत्वात्, उपक्रमे - **अधीहि भगवो ब्रह्म इति** प्रश्नस्य तत्त्वपरत्वेन उपायविषयत्वाभावाच्च [1]नोपासनाज्ञानमिह[1] विधेयम् । अतः **विजिज्ञासस्व** इति उपदिश्यमानार्थे सावधानत्वार्थं सन्देहनिवृत्त्यर्थं च उक्तम् । *या गन्धवती तां पृथिवीं विद्धि* इतिवत् । अतः कारणत्वस्य ब्रह्मलक्षणत्वमेव अस्य वाक्यस्य विधेयम् । यथा *यत्र सारसः स देवदत्तकेदारः* इत्युक्ते सारसम्बन्धस्य देवदत्तकेदारलक्षणत्वम् उक्तं स्यात् तद्वदिति व्यासार्यैः उक्तम् ।

**[कारणत्वरूप-लक्षणविशेषकथनफलम्]**

ननु ईश्वरस्य लिलक्षयिषितत्वे [2]तर्हि तदसाधारण[2]सर्वज्ञत्वादिप्रतिपादकसत्य-ज्ञानादिवाक्यानादरेण जन्मादिकारणत्वेन किमर्थं लक्ष्यत इति चेत्, उच्यते । गुणैः स्वरूपस्य [3]लक्ष्यत्वे[3] तदपेक्षया बहिष्ठायाः विभूतेः उपास्यान्तर्भावः न प्रतीयेत । सर्गादिविषयभूतया तु विभूत्या स्वरूपे लक्ष्यमाणे, विभूतेः सर्गाद्यौपयिकसर्वज्ञत्वादिगुणानामपि जिज्ञास्यान्तर्भावः सिद्ध्यति । विभूतेश्च जिज्ञास्यान्तर्भावः, *उपासात्रैविध्यात्* (ब्र.सू.१-१-३२) इति सूत्रितः । ननु एवमपि कृत्स्नविभूतेः जिज्ञास्यान्तर्भावः न सिद्ध्यति त्रिपाद्विभूतेः जन्माद्यस्पृष्टत्वात् इति चेन्न । **यत्प्रयन्ति** इति प्रलयवाक्यस्थयच्छब्देन मुक्तप्राप्यस्य ब्रह्मणः विवक्षितत्वात्, नित्यविभूतिविशिष्टस्यैव मुक्तप्राप्यत्वात्, नित्यविभूतेरपि जिज्ञास्यत्वसिद्धिः ।

एवञ्च जगत्कारणत्वलक्षणं विशिष्टनिष्ठम्, [4]सत्यज्ञानत्वलक्षणं[4] तु विशेष्यनिष्ठम् इति भिदा । एवमेव व्यासार्यैः उक्तम् ।

**[यतः इति हैतुपञ्चमी समर्थनम्]**

अत्र **यत** इति पञ्चमी हेत्वर्थिका । यच्छब्दस्य अनुवादरूपत्वात्; अनुवादस्य च प्रापकवाक्यसापेक्षतया तद्विरुद्धार्थपरत्वासम्भवात् । प्रापकवाक्येषु, *एकमेवाद्वितीयम्, तदैक्षत बहु स्याम्,* (छां.उ.६-२-१-३) *तत् तेजोऽसृजत* (छां.उ.६-२-३) इति निमित्तत्वोपादानत्वयोः प्रतिपादनात् तदनुवादिनि लक्षणवाक्ये **यतः** इति पदम् उभयविषयकम् इति व्यासार्यैः

---

1. नोपासनात्मकज्ञानमिह - ग,घ । 2. तदसाधारण - ग,घ । 3. लक्ष्यमाणत्वे - ग,घ ।
4. सत्यज्ञानादित्वं - ग ।

उक्तम् । न च हेतौ पञ्चमी नानुशिष्टेति शंक्यम् । *अ इ उ ण्* (पा.सू.१) इति सूत्रे, *विवारभेदात्* इति भाष्यनिर्देशेन, *विभाषा गुणेऽस्त्रियाम्* (पा.सू.२-३-२५) इत्यत्र विभाषा इति योगविभागस्य आश्रिततया, ततः एव हेतुपञ्चम्युपपत्तेः इति द्रष्टव्यम् ।

**[जन्माद्यधिकरणविचारः]**

इदञ्च चिन्तितम्, *जन्माद्यस्य यतः* (ब्र.सू.१-१-२) इति सूत्रे । *यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति* इत्यत्र जगज्जन्मादयः न विशेषणत्वेन ब्रह्म लक्षयितुं शक्नुवन्ति । विशेषणानां व्यावर्तकस्वभावत्वेन व्यावर्तकबहुत्वे व्यावर्त्यबहुत्वावश्यंभावेन विशेषणानां बहुत्वे विशेष्यनानात्वप्रसङ्गात् । *खण्डः मुण्डः पूर्णशृङ्गः गौः* इत्यत्र विशेषणबहुत्वेन विशेष्यबहुत्वस्य दर्शनात् । न च, देवदत्तः श्यामो युवा लोहिताक्षः समपरिमाणः इत्यादौ विशेषणबहुत्वेऽपि विशेष्यैक्यं दृष्टम् इति वाच्यम् । प्रत्यक्षावगतविशेष्यैक्यबलात् तत्र विशेष्यभेदत्यागेऽपि, प्रत्यक्षाद्यप्रतिपन्ने अलौकिके ब्रह्मणि उत्सर्गप्राप्तस्य विशेषणभेदप्रयुक्तविशेष्यभेदस्य त्यागायोगात् ।

नापि उपलक्षणतया जन्मादीनां व्यावर्तकत्वम्, *यत्रायं सारसः स देवदत्तकेदारः* इत्यादौ केदारत्वादिना केनचित् आकारणे पूर्वप्रतिपन्नः एव केदारः देवदत्तकेदारत्वरूपधर्मान्तरवत्तया सारसेन उपलक्ष्यते । इह तु जगज्जन्मादिभिर्हि निरतिशयबृहत्त्वा[1]रूप[1]लक्षणीये उपलक्ष्याकारसमानाधिकरणः केदारत्वस्थानीयः पूर्वप्रतिपन्नः कश्चन आकारः वक्तव्यः । न च इह ब्रह्मणि पूर्वप्रतिपन्नाकारः कश्चित् अस्ति । न च, *सत्यं ज्ञानमनन्तं ब्रह्म* इति वाक्यप्रतिपन्नसत्यत्वज्ञानत्वादीनां पूर्वप्रतिपन्नाकारत्वसम्भवः । सत्यत्वादिषु अपि विशेषणत्वोपलक्षणत्वविकल्पदौस्स्थ्येन तेषामपि लक्षणत्वासम्भवात् इति प्राप्ते, उच्यते *जन्माद्यस्य यतः* (ब्र.सू.१-१-२) अस्य - अचिन्त्यविविधविचित्ररचनस्य ब्रह्मादिस्तम्बपर्यन्त-क्षेत्रज्ञमिश्रितस्य जगतः जन्मस्थितिलयाः यतः भवन्ति, तद्ब्रह्म इति सूत्रार्थः । ततश्च जगज्जन्मादिहेतुत्वं ब्रह्मलक्षणं भवितुमर्हति इति[2]सूत्रार्थः[2] ।

अयं भावः यद्यपि विशेषणानां व्यावर्तकत्वं स्वभावः, अथापि विशेषण स्वविरुद्धधर्माश्रयात् स्वाश्रयं व्यवच्छिनत्ति इत्येव । न तु स्वाविरुद्धधर्माश्रयादपि स्वाश्रयं व्यावर्तयति । नीलम् उत्पलम् इत्यादौ नैल्यस्य शौक्ल्याश्रयव्यावर्तकत्ववत् दैर्घ्याश्रयव्यावर्तकत्वाभावात् ; प्रकृते च जन्महेतुत्वस्थितिहेतुत्वादीनां परस्परविरुद्धत्वाभावेन व्यक्तिबहुत्वस्या[3]प्रसक्तिः[3] । खण्डः मुण्डः इत्यादौ खण्डत्वादीनां परस्परविरुद्धत्वात्

---

1. रूपब्रह्मत्वे उपलक्षणीये - ग,घ । 2. सूत्रकारतात्पर्यम् - ग,घ । 3. प्रसक्तेः - ग ।

स्वाश्रयभेदकत्वम् । उपलक्षणत्वपक्षेऽपि न दोषः । उपलक्षणभूतात् जगज्जन्मादिहेतुत्वात् उपलक्ष्याच्च निरतिशयबृहत्वात् अन्यस्य बृहत्वसामान्यस्य पूर्वप्रतिपन्नाकारस्य सम्भवेन उपलक्षणत्वपक्षेऽपि दोषाभावात् ।

ननु परस्परविरुद्धयोः विशेषणत्वोपलक्षणत्वपक्षयोः उभयोरपि भाष्ये कथम् अभ्युपगमः इति चेत्, अत्र केचित् - विशिष्टनिष्ठं जगत्कारणत्वम्, विशेष्यनिष्ठं तु सत्यत्वादिकम् इति व्यासार्यैः तत्र तत्रोक्तम् । भाष्ये च जगत्कारणत्वोपलक्षितस्वरूपस्य इति बहुशो व्यवहृतत्वात् जगत्कारणत्वं चिदचिद्विशिष्टस्य ब्रह्मणः विशेषणभूतं लक्षणम् । शुद्धस्वरूपस्य तु उपलक्षणम्, जगत्कारणत्वस्य शुद्धस्वरूपनिष्ठत्वाभावात् । तदभिप्रायेणैव विशेषणोपलक्षणत्वाभ्युपगमः । न च शुद्धस्वरूपानिष्ठस्य विशिष्टनिष्ठस्य जगत्कारणत्वस्य कथं शुद्धस्वरूपोपलक्षणत्वमिति वाच्यम् । तटस्थस्यापि शाखाग्रस्य चन्द्रोपलक्षणत्वस्य दर्शनात् इति वदन्ति ।

अन्ये तु विशेष्यनिष्ठत्वानिष्ठत्वाभ्यामेव विशेषणोपलक्षणभेदम् आश्रित्य, जगत्कारणत्वस्य ब्रह्मनिष्ठतया विशेषणत्वम्, प्रपञ्चगतजन्मादेस्तु ब्रह्मनिष्ठत्वाभावेन उपलक्षणत्वम् इति वर्णयन्ति ।

अपरे तु, यतो वा इमानि इति वाक्येन जन्मादिविशिष्टे ब्रह्मत्वं बोध्यते ? उत तदुपलक्षिते ? नाद्यः ; जन्मविशिष्टे ब्रह्मत्वबोधने विशेषणभूतजन्मादौ अपि ब्रह्मत्वप्रसङ्गः । [1]उपलक्षणपक्षे[1] आकारान्तराप्रतिपत्तिः दोषः इति पूर्वपक्षिणः भावः । तन्न, न विधेयान्वयित्वं विशेषणत्वम् ; येन [2]जन्मादेः विशेषणत्वे[2] विधेयभूतब्रह्मत्वान्वयः अपि प्रसज्येत् । अपि तु यदन्विततया ज्ञाते [3]इतरान्वयः[3] तत्तत्र विशेषणम् । प्रकृते च जगज्जन्मादिहेतुत्वान्वयितया ज्ञाते ब्रह्मणि ब्रह्मत्वान्वयधीः इति विशेषणत्वे न अनुपपत्तिः । यदि विधेयान्वयी एव विशेषणम् इति आग्रहः, तर्हि उपलक्षणपक्षो वा अस्तु । बृहत्त्वसामान्यलक्षणतृतीयाकार-प्रतिपत्तेः असम्भवात् [4]इत्येव[4] सिद्धान्तिनः अभिप्रायः । न तु विशेषणत्वोपलक्षणत्वयोः समुच्चयः इति (वदन्ति) ।

इतरे तु, तद्विजिज्ञासस्व इत्यत्र उपासनं विधीयते । तत्र केषुचित् उपासनेषु जगत्कारणत्वम् अनुसन्धेयम् । तत्र ज्ञाप्यान्तर्भूतत्वात् जगत्कारणत्वं विशेषणम् । यत्र तु नानुसन्धेयम् तत्र उपलक्षणं ज्ञाप्यानन्तर्गतत्वात् इति, *इतरे* तु *अर्थसामान्यात्* (ब्र.सू. ३-३-१३) इति सूत्रे व्यासार्योक्तेः तदनुसारेण विशेषणत्वोपलक्षणत्व[5]समुच्चयः अपि[5] न अनुपपन्नः इति वदन्ति ।

---

1. उपलक्षणत्वपक्षे - ग,घ । 2. जन्मादेर्विशेषणत्वेन - ग,घ । 3. इतरान्वयधी - ग,घ ।
4. इति - ग,घ । 5. समुच्चयो - ग,घ ।

अतः जगज्जन्मादिहेतुत्त्वं ब्रह्मलक्षणम् इति स्थितम् । प्रकृतम् अनुसरामः ।

**[पुनः पुनरुपसरणम्]**

स तपोऽतप्यत[1] इति शृङ्गग्राहिकया इदं ब्रह्म इत्युपदेशं परित्यज्य लक्षणोपदेशपूर्वकं, विजिज्ञासस्व इत्युपदिशतो हि अयं भावः । सम्पादनीयं ब्रह्मज्ञानसाधनं संपाद्य एतल्लक्षणलक्षितं ब्रह्म विजानीहि इति । एतम् अर्थं निश्चित्य इन्द्रियनिग्रहादिलक्षणस्य तपसा ब्रह्मविद्यायाम् अन्तरङ्गोपायत्वात् तदेव साधनमिति ज्ञात्वा तपः कृत्वा ।।

**कू.भा.** एवं ध्येयरूपं सर्वं विविच्य प्रतिपाद्य वाचकेषु प्रणवस्य प्राधान्यम् अङ्गाङ्गिषु अनुवृत्तत्वं च उक्तम् । प्रणवानन्तरं स्वाध्यायप्रवचनयोश्च महाभागवत मुद्गलकुलतिलकस्य मतं सर्वर्षिपरिषदनुमतं च इति गदितम् । समाधिवेलायां मुक्तिवेलायाञ्च त्रिशंकुमहर्षेः स्वभावानुभववचनप्रायवाचकं समाप्तम् । अनन्तरं वेदमन्त्रस्यैव विद्यांगतया कायिकेषु उपादेयञ्च विविच्य उक्त्वा सत्यस्वाध्यायप्रवचनादीनां अवश्योपादेयता च सकलवेद-वेदान्त-स्मृतीतिहास-पुराणाचार्य-लोकपाल-प्रजापतीश्वर-सर्वरहस्यसर्वस्वतया प्रत्यपादि । *यश्छन्दसाम्* (तै.उ.शि.४), *अहं वृक्षस्य* (तै.उ.शि.१०) इति द्वयमेव शिष्यवचनम् । *शन्नो मित्रः* (तै.उ.शि.१) इत्यारभ्य आचार्यवचनम् । *यश्छन्दसाम्* (तै.उ.शि.४) इति मननम् । *ब्रह्मवित्* (तै.उ.आन.१) इत्यनुवाकेऽपि सांहित्युक्त विश्वदेशकालवस्तुरूपत्वफलं त्रिविधानन्त्यमेव सकलव्यावर्तकं लक्षणं दर्शितम् । अनन्तविश्वपदे परस्परव्याख्यातृरूपतया परस्परवैशद्यकरे । अथाधिलोकाद्यारम्भकाणाम् आकाशादीनां सर्गक्रमश्च सांहितीषु अनुक्तः एवोक्तः । पुनः स एव इत्यत्र भृगुर्वै वारुणिः सांहित्युपनिषत्सु भगवतः प्रधानभूतेषु रूपेषु संहितानां पर्यवसानादर्शनेन तस्मिन् ब्रह्मणि प्रमाणं लक्षणं च उक्तम् । प्रमाणतः लक्षणतश्च श्रुतस्य मननं च कृतम् । यश्छन्दसाम् इति छन्दस्सिद्धेन अनुवाकेन कर्णाभ्यां भूरिविश्रुवम् इति कण्ठोक्त्या च । अथ तत्रैव मेधान्नादिविद्यानुगुणफलसाधनानि च उक्तानि । अनन्तरं तद्ब्रह्म स आत्मा, *अंगान्यन्यादेवताः, ता यो वेद, स वेद ब्रह्म* (तै.उ.शि.५) इति परमपुरुषांगभूतदेवतान्तरोपासनानि अंगिभूतपुरुषज्ञानसाधनमात्रणि इति स्थापितम् । अथ सबीजयोगांगको निर्बीजयोगः अभ्यधायि । *पुरुषो मनोमयः अमृतो हिरण्मयः* (तै.उ.शि.६) इति सबीजयोगविधिः ।

---

१. सर्वेषां हि नियमसाध्यविषयाणां साधनानां तप एव साधकतमं साधनम् इति प्रसिद्धं लोके । तस्मात् पित्रा अनुपदिष्टमपि ब्रह्मविज्ञानसाधनत्वेन तपः प्रतिपेदे भृगुः । मनसश्च इन्द्रियाणां च ह्यैकाग्र्यं परमं तपः । तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ।। (मो.ध.२५०-४) इति स्मृतेः । इति शाङ्करभाष्यम् ।

*सत्यात्मप्राणारामं मन आनन्दं, शान्तिसमृद्धममृतम्* (तै.उ.शि.६) इति उपास्व इति निर्बीजयोगविधिः । योगफलमूर्धन्यनाडिमध्योत्क्रमणार्चिरादिप्राप्तिपूर्वक विभूतिविशिष्टब्रह्मानुभवः अनुसन्धेयतया उक्तः । सबीजोपासनेन एव *पाङ्क्तेनैव पाङ्क्तं स्पृणोति* (तै.उ.शि.७) इति जगदाकारोपासनेन एव जगदाकारभगवत्प्राप्तिः इत्यपि नियमितम् । सर्वोपासनेषु उपासात्रैविध्यं पञ्चविंशतितत्त्वेभ्यः अन्यत्वम् उक्तम् ।

तथाहि अन्नमयशब्देन पञ्चभूतानि गन्धादिपञ्चतन्मात्रयुक्तानि गृहीतानि । प्राणमयशब्देन सप्त वै शीर्षण्याः प्राणाः सप्त श्रेष्ठाः उक्ताः । प्राणस्य भूतवैलक्षण्यं सूत्रे स्थापितम्, *न वायुक्रिये पृथगुपदेशात्* (ब्र.सू.२.४.८) इति । मनोमयशब्देन बुद्ध्यहंकारचित्तानि च संगृहीतानि । विज्ञानमयशब्देन कर्ता भोक्ता च पञ्चविंशकः । *विज्ञानमयादन्योन्तर* इति षड्विंशकः । *सा काष्ठा सा परागतिः* (क.उ.३-१-१) इति कठोपनिषत्सिद्धम् । अथ *यश्छन्दसामृषभो विश्वरूपः* (तै.उ.शि.४), *आकाशशरीरं ब्रह्म, सत्यात्मप्राणारामं* (तै.उ.शि.६), *तत् ब्रह्म स आत्मा, अंगान्यन्या देवताः* (तै.उ.शि.५), इत्युक्तात्मशरीरभावविवरणरूपतया सर्वतत्वानिवृत्तिशारीरात्मत्वं ; सर्वान्तरत्वम्, आत्मकाष्ठात्वं ; अत एव तद्ज्ञानिनः सात्मत्वात् सत्यत्वं ; तद्ज्ञानरहितस्य निरात्मत्वात् असत्यत्वं तत् सत्यत्वादिस्थापनाय साधितम् । *आप्नोति स्वाराज्यम्* (तै.उ.शि.६) इत्याद्युक्तवैशद्याय कश्चन गच्छति कश्चित् समश्नुते इत्युक्तम् ।

अथ *शान्तिसमृद्धममृतम्* इत्युक्तस्य अंशस्य वैशद्याय *सोऽकामयत* (तै.उ.आन.६) इत्यारभ्य सर्वजन्तुभिः सर्वप्रकारसंश्लेषे सकामत्वं, यथा कर्मगुणदोषतया तत्तद्भावपर्यन्तः संश्लेषः *तेन विना सत्यत्वानर्हस्य तदात्मानं स्वयमकुरुत* (तै.उ.आन.७) इति स्वात्मदानेन स्वरूपस्थितिप्रवृत्तिप्रदानं च प्रतिपादितम् । यथाह *य आत्मदा बलदा* (तै.सं.४-१-८) इति । आत्मबलप्रदानेन विश्वप्रकारोपजीव्यत्वात् प्राणिभिः अनुष्ठितं सुकृतम् इति च स्थापितम् । *एष ह्येवानन्दयाति* (तै.उ.आन.७) इत्यज्ञानतयापि आनन्दं किं पुनः सर्वरूपः इति चोक्तम् । *को ह्येवान्यात्* (तै.उ.आन.७) इति सर्वस्य अविशेषेण प्राणनम् आनन्दनं च किं पुनः अनन्यभावस्य स्वभावात् अभयागतस्य स्वप्रतिष्ठितस्नेहभक्तिकस्य । अतः स्वात्मपर्यन्तसर्वप्रदत्त्वे कः संशयः इति औदार्यसौशील्यवात्सल्यादिकाष्ठा प्रतिपादिता । अथ *ता यो वेद स वेद ब्रह्म* (तै.उ.शि.५) इत्येतत्परित्यज्य भगवदन्यांगतया दैवतान्तरोपासकानां उपास्यशतमखादीनां च अविशेषेण भगवत्प्रतिष्ठितमनस्कतया सभयत्वात् उत्तरपूर्वाघयोः अश्लेषविनाशाभावेन देवयानेन परमाकाशब्रह्मोपसंक्रमणाभावाच्च । तदा विशेषेण उभयम् एव इति विस्तृतम् उक्तम् । अनन्तरं *मन आनन्दम् इत्युक्तस्य आनन्दस्य युवत्वादिरूपगुणैः ज्ञानबलाद्यात्मगुणैश्च निस्समैर्निरवधिकत्वं ब्रह्माद्यानन्दानां*

*ज्ञानवलाद्यात्मगुणैश्च* निस्समैः निरवधिकत्वं ब्रह्माद्यानन्दानां ज्ञानबलाद्यन्तवत्वेन तत्सायुज्यकामनया तदुपासकानां च तथाविधत्वं प्रतिपादितम् । अथ *अमृतो हिरण्मयः (तै.उ.शि.६)* इत्यस्य वैशद्याय *यश्चासावादित्ये स एकः (तै.उ.आन.८)* इति रूपमुद्दिष्टम् । *व्यपोह्य शीर्षकपाले (तै.उ.शि.६)* इत्यादि स्पाष्ट्याय अस्माल्लोकात् ब्रह्माण्डरूपात् पुनरावर्तिनः अनन्तसुरासुरादिलोकगर्भात् अमुं लोकम् आनन्दमयपरमव्योमपरमपदादिशब्दवाच्यं सूरिदृश्यं तमस उपरिष्टात्, प्रेत्य आनन्दमयादि सर्वप्राप्तिः सर्वाविद्यानिवृत्तिश्च इत्युक्तम् । *एतं ह वाव न तपति (तै.उ.आन.९)* इति परब्रह्मविदुषः न तापः तद्व्यतिरिक्तदेवतोपासकानां सन्तापः इत्युक्तम् । एवंविधभगवदौदार्यचिन्तनं विहितं *स य एवं विद्वानेते (तै.उ.आन.९) इति ।*

अथ भृगुवल्ल्याम् अपि वैश्वरूप्यपर्यायानन्त्योपपादनाय निखिलजगदेककारणत्वं एवं ततो निष्कृष्टलक्षणं काष्ठा इत्युच्यते । परप्राप्तिसाधनतया उक्तं वेदनमपि न वाक्यजन्यज्ञानमात्रं, अपि तु भूयोभूयः अनुष्ठितेन महता तपसा एव साध्यसाक्षात्काररूपम् इत्युक्त्वा, *अन्नं न निन्द्यात्* (तै.उ.भृ.७) इति व्रतानि सांहितीषु अनुक्तानि च उच्यन्ते ।

अथ अर्चिरादिना लोकात् लोकान्तरं गच्छतः एव आनन्दसम्भवः । तत्र च कामरूपी सामगानादितत्परश्च आस्ते इति आनन्दवल्ल्यां प्रस्तुतमेव सर्वं साक्षिवाक्येन गुरुशिष्योपदेशरूपेण द्रढयति । *आचार्योऽन्तेवासिनमनुशास्ति* (तै.उ.शि.११) *आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्* (छा.उ.४-९-३) इति । अन्यथा हि विद्या प्राप्ता नाशिनी स्वयं कन्यापहारः इव ।

*यश्चाधर्मेण विब्रूयाद्यश्चाधर्मेण पृच्छति ।*
*तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ।।* (म.भा.३-९४) इति ।

**भृगुर्वै वारुणिः** *महर्षीणां भृगुरहम्* (भ.गी.१०-२५) इति प्रसिद्धो वारुणिः । **वरुणं पितरमुपससार** लौकिकात् अन्यत् शास्त्रीयं उपसदनान्तरम् एतत् । *गुरुमेवाभिगच्छेत् समित्पाणिः* (मुं.उ.१-२-१२) इति अधीतवेदस्य एव वचनात् । *ते ह समित्पाणय* (छां.उ.५-११-७) इति (ते प्राचीनशालादयः) *समिधं सोम्याहर उपत्वानेष्व* (छां.उ.४-४-५) इति, उपनीय इत्याद्यैकार्थ्याच्च, शिष्यकर्म सर्वत्रोपसरणाख्यम् उपसदनमेव । अनुपेतस्य इत्यादि प्रयोगात् पूर्वम् उपनीता अपि ब्रह्मविद्यांगतया पुनरुपनेतव्याः । **अधीहि भगवो ब्रह्मेति** अध्यापयस्व भगवन् ब्रह्मप्रतिपादनेन ब्रह्मशब्दवाच्यं ब्रह्मभागम् इति उपससार समित्पाणिः । तमुपनीय तस्मै एतत् **प्रोवाच** । **एतत्** - वक्ष्यमाणं **प्रोवाच** वचः स्वाधीतवचनम् इत्युक्तम् । **अन्नं प्राणं चक्षुश्श्रोत्रं मनोवाचमिति** । **अन्नम्** - समष्टिव्यष्टिरूपम् । प्राणं चक्षुः श्रोत्रम्

सर्वेन्द्रियसमष्टिव्यष्टियुक्तं तथाविधं प्राणं, **मनः** अन्तःकरणचतुष्टयरूपं मनोमयरूपम् । भूतनाम् अन्नस्य ज्यैष्ठ्यज्ञापनाय, प्राणेषु पञ्चवृत्तेः श्रैष्ठ्यज्ञापनाय च अन्तःकरणेषु मनःप्राधान्यज्ञापनाय च एवं निर्देशः । एवं चतुर्विंशतितत्त्वसंग्रहणम् । अथ **वाचम्** इति विज्ञानमयानन्दमयौ उक्तौ अनेन *जीवेन आत्मनानुप्रविश्य नामरूपे व्याकरणवाणि* (छा.उ.६-३-२) इति जीवरूपविशिष्टस्य परस्य नामभाक्त्वं श्रुतिप्रसिद्धम् । इत्थं अधीहि भगवो ब्रह्मेति सम्प्रश्नस्य उत्तरतया अन्नं, प्राणं, चक्षुः, श्रोत्रं मनः **वाचम्** इति लक्ष्यं निर्दिष्टम् । अत एव *अन्नाद्वै प्रजाः प्रजायन्ते* (तै.उ.आन.२) इत्यादि वचनं च ।

सर्वशरीरत्वं हि पूर्वानुवाकोक्तं । अतः अन्नमयादिरपि ब्रह्मांशः एव । एवम् अन्नमयादिपञ्चकवचने हि पूर्वापराविरोधः स्यात् । प्रागुक्तसाक्षित्वेन हि अयम् अनुवाकः प्रस्तूयते । उत्तरत्र हि *अन्नं ब्रह्मेति व्यजानात्* (तै.उ.भृ.२) *प्राणो ब्रह्मेति व्यजानात्* (तै.उ.भृ.३) इत्यारभ्य पञ्चानाम् उपासनम् उच्यते । *अन्नमयमात्मानमुपसंक्रम्य* (तै.उ.भृ.१०) इत्यादौ प्राप्तिक्रमश्च तथैव उच्यते ।

अथाव्याप्त्यतिव्याप्तिरहितं अनन्तगुणविभवोपपादकं सर्ववेदान्तसारतया अधीतं सकलेतरसमयसर्वतत्त्वव्यापकं लक्षणमपि उच्यताम् इत्यत्राह - **तं होवाच - ह** इत्याश्चर्ये । अहो शिष्यप्रश्नाभिप्रायवैलक्षण्यानुगुणोक्तिचातुरी इति । लक्षणमाह **यतो वा इमानि इत्यादि । यतो, येन यत् इति** प्रसिद्धवन्निर्देशैः जगत्कारणवाचिपुरुषसूक्त-सद्विद्यादि-सकलकारणवादि वाक्यसिद्धम् अनूद्य तस्य ब्रह्मत्वं विधीयते **तद्ब्रह्मेति ।** तत्र च *तस्माद्विराडजायत* (पु.सू.५), *पुरुष एवेदँ सर्वं* (पु.सू.२), *सर्वाणि रूपाणि विचित्य धीरः । नामानिकृत्वा* (पु.सू.१६) *सोऽकामयत; बहु स्याम्* (तै.उ.आन.६) *तदात्मानं स्वयमकुरुत* (तै.उ.आन.७), *अनुप्रविश्य नामरूपे व्याकरवाणि* (छा.उ.६-३-२) इति निमित्तोपादानसकलकारणभावेन एव प्रसिद्धः । अत्रापि तथैव अनूद्यते । **यतः** निमित्तोपादानरूपात् सद्ब्रह्मपरमपुरुषपरमात्मादिशब्दवाच्यात् । **इमानि** प्रत्यक्षानुमानशास्त्रसिद्धानि पुरुषसूक्तपूर्वानुवाकाद्युक्तानि ब्रह्मेन्द्रादीनि । **भूतानि जायन्ते -** भूतानि इति अचिद्विशिष्टाः ब्रह्मादयः सर्वे एव उच्यन्ते । *भ्रामयन् सर्वभूतानि* (भ.गी.१८-६१), *लोकानाथं महद्भूतम्* (वि.स.पू.पी.२०), *भूतानां योऽव्ययः पिता* (वि.स.पू.पी.१०), *ईश्वरस्सर्वभूतानाम्* (भ.गी.१८-६१) जीवन्तीति चेतनेषु एव उपपद्यते । **येन जातानि जीवन्ति येन -** आत्मतया अवस्थितेन । **जातानि** स्वरूपसिद्धौ तदपेक्षया एव पुनरुच्छ्वासनिश्वासादिसकलप्रवृत्तिनिवृत्त्योः अपि वर्तमानानि । **यत्प्रयन्त्यभिसंविशन्ति** - चतुर्विधेषु प्रळयेषु **प्रयन्ति** प्रेतभावे प्रवर्तमानानि लीयमानानि

यदभितः संविशन्ति । **तद्ब्रह्म** एवं तावत् कर्मानुगुण्येन ब्रह्मादिस्वरूपस्थितिप्रवृत्ति भेदानुगुणस्वाभाविकज्ञानबलैश्वर्याद्यनन्तगुणम् अक्षरपरमव्योमनिलयं सदा सूरिदृश्यं निखिलविलयकालेऽपि स्थितं यत् तत् ब्रह्म । एवं विधं तदेव सर्वप्रकारमंगळं पूर्णं पूरयितृ च, अतः **तद्विजिज्ञासस्व** - उपासनं कुरु ।

तत्तदायत्तस्वरूपजीवनविनाशानि समानि ब्रह्मादीनि भूतानि । जन्मविनाशादिवचनात् सत्यत्वमपि भूतानाम् उक्तम् । न हि मिथ्याभूतस्य स्रक्सर्पस्य तत्र जन्मविनाशौ । *ततो वै सदजायत* (तै.आन.७) इति च उक्तम् । इतिकरणं परिपूर्णलक्षणोपदेशसमाप्तौ ।

एवं लक्ष्ये लक्षणे च उपदिष्टे शिष्यः **स तपोऽतप्यत** तत्साक्षात्कारार्थम् । **स तपस्तप्त्वा** ।।

**आ.भा.** आख्यायिका विद्यास्तुतिद्योतनार्था । सा च स्तुतिः प्रियाय पुत्राय भृगवे कारुणिकः वरुणः पिता प्रोक्तवान् इति अप्रियाय अयोग्याय नोपदेष्टव्या इति प्रकारेण गम्यते । **सत्यं ज्ञानमनन्तं ब्रह्म** इति । सत्यत्वादिभिः स्वरूपनिरूपकधर्मैः उपदिष्टं पूर्वं ब्रह्म सम्प्रति तैः धर्मैः निरूपितस्य ब्रह्मणः कारणत्वेनापि धर्मेण लक्षणभूतेन उपदेशं कर्तुं प्रवर्तते परो ग्रन्थः **भृगुर्वै वारुणिः** इत्यादि । **वारुणिः भृगुः** वरुणपुत्रतया प्रसिद्धः भृगुनामा कश्चिदृषिः । **वै**शब्दः प्रसिद्धत्वसूचकः । **स्वपितरं** वरुणम् **उपससार** - विधिवदुपससाद । **अधीहि भगवो ब्रह्मेति** मन्त्रोच्चारणपूर्वकम् । **हे भगवो ! हे** भगवन् । पूजार्ह । ब्रह्म **अधीहि** - समुपदिश इति मन्त्रार्थः । पूज्यता च वरुणस्य ब्रह्मवेत्तृतया । स वरुणः विधिवदुपागताय पुत्राय तस्मै भृगवे - ब्रह्मजिज्ञासावते **एतत्** - वक्ष्यमाणमन्त्रादिकं, **प्रोवाच** - प्रोक्तवान् । किं प्रोक्तवानित्यत्राह - **अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति** एतत्सर्वं प्रोक्तवान् । **अन्नं** शरीरं ब्रह्मेति, **प्राणो** ब्रह्म इत्यादिरूपेण उपदिदेश इति भावः । एवमुपदेशं श्रुत्वा अन्नादिकं सर्वं ब्रह्म समुदितरूपं प्रत्येकं वा ब्रह्म इति संशयव्यग्रं भृगुं दृष्ट्वा पुनः **तं** प्रति **उवाच** । **ह** इति निश्चयार्थः । वक्ष्यमाणं ब्रह्मलक्षणं प्रोक्तवान् । लक्षणमेवाह **यतो वा** इत्यादि । **यत्** इति हेतौ पञ्चमी । **यतो** यस्मात्कारणात् **इमानि**, दृश्यमानानि **भूतानि** चराचरलक्षणानि ब्रह्मारभ्य स्तम्बपर्यन्तानि **जायन्ते** समुत्पद्यन्ते । **येन** इति तृतीया हेतौ । **येन** कारणभूतेन, **जातानि** समुत्पन्नानि, **इमानि** चराचरलक्षणानि, **भूतानि जीवन्ति** प्राणधारणं कुर्वते । वृद्धिं गच्छन्ति इत्येतत् । **यत्** कारणमेव प्रलयदशायां, **प्रयन्ति** -

लीयमानानि सन्ति, **अभिसंविशन्ति** - अभितः स्थूलावस्थातः परावृत्त्य, **संविशन्ति** - प्रलीयन्ते । **तद्** भूतोत्पत्तिस्थितिप्रलयकारणं, **विजिज्ञासस्व** विशिष्टतया ज्ञातुं यतस्व । तदेव कारणं ब्रह्म । यत् त्वम् उपदेष्टुं पृष्टवान् असीति । एतावत् पुनरुवाच वरुणः । **इति** तात्पर्यम् इतिशब्दस्य श्रुतिगतस्य । यतः जन्मकारणत्वं, स्थितिकारणत्वं, लयकारणत्वंच इति समुदितमेव लक्षणं ब्रह्मणः न तु प्रत्येकम् । प्रत्येकस्य लक्षणत्वे प्रतिवाक्यं तद्ब्रह्म इति निर्देशनीयं स्यात् । तच्च न निर्दिष्टं श्रूयते । ननु सम्भवति प्रत्योकस्य लक्षणत्वे समुदितस्य लक्षणत्वाश्रयणम् अनुचितं लक्षणगुरुत्त्वात् व्यर्थविशेषणत्वापाताच्च । सम्भवति च प्रत्येकस्याऽपि जन्मादिकारणत्वस्य लक्षणत्वम् असाधारणधर्मत्वात् । असाधारणधर्मो हि लक्षणम् । अस्ति च जगतः जन्मकारणत्वम् उज्जीवनकारणत्वं लयकारणत्वं च इति त्रितयमपि ब्रह्मासाधारणधर्मः । ब्रह्मणि सत्वात् अन्यत्रासत्त्वाच्च । एवं सति समुदितस्य लक्षणत्वे गौरवम् आपतति, लघुभूतेन प्रत्येकेनैव समस्तेतरव्यावृत्तिसम्भवात् । अत एव व्यर्थविशेषणताऽपि । एकमेव चेत् समस्तम् इतरत् व्यावर्तयति, किमितराभ्यां विशेषणाभ्याम् । तयोः व्यावर्त्यमेव न पश्यामः । यदेकेन न व्यावर्तितं स्यादिति चेत्; न एतद्युक्तम् । जन्मकारणं ब्रह्म इत्येवमेव जानतः लयकारणम् उज्जीवनकारणं च अन्यत् किमपि भवेत् इत्याशंका कस्यचित् प्रादुर्भवेत्, सा मा प्रादुर्भूत् इति समुदितस्य लक्षणत्वम् आश्रयणीयमेव। किञ्च एवम् आशंक्यमाने सम्भाव्यमाने च अन्यत्र उज्जीवनादिकारणत्वे निरतिशयबृहत्त्वमपि निर्वचनसिद्धं ब्रह्मणः संशीयमानं स्यात् । तन्माभूत् इति समुदितस्य लक्षणत्वम् अकामेनाऽपि एष्टव्यम् । न चैवं लक्षणगुरुत्वमपि दोषत्वास्पदं फलमुखात् समुदितलक्षणस्य । फलमुखं च न दोषाय भवति लक्षणगौरवम् । **स तपोऽतप्यत** इति । **सः** - भृगुः लक्षणवाक्योपदेशम् उपश्रुत्य लक्षणमिदम् अन्नप्राणादिषु यत्र गच्छेत् तदेकं सर्वं वा ब्रह्म इति निश्चिनुयाम् इत्येवम् आशंसासमाश्वस्तः सन् **तपो** - *मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमं तपः* (महा.भा.मोक्ष.२५०-४) इति लक्षणलक्षितं बाह्यान्तरेन्द्रियसमाधानम् । **अतप्यत** चकार । चित्तम् एकाग्रं कृत्वा पूर्वोपदिष्टेषु अन्नप्राणादिषु कुत्र एतत् लक्षणं गच्छतीति समालोचयत् इति भावः । **स तपः तप्त्वा - स** - भृगुः एकाग्रेण मनसा समालोचनं विधाय इत्यर्थः । अस्य *अन्नं ब्रह्मेति व्यजानात्* इति द्वितीयानुवाकगतवाक्येन अन्वयः ।।

**सु.** - *सत्यं ज्ञानमनन्तं ब्रह्म* इति सत्यत्वादिभिः धर्मैः ब्रह्मणः स्वरूपं निरूपितम् । तथाविधं ब्रह्म येन लक्ष्येत, तल्लक्षणं प्रतिपाद्यते वल्ल्याम् अस्याम् । तपसः विद्यासाधनत्वं च ज्ञाप्यते **भृगुर्वै** इत्यादि । आख्यायिका इयं विद्यास्तुतये । पित्रा प्रियाय पुत्राय

उपदिष्टा इति विद्या हि स्तुता भवति । **वारुणिः** - वरुणस्य सुतः, **भृगुः** - वरुणं **पितरं** ब्रह्मजिज्ञासया **उपससार** उपजगाम । **भगवः** भगवन्, **अधीहि** अध्यापय **ब्रह्म** ब्रह्म उपदिश इति । **उवाच** इति शेषः । **तस्मै** - पुत्राय जिज्ञासवे पिता **एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति** एतानि **प्रोवाच** । ननु ब्रह्मजिज्ञासुं प्रति कथमिदं प्रतिवचनम् ? अयमिदं ब्रह्मेति साक्षादुपदेशं नार्हति, तपो हि यथावत् तत्प्रतिपत्तौ प्रथमं साधनम् । व्याकुलचेताः अयम् । लक्षणं तु ब्रूमः - अनेन लक्षणेन ब्रह्म तपसा ज्ञास्यति एषु अन्यतमः वाऽन्यः एव वा इति स्वयमेव इत्याशयेन एवमुक्त्वा लक्षणमाह - **यतो वा** इत्यादिना । **इमानि भूतानि** - आब्रह्मस्तम्बपर्यन्तानि चराचरलक्षणानि **यतः** यस्मात् । हेतौ पञ्चमी । **जातानि** । **येन** आत्मभूतेन हेतुना **जीवन्ति । प्रयन्ति सन्ति** लीयमानानि सन्ति **यदभिसंविशन्ति । यत्प्रयन्ति** मोक्षदशायाम् इति वा **तद्ब्रह्म, तद्विजिज्ञासस्व** । एतेन जन्मकारणत्वं, स्थितिकारणत्वं, लयकारणत्वं च इति त्रितयं समुदितं लक्षणम् इत्युक्तं भवति । प्रत्येकं चेत् लक्षणं विवक्षितं स्यात्, **यतो वा इमानि भूतानि जायन्ते तद्ब्रह्म, येन जातानि जीवन्ति तद्ब्रह्म, यदभिसंविशन्ति तद्ब्रह्म** इति प्रत्येकं ब्रह्मशब्दः श्रूयेत । न च तथा । यद्यपि एकैकमपि लक्षणं भवितुम् अर्हति, अनतिप्रसङ्गात् । अथापि जन्मकारणत्वमात्रे सति स्थितिलययोः कारणं किमन्यदिति शंकया परब्रह्मता न सिद्ध्येत् । तत् कारणान्तरव्यावृत्तिज्ञापनमुखेन परब्रह्मतादार्ढ्याय त्रयं समुदितं लक्षणं विवक्षितम् । विशेषोऽत्र प्रकाशिकायां बोध्यः । तदिदं पितुर्वचनम् उपश्रुत्य ईदृशलक्षणलक्षितं किमिति जानन् तद्विज्ञानं, विना तपसा न घटेत इति **स तपोऽतप्यत । स तपस्तप्त्वा** उत्तरेण सम्बन्धः ।।

## द्वितीयोऽनुवाकः

**[अन्ने ब्रह्मत्व परिज्ञानम्]**

**अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ।।**

।। इति द्वितीयोऽनुवाकः ।।

**प्र.दी.** **अन्नं ब्रह्मेति व्यजानात्** इति । सर्वैः भुज्यमानम्, **अन्नं ब्रह्मेति व्यजानात्** - अन्नस्य सर्वभूतकारणत्वात् ब्रह्म इति ज्ञातवान् इत्याह - **अन्नाद्ध्येव** इति । प्रसिद्धात् अन्नादेव **इमानि** परिदृश्यमानानि **भूतानि** देवमनुष्यादीनि भूतानि, **जायन्ते खलु** उत्पन्नानि खलु, **अन्नेन जातानि जीवन्ति । जातानि** भूतानि, **अन्नेन जीवन्ति** प्राणधारणं कुर्वन्ति । **अन्नं प्रयन्त्यभिसंविशन्ति इति** भूतानि अत्तीति अन्नमिति व्युत्पत्त्या नाशदशायां **अन्नं प्रयन्ति** - अजीर्णदशाम् आपन्नेन अन्नेन लयं यान्ति इत्यर्थः । पुनः सृष्ट्यर्थं **अभिसंविशन्ति** - सर्वभूतानि अन्नं प्रविशन्ति इत्यर्थः । **तद्विज्ञाय** - अन्नस्य सर्वभूतोत्पत्तिहेतुकत्वमिति **विज्ञाय** ज्ञात्वाऽपि, ओषधीभ्यः अन्नम् इत्यस्य उत्पत्ति दर्शनात् तस्य ब्रह्मत्वे सन्दिहानः, **पुनरेव वरुणं पितरमुपससार । पुनरपि** वरुणसमीपं विधिवद्गत्वा, **अधीहि भगवो ब्रह्मेति** । हे **भगवः** । भगवन् आचार्य, **ब्रह्म** परब्रह्म ईदृशमिति, **अधीहि** - मदर्थं स्मर । माम् अध्यापय इत्यर्थः । **तँ होवाच** । **तम्** शिष्यम्, **उवाच ह** उक्तवान् किल आचार्यः । **तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्मेति** तपः एव ब्रह्मविद्यासाधनमिति इन्द्रियनियमनलक्षण-ब्रह्मज्ञानसाधन **तपसा ब्रह्म** - परब्रह्म, **विजिज्ञासस्व** - ज्ञायस्व, **तपो ब्रह्मेति** - तपः एव ब्रह्मविद्यासाधनम् इति, **स तपोऽतप्यत, सतपस्तप्त्वा - सः तपः** - अकुरुत । सः भृगुः तपः कृत्वा इति ।।

**तै.भा. - अन्नम् -** ओदनादिकं **ब्रह्म -** ब्रह्मलक्षणलक्षितम् इति व्यजानात् गुरूपदिष्टान् विशिष्य ज्ञातवान् । तत्र लक्षणम् उपपादयति **अन्नाद्ध्येव** इत्यादिना । **हिः** प्रसिद्धौ । एवकारः अयोगव्यवच्छेदार्थः । **खलु**शब्दः वाक्यालङ्कारे । यथा कथञ्चित् भूतजन्मादिहेतुत्वदर्शनेन अन्नब्रह्मप्रतीतिः अवतिष्ठेत इत्यर्थः । शेषम् अतिरोहितार्थम् । **अन्नात् -** रेतोरूपात्, **अन्नेन -** शालिपाकादिना **अन्नम् -** तस्यापि कारणं पृथ्वी । एवम् अन्नस्य ब्रह्मत्वज्ञाने सत्यपि तस्योत्पत्तिदर्शनात् वन्ध्यादौ पुत्रोत्पत्तिनियमादर्शनाच्च सन्दिहानः पुनः उपसन्नः इत्याह **तद्विज्ञाय** इति । **तपो** ब्रह्मज्ञानसाधनम् इत्यर्थः ।।

**प्र.** प्रथमतः अन्नस्य सर्वभूतोत्पत्त्यादिकारणत्वात्, अन्नं ब्रह्मेति ज्ञातवान् इत्यर्थः । **तद्विज्ञाय** इति । **अन्नं ब्रह्मेति** ज्ञात्वा उत्पत्तिमत्त्वादिना अन्नस्य ब्रह्मत्वे अपरितुष्यन्

पुनरपि पितृसमीपमागत्य **अधीहि भगव** इति मन्त्रम् उच्चारितवानित्यर्थः । तँ होवाच इति । पूर्ववदेव तपः समाचर, तप एव ब्रह्मविद्यासाधनम् । तस्मात् तपसा ब्रह्म विजिज्ञासस्व इत्युक्तवान् इत्यर्थः । स **तपस्तप्त्वा** इत्यादि । स्पष्टोऽर्थः ।।

**कू.भा.** - तथा च श्रुत्यन्तरं - *ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपः दानं तपो यज्ञस्तपः......* (महा.ना.६४) *जितं*[1] *तपः सत्यं तपो दानं तपो यज्ञस्तपः* इत्युक्तं तपः सांगम् अनुष्ठाय तद्बलेन **अन्नं** अन्नं प्राणं चक्षुः श्रोत्रं इत्यत्र प्रथमोपदिष्टम् । **ब्रह्मेति व्यजानात्** - त्वाप्रत्ययेन ज्ञानाङ्गत्वं तपसः । तत्र कथं ब्रह्मदृष्ट्युपपत्तिः इत्यत आह **अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते** पञ्चीकृतात् इतरसर्वभूतसंसृष्टं ब्रह्मादिकारणं पृथिवीतत्त्वम् अन्नम् इत्युच्यते । **हि इति** हेतौ । अवधारणेन परमकारणस्य ब्रह्मादिकरणत्वं द्वारेण विना अस्तीति उच्यते स्वरूपान्यथाभावासम्भवादिति । खलु इति सर्वप्रकारेण ऐककण्ठ्यम् । **अन्नेन जातानि जीवन्ति** भूसम्भवैः भुवि भागैर्हि ब्रह्मादीनां जीवनमपि । **अन्नं प्रयन्त्यभिसंविशन्तीति** भूतत्वात् ब्रह्मादिस्थानं विमानादिकमपि पृथिवीद्रव्यमेव । अण्डान्तर्गतं सर्वम् । अण्डम् अप्सु लीयते, आपः तेजसि, इत्यादि क्रमेण विलयः । इतिकरणं उपादानसमाप्तौ । यतः एव उक्तलक्षणैकदेशदर्शनात् अन्नं ब्रह्मेति व्यजानात् इति सम्बन्धः ।

**तद्विज्ञाय** - तद्वत् याथात्म्यसाक्षात्कारपर्यन्तं ध्यात्वा तस्मात् सर्वश्रेष्ठप्राणमयादि-सृष्ट्यदर्शनात् स्वकार्यादर्शनाच्च असन्तुष्टः **पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति** । त्वया उक्तमन्नं नानन्तं, न च सर्वतत्त्वकारणं, न चानवधिकातिशयानन्दम् इति । **तं होवाच तपसा ब्रह्मविजिज्ञासस्व** इत्यादि पूर्ववत् । उपदेष्टव्यं सर्वं निरपेक्षम् उपदिष्टम् । अतो वाक्यजन्यं ज्ञानम् अवसितम् । साक्षात्कारस्तु न वाक्येन शक्यते । किन्तु तपसा एव । तृतीयश्रुत्या तपसः ध्यानांगत्वम् । **तपो ब्रह्मेति** - ब्रह्मसाक्षात्कारसाधनं तपः एव, न वाक्यमित्यर्थः । अतः तपःप्राबल्याभावात् परमकारणतत्वं च त्वया न साक्षात्क्रियते । केवलं तत्कार्यं तदुपभुक्तम् अन्नं दृष्टम् । अतः महता तपसा ब्रह्म विजिज्ञासस्व । *तत्सर्वं धर्मवीर्येण यथावत् संप्रपश्यति* (रा.बा.३-४) इतिवत् । एवमुक्तः **स तपोऽतप्यत । स तपस्तप्त्वा ।।**

**आ.भा. - अन्नं ब्रह्मेति । अन्नम्** - शरीरम् इह उच्यते । तदेव पूर्वम् अन्नमय-शब्देनाऽपि उक्तम् । भृगुः एकाग्रमनसा समुपदिष्टम् इदं ब्रह्मणः अन्ने गच्छति न वा इति

---

१. तथा च श्रुत्यन्तरं - *ऋतं तपस्सत्यं तपः श्रुतं तपः दानं तपो यज्ञस्तपो......* इति । (महा.ना.६४)

समालोच्य **अन्नं ब्रह्मेति व्यजानात्** - विज्ञातवान् । विचारप्रकारं दर्शयति - **अन्नाद्ध्येव** इति । अत्र श्रुतो हिशब्दः अवधारणार्थः । **जीवन्ति** इति वाक्ये **अभिसंविशन्तीति** वाक्येऽपि सम्बध्यते । **इमानि** अन्नादेव उत्पद्यन्ते, अन्नेनैव **जीवन्ति**, अन्ने एव लीयन्ते च तस्मात् अन्नमेव ब्रह्म इति विचार्य निश्चितवान् भृगुः इति समग्रार्थः । **तद्विज्ञाय** - भूतजन्मस्थितिलयकारणत्वेन अन्नं ब्रह्मेति ज्ञात्वा **पुनरेव वरुणं** जगाम । पुनर्गमने कारणं तु अन्नस्य ब्रह्मत्वज्ञानेऽपि न तेन अस्य परितोषः अन्नस्यापि उत्पादविनाशवत्वदर्शनात् । नित्यं च ब्रह्म इति तेन कुतश्चित् अवगतम् आसीत् इति । **अधीहि** इति **अधीहि भगवो ब्रह्मेति** मन्त्रोच्चारणपूर्वकमेव वरुणं प्रति गतवान् इत्यर्थः । **तँ होवाच** वरुणः । पुनरुपसृतम् अन्नं ब्रह्म इति ज्ञानवन्तं तत्रापि अपरितुष्यन्तं भृगुम् उवाच । किमुवाच इत्यत्राह - **तपसा** इति । **तपसा** एव उक्तलक्षणलक्ष्यतया अन्नं ब्रह्म इति त्वया ज्ञातम् । तद्वत्, पुनः तपः आचर, बाह्याभ्यन्तरेन्द्रियसमाधानलक्षणम् । तेन च साधनेन प्रोक्तलक्षणलक्ष्यं ब्रह्म विज्ञातुं यदि अन्नं ब्रह्म इति ज्ञानेन न सन्तोषः तव । **तपो ब्रह्मेति** । **तपः** एव ब्रह्मप्रतिपत्तौ परमं साधनम् इत्यस्मात्, तपसैव ब्रह्मज्ञानाय यतस्व । एवं पित्रा उक्तः भृगुः पुनरपि चित्तैकाग्र्यकरणरूपं तपः चकार । **स तपस्तप्त्वा** चित्तैकाग्रतापूर्वकं समालोच्य प्राणो **ब्रह्मेति व्यजानात्** इति परेण अन्वयः ।।

**सु.** प्रथमम् **अन्नं ब्रह्मेति व्यजानात्** । कस्मात्? उक्तात् लक्षणात् । कथम्? **अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते** । **हि** इत्यस्य उत्तरत्रापि सम्बन्धः । **जातानि अन्नेन हि जीवन्ति** । **प्रयन्ति अन्नं हि अभिसंविशन्ति** । तदेवं जन्मादिकारणत्वावधारणेन **तत्** अन्नं ब्रह्म इति, **विज्ञाय** स्वयम् अपरितुष्यन्, **पुनरेव वरुणं पितरमुपससार** । **अधीहि भगवो ब्रह्मेति उवाच** । **तं** पिता **उवाच** उक्तं नाम लक्षणम् । **तपसा** तल्लक्षणलक्षितं, **विजिज्ञासस्व** । **तपो ब्रह्म** - ब्रह्मप्रतिपत्तौ साधनम् । एवम् उक्तः **स तपोऽतप्यत** । उत्तरेण सम्बन्धः ।।

## तृतीयोऽनुवाकः

[प्राणे ब्रह्मत्वपरिज्ञानम्]

**प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति, तद्विज्ञाय, पुनरेव वरुणं**

**पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ।।**

।। इति तृतीयोऽनुवाकः ।।

**प्र.दी. - प्राणो ब्रह्मेति** । तपः करणानन्तरम्, **प्राणः** - परब्रह्मेति व्यजानात् । विज्ञातवान् भृगुः, प्राणस्य अन्नस्य शरीरस्य आधारत्वेन अन्नादपि अधिकं मन्यमानः, **प्राणो ब्रह्मेति प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते** सर्वजनप्राणिभूत-वायुविकारप्राणादेव हि खलु **इमानि** - परिदृश्यमानानि सर्वभूतानि जातानि भवन्ति । **प्राणेन जातानि जीवन्ति** - जातानि भूतानि प्राणेन जीवन्ति । देहधारणं कुर्वन्ति । **प्राणं प्रयन्त्यभिसंविशन्तीति** । प्रळयकाले सर्वभूतानि प्राणकारणभूतवायुं प्रतिगच्छन्ति । **अभिसंविशन्तीति** - तस्मिन् प्रविशन्ति इत्यर्थः । **तद्विज्ञाय** प्राणस्य सर्वभूतोत्पत्तिहेतुकत्वम् इति ज्ञात्वा; *नारायणात्प्राणो जायते* (ना.उ.१) इति प्राणस्य उत्पत्तिदर्शनात् । तस्य ब्रह्मत्वे सन्दिहानः, **पुनरेव वरुणं पितरमुपससार** । पुनरपि वरुणसमीपं विधिवत् गत्वा, **अधीहि भगवो ब्रह्मेति** । हे भगवन् ! आचार्य ! **ब्रह्म** - परब्रह्म ईदृशमिति, **अधीहि** मदर्थं स्मर, ब्रह्म माम् अध्यापय इत्यर्थः । **तँ होवाच । तं** - शिष्यं आचार्यः उक्तवान् किल **तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति** तपः एव ब्रह्मविद्यासाधनम् इति । **तपसा** इन्द्रियनियमनलक्षणब्रह्मज्ञानसाधनतपसा, **ब्रह्म** परब्रह्म, **विजिज्ञासस्व** - ज्ञायस्व । **स तपोऽतप्यत, स तपस्तप्त्वा, सः** भृगुः, **तपः अतप्यत** - कृतवान् । **स तपस्तप्त्वा - सः** भृगुः तपःकरणानन्तरम् ।।

**तै.भा. -** प्राणात् जायन्ते तदधीनत्वात् **प्राणेन जीवन्ति** । तेन ध्रियन्ते इति सार्वजनीनम् । **अभिसंविशन्ति -** प्राणमूले वायौ लीयन्ते इत्यर्थः । शिलाकाष्ठादिषु व्यभिचारात् प्राणे ब्रह्मत्वानाश्वासात् पुनरुपसन्नः इत्याह **तद्विज्ञाय** इत्यादि ।।

**प्र. -** स्पष्टोऽर्थः ।।

**कू.भा. - प्राणो ब्रह्मेति व्यजानात् ।** चक्षुश्श्रोत्रादिसर्वप्राणमयश्रेष्ठप्राणः ब्रह्म इति उपास्ते । तदुक्तक्रमेण **प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते -** प्राणेन विना

जीवसत्ताभावात् । **प्राणेन जातानि जीवन्ति प्राणं प्रयन्त्यभिसंविशन्तीति** *वाङ्मनसि सम्पद्यते मनः प्राणे* (छां.उ.६-८-६) इति उत्क्रमणक्रमः ।

**तद्विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति तं होवाच । तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति ।** महातपसा शान्त्यतिरेकेण पुनः पुनः उपसत्तिः । तद्व्यतिरेकोपायाभावेन च पुनः पुनः तपसः एव च उपदेशः । तत्त्वभेदेन उपायभेदः सम्भवति इति च पुनः पुनः उपसत्तिसम्भवः । प्राणस्य सर्वदेवादिस्वरूपस्थितिप्रवृत्त्यादिहेतुत्वं तन्त्रेण उक्तम् - *प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये* (तै.उ.आन.३) इत्यत्र । सुबालोपनिषदि च *आकाशमिन्द्रियेषु* (सु.उ.२) इत्यादिना भूतानाम् इन्द्रियेषु एकीभावविभागौ उच्येते । अतः उपपन्नं *प्राणाद्ध्येव* इत्यादिकं मनः इत्यन्तम् ।।

**आ.भा.** - सः भृगुः चित्तसमाधानपूर्वकालोचनानन्तरं **प्राणो ब्रह्मेति** विज्ञातवान् । आलोचनरीतिमाह **प्राणाद्ध्येव** इति । जगज्जन्मस्थितिलयकारणत्वं ब्रह्मलक्षणं प्राणे समालोचितवान् । प्राणं ब्रह्मेति ज्ञात्वाऽपि प्राणस्य उत्पत्तिविनाशवत्त्वदर्शनात् तेन अपरितुष्यन् पुनः पितुः समीपं गतवान् **अधीहि भगवो ब्रह्मेति** मन्त्रमुच्चार्य ततः तपसा ब्रह्म विज्ञातुम् इच्छ इति वरुणः पुनः उवाच । यतः तपः एव ब्रह्मप्रतिपत्त्युपायः । सः पुनः तादृशमेव इन्द्रियसमाधानलक्षणं तपः चचार । तपः चरित्वा मनः ब्रह्म इति व्यजानात् इति परवाक्येन सम्बन्धः । तपसः पौनःपुन्येन उपदेशः प्रतिपत्तिसाधनेषु मध्ये इन्द्रियसाधनस्य उत्कृष्टत्वं बोधयितुम् । प्राणपदेन अत्र प्राणमयकोशः विवक्षितः ।।

**सु.** - पूर्ववत् ।।

## चतुर्थोऽनुवाकः

**[मनसि ब्रह्मत्वज्ञानम्]**

**मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ।।**

**।। इति चतुर्थोऽनुवाकः ।।**

**प्र.दी. - मनो ब्रह्मेति** तपःकरणानन्तरं भृगुः, **मनः परब्रह्मेति व्यजानात्** विज्ञातवान् । **मनसः** प्राणस्यापि अधिकत्वाच्च, सर्वकार्यकरणसमर्थत्वाच्च । बन्धमोक्षहेतुत्वाच्च, मनः परब्रह्म इति जानाति इत्यर्थः । **मनसो ह्येव खल्विमानि भूतानि जायन्ते** - मनसः एव खलु प्रकृतिकार्यभूतमनस एव **खलु इमानि** - परिदृश्यमानानि, **भूतानि** देवमनुष्यादीनि **जायन्ते** उत्पन्नानि खलु । **जातानि** भूतानि **मनसा जीवन्ति** - जीवनवन्ति भवन्ति । **मनः प्रयन्त्यभिसंविशन्तीति** - प्रळयकाले सर्वाणि भूतानि *अक्षरं तमसि लीयते* (सु.उ.२) इति श्रुत्या मनःकारणभूतप्रकृतिं **यन्ति** प्रकृतिं प्रति गच्छन्ति । तस्यां लयं यान्ति इत्यर्थः । लयानन्तरम् **अभिसंविशन्तीति** - मनः कारणभूतप्रकृतौ मधूच्छिष्टे स्वर्णशकलाः इव **अभितः** प्रविशन्ति इत्यर्थः । एवं मनसः जगज्जन्मादिकारणत्वे सत्यपि, **तद्विज्ञाय** *मनः सर्वेन्द्रियाणि च* (मुं.उ.२-१-३) इति श्रुत्या, परब्रह्मणः सर्वेन्द्रियैः सह मनसः उत्पत्तिदर्शनात् मनसः परब्रह्मत्वे सन्दिहानः परब्रह्मत्वं नास्तीति ज्ञात्वा, **पुनरेव वरुणं पितरमुपससार । पुनः** आचार्यसमीपं विधिवत् गतवान्, **अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा इति** । पूर्वमेव उक्तः अर्थः ।।

**तै.भा. -** मनसः एव हि इमानि भूतानि जायन्ते, मनोरहितस्य जन्मादर्शनात् । प्राणे इव प्रत्यक्षविरोधाभावात् । शिलादिष्वपि मनस्सम्भवाविरोधः इति हृदयावस्थितिजन्मनोः तदधीनत्वदर्शनात् । प्रलयेऽपि तदधीनत्वं कल्प्यते । मनसा जानामि इति अप्रधानकरणत्वेन अनुभवात् मनसि ब्रह्मत्वम् असहमानः पुनः उपसन्नः इत्याह **तद्विज्ञाय** इत्यादि ।।

**प्र. -** स्पष्टोऽर्थः ।।

**कू.भा. -** करणलक्षणशब्दभाजम् उपलक्षणत्वात् भूतेन्द्रियादीनां च अहङ्कारजन्यत्वात् **मनसो ह्येव खल्विमानि भूतानि जायन्ते** इत्यादिकम् उपपन्नम् । मन आयत्तत्वाच्च सर्वबोद्धृप्रवृत्तिनिवृत्तीनाम् । मनोविगमे सर्वस्य विनाशाच्च । *मनष्षष्ठानि कर्षति* इति *खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा* (भ.गी.७-४) इति च मनसः सर्वप्रकृतित्वम् उक्तम् । एवं **मनसा जातानि जीवन्ति मनः प्रयन्त्यभिसंविशन्तीति, तद्विज्ञाय** इत्यादिगतम् ।।

**आ.भा.** - भृगुः जगज्जन्मादिकारणत्वं मनसि विचिन्त्य **मनो ब्रह्मेति** ज्ञातवान्, चिन्तनप्रकारमाह **मनसः** इत्यारभ्य **संविशन्ति** इत्यन्तेन । तत्रापि नास्य सन्तोषः *अन्नमयं हि सोम्य मनः* (छां.उ.६-५-४) इति श्रुत्यन्तरेण मनसः अन्नविकारत्वावगमात् तस्यापि उत्पादविनाशशालित्वप्रत्ययात् ब्रह्मत्वानुपपत्तेः । ततः **अधीहि भगवो ब्रह्मेति** मन्त्रम् उच्चार्य पुनः पितुः समीपम् उपागमत् । पुनरेव **तपसा ब्रह्म विजिज्ञासस्व** इति वरुणोक्तः तपः चकार । **तपस्तप्त्वा** इत्यस्याग्रिमेण *विज्ञानं ब्रह्म* इति *व्यजानात्* इति वाक्येन अन्वयः । पदव्याख्या तु पूर्ववदेव कार्या ।।

**सु.** - स्पष्टोऽर्थः ।।

## पञ्चमोऽनुवाकः

**[विज्ञानं ब्रह्म इति परिज्ञानम्]**

**विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ।**

**।। इति पञ्चमोनुवाकः ।।**

**प्र.दी.** - **विज्ञानं ब्रह्मेति व्यजानात्** इति । तपः करणानन्तरम्, *विज्ञानं यज्ञं तनुते इति* श्रुत्या विज्ञानशब्देन विशेषज्ञानवान् सर्वकार्यकरणसमर्थः जीवः उच्यते । मनसः अपि जीवस्य विशेषज्ञानशालित्वेन विज्ञानं परंब्रह्म इति **व्यजानात्** - विज्ञातवान् किल भृगुः **विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते** विज्ञानादेव खलु विज्ञानशब्दवाच्यजीवसमष्टिभूतचतुर्मुखब्रह्मणः **एव खलु इमानि** - देवतिर्यङ्मनुष्यादीनि, **भूतानि जायन्ते** - उत्पन्नानि भवन्ति । **विज्ञानेन जातानि जीवन्ति । विज्ञानेन** चतुर्मुखब्रह्मणा **जातानि** - भूतानि, **जीवन्ति** जीवनवन्ति भवन्ति । **विज्ञानं प्रयन्त्यभिसंविशन्ति इति** । प्रळयकाले सर्वाणि भूतानि **विज्ञानं प्रयन्ति** चतुर्मुखब्रह्मशरीरकपरमात्मानं **यन्ति** - तत्र लयं गच्छन्ति इत्यर्थः । **अभिसंविशन्ति इति** । अनन्तरं तस्मिन् प्रविशन्ति च । **तद्विज्ञाय** । **तत्** - विज्ञानशब्दवाच्यजीवसमष्टिचतुर्मुखब्रह्मणः जगत्कारणत्वं ज्ञात्वाऽपि *नित्यो नित्यानाम्* (क.उ.५-१३) इति श्रुत्या *ईक्षतेर्नाशब्दम्*

(ब्र.सू.१-१-५) इत्यादि सूत्रैश्च जीवानामपि सर्वकामफलप्रद-ईक्षत्यादिगुणविशिष्ट-सर्वजगत्कारणभूतपरमात्मनः अधिगततया विद्यमानत्वात् समष्टिजीवस्य परब्रह्मत्वे सन्दिहानः, **पुनरेव वरुणं पितरमुपससार । पुनः** भृगुः ब्रह्मजिज्ञासार्थं पितृभूतं **वरुणम्** - आचार्यसमीपं यथाविधि उपजगाम । गत्वा **अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।।**

**तै.भा.** - विजानाति इति विज्ञानजीवः । कर्तरि ल्युट्, *विज्ञानं यज्ञं तनुते* इति पूर्वं कर्तृतया उपदेशात् । कर्मवश्यत्वेन तत्र अनाश्वासादाह - **तद्विज्ञाय** इत्यादि ।।

**प्र.** - स्पष्टोऽर्थः ।।

**कू.भा. - विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते ।** *अव्यक्तमक्षरे लीयते* (सु.उ.२) *अक्षरादव्यक्तम्, प्रकृत्यां पुरुषे तथा इतस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ।।* (भ.गी.७-५) *एतद्योनीनि भूतानि सर्वाणीत्युपधारय* (भ.गी.७-६) इति । पुरुषसमष्टेः सर्वयोनित्वं श्रुतिस्मृतिसिद्धम् । **विज्ञानाद्ध्येव** इत्यादि पूर्ववत् । आनन्दमयः इति पूर्वापराभ्यां द्रष्टव्यम् । तद्गुणसारत्वात्, प्राचुर्ये मयडिति च सूत्रकारोक्तम् ।।

**आ.भा.** - पुनः मनः समाधानलक्षणतपःकरणपूर्वकं **विज्ञानं ब्रह्मेति** विज्ञातवान् भृगुः । विज्ञानम् इह विज्ञानमयकोशः । अस्मिन्नपि नास्य सन्तोषः अभूत् । जगज्जन्मादिकारणत्वविज्ञानेऽपि विज्ञानस्य विकारवत्वावगमो हि सन्तोषाभावहेतुः । ततश्च **अधीहि** मन्त्रोच्चारणपूर्वकं पुनरपि ब्रह्मोपदेशेच्छया वरुणं प्रति जगाम । **तपसा ब्रह्म विजिज्ञासस्व** इति तदेवोत्तरं प्राप्य गुरुवाक्यश्रद्धातिशयात् तदेव उक्तलक्षणं तपः समाचरत । **स तपस्तप्त्वा** इति सम्बद्धमुत्तरेण *आनन्दो ब्रह्मेति व्यजानात्* इति वाक्येन ।।

**सु.** - विज्ञानम् अत्र जीवः । इतरत् स्पष्टम् ।।

## षष्ठोऽनुवाकः

[ब्रह्मविद्याफलम्]

**आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।**

**।। इति षष्ठोऽनुवाकः ।।**

**प्र.दी.** - भृगुः विज्ञाने ब्रह्मदृष्टिं त्यक्त्वा, आनन्दं - विज्ञानात् अधिकं परमात्मानम् **आनन्दम्** शतगुणितोत्तरानन्दविशिष्टं, **परब्रह्मेति व्यजानात्** विज्ञातवान् । **आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्दाद्ध्येव खलु इमानि** - परिदृश्यमानानि **भूतानि जायन्ते खलु** - शतगुणितोत्तरानन्दविशिष्ट-परब्रह्मभूत-श्रियः पतेरेव खलु देवतिर्यङ्मनुष्यादिभूतानि उत्पन्नानि भवन्ति खलु **आनन्देन जातानि जीवन्ति** । **जातानि भूतानि आनन्देन** परमात्मना जीवनवन्ति भवन्ति - प्राणधारणं कुर्वन्ति इत्यर्थः । **आनन्दं प्रयन्त्यभिसंविशन्तीति** प्रळयकाले एतानि सर्वाणि भूतानि, **आनन्दम्** - अपरिमितानन्दविशिष्टपरब्रह्मवाच्यश्रियःपतिं प्रति **प्रयन्ति** - गच्छन्ति । अनन्तरमोक्षकाले, **अभिसंविशन्ति इति** । **अभितः** सर्वदेशेषु परमपदे **संविशन्ति** अनन्तगरुडविष्वक्सेनादिभिः सह परमपदं प्रविशन्ति इत्यर्थः ।

**सैषा भार्गवी वारुणी विद्या सैषा सा** पूर्वोक्ता, **एषा विद्या** ब्रह्मविद्या, **भार्गवी** भृगवे प्रोक्ता, **वारुणी** - वरुणनामकाचार्येण उक्ता, वारुणीविद्या परब्रह्मविद्या, **परमे व्योमन्** - परमव्योमशब्दवाच्यपरमात्मनि श्रियःपतौ, **प्रतिष्ठिता** भवति । अन्नमयादीन् अतिक्रम्य आनन्दशब्दवाच्यश्रियःपतौ, स्थिता तम् अतिक्रम्य न तु अन्यत्र गता । यद्वा **परमे व्योमन्** - परमपदे, नित्यमुक्तानुभाव्यमाना सती **प्रतिष्ठिता** अन्यथा ज्ञानविपरीतज्ञानं विना श्री अनन्तगरुडविष्वक्सेनादिसन्निधौ चलनं विना स्थावरप्रतिष्ठतया विद्यते । स य **एवं वेद प्रतितिष्ठति** इति । **यः** - ज्ञानी, **एवं वेद** - पूर्वोक्तप्रकारेण अन्न-प्राण-मनो-विज्ञानेभ्यः अधिकतमं परब्रह्म **वेद** जानाति । सोऽपि **प्रतितिष्ठति** - ब्रह्मणि स्थावरप्रतिष्ठावत् **तिष्ठति** - तच्छरीरत्वेन तिष्ठति इत्यर्थः । *ष्ठागतिनिवृत्तौ* (धा.पा.९२८) इति धातुः । *न च पुनरावर्तते* (छा.उ.८-१५-१) इति श्रुतिः । एतादृशमुक्तियोग्यस्य महानुभावस्य लीलाविभूतौ सर्वोत्तमत्वेन विद्यमानवैभवमाह - **अन्नवानन्नादो भवति** इत्यादि ।

**अन्नवान्** - मधुरादिषड्रसोपेतान्नवान् भवति, **अन्नादो भवति** । एतादृशान्नभक्षणशक्तो भवति । **महान् भवति** समानेषु माहात्म्ययुक्तः भवति । **प्रजया** शोभनगुणयुक्तपुत्रपुत्रिकाभिः युक्तः भवति । **पशुभिः** - गृहपश्वादिभिः, **ब्रह्म -वर्चसेन** - शमदमादिषट्कसंपत्या च, **महान् कीर्त्या च** महत्त्वादिशुभाचारयुक्तः भवति इत्यर्थः ।।

**तै.भा. - आनन्दः** आनन्दवान्, मत्वर्थीयस्य लुक् । अपरिच्छिन्नानन्दत्वेन कर्मवश्यत्वात् तत्र आश्वासः । इदानीम् उक्तविद्यायाः फलं दर्शयति **सैषा** इत्यादि । **सैषा** इति पदद्वयोक्तं विवृणोति **भार्गवी वारुणी** इति । **भार्गवी** - भृगुणा गृहीता **वारुणी** - वरुणोपदिष्टा, **विद्या** - ब्रह्मज्ञानं, **परमे व्योमन्** - परमाकाशे, **प्रतिष्ठिता** - तत्प्राप्तिफल्का इत्यर्थः । *परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता* इति पूर्वोक्तस्य अनुवादः अयम् । तस्मात् **य एवम्** - आनन्दरूपं ब्रह्म **वेद** सोऽपि तथैव **प्रतितिष्ठति** - परमे व्योम्नि प्रतिष्ठां लभते इत्यर्थः ।

इदम् तस्याः आनुषङ्गिकानि अपि फलानुसङ्गि इत्याह **अन्नवान्** इत्यादि । **अन्नवान्** - प्रशस्तान्नः, **अन्नादः** - यावदभिलषितं अन्नं भोक्तुं यत्नवान् **भवति । प्रजया** - पुत्रपौत्रादिरूपया, **पशुभिः** - गवाजमहिषादिभिः, **ब्रह्मवर्चसेन** - ब्रह्मणा वेदेन वर्चः तेजः *ब्रह्मवर्चसम् ब्रह्महस्तिभ्यां वर्चसः* (पा.सू.५-४-७८) इति समासान्तप्रत्ययः । वेदाध्ययनजनिततेजसा च महान् भवति, **कीर्त्या च महान्** भवति । पृथगुक्तिः कीर्तेः सर्वोत्तरत्वात् । शिबिप्रभृतयः हि कीर्त्यर्थं सर्वं त्यक्तवन्तः इति श्रूयते । उपासननिर्वर्तकान्नादिचतुष्टयेन समृद्धः भवति इत्यर्थः ।।

**प्र. - सैषा भार्गवी** इति । भृगवे वरुणेन प्रोक्ता विद्या अन्नमयादिकम् अतिक्रम्य, *परमे व्योमन्* इति निर्दिष्टे परमव्योमशब्दिते परमात्मनि प्रतिष्ठिता, न तु तमपि अतिक्रम्य ततः अन्यत्र गता इत्यर्थः । तद्वेदनस्य फलमाह - *स य एवं वेद* इति । स्पष्टोऽर्थः ।।

**कू.भा. - आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते** इत्यादिना लक्षणसंगतिं आनन्दमये दर्शयति । *तमः परे देव एकीभवति* (सु.उ.२-२) इति सर्वस्य तस्मिन् लयः उक्तः । *आत्मा वा इदमेक एवाग्र आसीत्* (ऐ.उ.१-१) *एको ह वै नारायण आसीत्* (महो.१-१) उभौ एतौ लीयेते परमात्मनि इति । एतौ प्रधानपुरुषौ । *अहं कृत्स्नस्य जगतः*

*प्रभवः प्रलयस्तथा* (भ.गी.७-६) इति । **आनन्देन जातानि, जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्तीति** । यतः एवम् आनन्दो ब्रह्मेति व्यजानात् इति सम्बन्धः ।

**सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता** इति सैषा आनन्दमयविद्योपबृह्मणत्वेन प्रस्तुता भृगुणा अधिकृता - ख्यापिता च वरुणोक्ता । **परमे व्योमन् प्रतिष्ठिता** आनन्दमये प्रतिष्ठिता इति वक्तव्ये परमे व्योमन्निति वचनं सर्वतत्त्वविलयेऽपि परमाकाशरूपस्य परमकारणस्य लयाभावदर्शनार्थम् । तथाहि *त्रिपादस्यामृतं दिवि, त्रिपादोर्ध्व उदैत्पुरुषः* (पु.सू.३,४) *एतत्ततो भवति* (तै.उ.शि.६) *आकाश शरीरं ब्रह्म* (तै.उ.शि.६) *ब्रह्माग्रे ज्येष्ठ दिवमाततान, अक्षरे परमे व्योमन्* (श्वे.उ. ४-८) *यो वेद निहितं गुहायां परमे व्योमन्* (तै.उ.आन.१) *आदित्यवर्णं तमसः परस्तात्* (तै.आर.उ.३-१३-४०) *तमसोपरिष्टात्* (महा.ना.उ.१४७) *ह्रीश्च ते लक्ष्मीश्च पत्न्यौ* (तै.आर.उ.३-१३-४१) *नाकस्य पृष्ठमारुह्य* (महा.ना.उ.४०) *यत्र पूर्वे साध्यास्सन्तिदेवाः* (पु.सू. १६) *यद्यतयो विशन्ति* (महा.ना.उ.८६) इति । एवं परमपदनिलये आनन्दमये विद्या पर्यवसिता । *तमेव विद्वान् अमृत इह भवति नान्यः पन्थाः* (पु.सू.१७) इति च उक्तम् । *तमसः परमो धाता शंखचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यश्शाश्वतो ध्रुवः* (रा.यु.११४-१५) इति सकलवेदान्त वाक्यैः प्राचेतसादिभिः राक्षसीभिरपि अभिमतोयमर्थः केन अपह्नोतुं शक्यते । ब्रह्मशरीरभूतानां भूतेन्द्रियादितत्त्वानां च यद्यपि कारणत्वम् उक्तम्, तथापि तानि न स्वपर्यवसितानि अतः तेषां कारणत्वं च परमात्मपर्यवसितम् इति पूर्वापराविरोधेन विशिष्टस्यैव कारणत्वम् इति दर्शयितुं प्रतिष्ठिता इत्युक्तम् । तेषां रूपमात्रत्वात् रूपिणि, पर्यवसिता-समाप्ता, विद्या इत्यर्थः । ततः परमकारणत्वात् *महर्षीणां भृगुरहम्* (भ.गी.१०-२५) इति भृगोः ख्यात्यां समुत्पन्ना इति च उक्तस्य भृगोः परमभागवतस्य गृहे परमपदे च प्रतिष्ठिता । सुरभिः सुरक्षिता दुर्लभा इयं विद्या निर्बाधेन स्थिता । प्रतिष्ठिता अन्यत्र केवलं सञ्चरति । प्रतिष्ठितत्वं तत्रैव ।

**य एवं वेद प्रतितिष्ठति** - एवं विद्या प्रतिष्ठाज्ञानमात्रात् प्रतिष्ठाम् इष्टां लभते । अवघातस्वेदवत् अनुषङ्गेण **अन्नवानन्नादो भवति** । **अन्नवान्** - भोग्यवान् । परमपदे हि भोग्यसमृद्धिः । **अन्नादः** भोग्यसमृद्धश्च स्यात् । तत्र सूरिवत् **महान् भवति प्रजयापशुभिः ब्रह्मवर्चसेन** प्रजया महान् भवति । सर्वकारणज्ञानात् । एवं दृष्टफललाभकथनेनापि ब्रह्मणः सर्वातिशायित्वं प्रतिपादितम् ।।

**आ.भा.** - भृगुः पुनःपुनः तपः समाचरणेन विशुद्धचेताः अन्नप्राणादिषु ब्रह्मलक्षण-दर्शनेऽपि अपरितुष्टः आनन्दे चित्तैकाग्र्यपूर्वकं विचार्य ब्रह्मलक्षणञ्च पूर्वोक्तं पश्यन् आनन्दं ब्रह्म विज्ञातवान् । उत्पादविनाशवत्वादिविकारम् आनन्देऽपश्यत् अस्य ब्रह्मत्वज्ञाने जातपरितोषोऽभवत् ।

**सैषा** ब्रह्मविद्या भृगवे प्रोक्तत्वात् भृगुसम्बन्धितया **भार्गवी,** वरुणेन प्रोक्ततया **वारुणी** इति च कथ्यते । सा च अन्नमय-प्राणमयादिकं समुल्लङ्घ्य **परमे व्योमन्** - परमव्योमशब्दिताप्रकृताकाशस्थित आनन्दस्वरूपे परमात्मन्येव **प्रतिष्ठिता** स्थितिं प्राप्ता, न तु आनन्दशब्दवाच्यपरमात्मानमपि अन्नमयादिकमिव समतिक्रम्य अन्यत्र स्थितिं प्राप्ता । तस्मात् **यः** - कश्चित् उपासकं अपरोऽपि भृगुरिव बाह्याभ्यन्तरेन्द्रियसमाधान-लक्षणतपः अनुतिष्ठन् अन्नमयप्राणमयादिकम् अतिक्रम्य क्रमशः आनन्दमयम् आनन्दं ब्रह्मोपास्ते स उपासकोऽपि भार्गव्या विद्याया आनन्दे प्रतिष्ठितत्वात् **प्रतितिष्ठति** आनन्दं ब्रह्मदेशविशेषविशिष्टं प्राप्नोति । साकेतस्थितम् आनन्दम् अवाप्नोति इत्यर्थः । **एवं** भार्गव्यविद्यायाः मुख्यमदृष्टं फलं प्रतिपाद्य सम्प्रति दृष्टमपि तस्याः फलं निर्दिशति **अन्नवान्** इत्यादिना । अन्नम् अस्ति अस्य इति **अन्नवान्** भवति यद्यपि अन्नवत्ता तस्यापि भवति यस्य नेयं ब्रह्मविद्या तथापि अन्नवान् इत्यनेन प्रभूतान्नवत्ता विवक्ष्यते । प्रभूतम् अन्नम् अस्य भवति इत्यर्थः । अन्नम् अत्ति इति **अन्नादः** प्रदीप्तजाठराग्नितया यथेष्टान्नभक्षण परिपाचनशक्तिसम्पन्नः भवति । पुत्रादिलक्षणया **प्रजया** गवाश्वमहिषहस्त्यादिभिः, **पशुभिर्ब्रह्मवर्चसेन** ब्रह्मतेजसा बाह्याभ्यन्तरेन्द्रियजयनिमित्तेन च **महान्** भवति श्रेष्ठतया लोके गण्यते । **कीर्त्या** शुभख्यातिरूपया च महान् श्रेष्ठः सम्पद्यते ।।

**सु.** भूयः तपसा विशुद्धमनाः भृगुः अन्नादिविज्ञानान्तस्य अन्तरात्मभूतं तेभ्यः अत्यन्तविलक्षणम् आनन्दं ब्रह्म इति अवधृतवान् । कस्मात् ? **आनन्दाद्ध्येव खल्विमानि भूतानि** इत्यादि । जन्मादिकारणत्वात् उक्तलक्षणात् ।

**सैषा भार्गवी वारुणी** भृगुणा वरुणात् समधिगता **विद्या परमे व्योमन्** परमव्योमशब्दवाच्ये आनन्दे परमात्मनि **प्रतिष्ठिता** अन्नादीन् अतिक्रम्य तस्मिन्नेव प्रतिष्ठिता, न तु तमतिक्रम्य अन्यत्र प्रसर्पतीति यावत् । अथ विद्याफलम् उच्यते - **य एवं वेद** इति । **य एवम्** - अन्नादिक्रमेण आनन्दं सकलजगज्जन्मस्थितिलयहेतुं **वेद** - उपास्ते सः तस्मिन् **प्रतितिष्ठति,** न ततश्च्यवति । तमानन्दं प्राप्य पुनः न आवर्तते इति यावत् ।

विद्यामाहात्म्याद्दृष्टं च इदं फलं तस्य सिद्ध्यति इत्याह - **अन्नवान्** इत्यादि । प्रभूतमन्नं सिद्ध्यति, अन्नादनसमर्थश्च भवति, अरोगः प्रदीप्तजाठराग्निर्भवति इत्येतत् । **प्रजया पशुभिर्ब्रह्मवर्चसेन** महांश्च भवति, प्रजादिसमृद्धिर्भवतीति यावत् । **कीर्त्या च महान्** भवति ।। ६ ।।

## सप्तमोऽनुवाकः

[ब्रह्मविद्यांगतया अनुष्ठेयानि व्रतानि]

**अन्नं न निन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।**

।। इति सप्तमोऽनुवाकः ।।

**प्र.दी. - अन्नं न निन्द्यात्** इति । **अन्नम्** गुरुमिव **निन्दां न** कुर्यात् । यतः अन्नस्य, भार्गवपरब्रह्मविद्यायाः द्वारभूतत्वात् अतः ब्रह्मविदः, **तद्व्रतम्** । **तत्** अन्ननिन्दायाः अकरणं, अस्य ब्रह्मविदः व्रतम् इति उपदिश्यते । **प्राणो वा अन्नम्** - प्राणः शरीरस्य अन्नं भवति । प्राणस्य शरीरान्तर्भावात्, **शरीरमन्नादम्** - अन्नम् अत्तीति **अन्नादं** शरीरं अन्नादं भवति । **प्राणे शरीरं प्रतिष्ठितम्** इति । **प्राणे** - प्राणवायौ, **शरीरं प्रतिष्ठितम्** - प्राणाधारत्वेन शरीरं स्थितम् इत्यर्थः । **शरीरे प्राणः प्रतिष्ठितः** - तथा शरीरे प्राणः स्थितः, शरीराधारतया प्राणस्थितः इत्यर्थः । **तदेतदन्नमन्ने प्रतिष्ठितम् । तत्** - तस्मात्कारणात्, **एतदन्नम्** - शरीरम्, **अन्ने** - प्राणे, **प्रतिष्ठितम्** - शरीरं प्राणाधारतया स्थितम् इत्यर्थः । **स य** इति । **यः एतदन्नं** प्रसिद्धं शरीरम्, **अन्ने** - प्राणे, **प्रतिष्ठितम्** - प्राणाधारतया स्थितिमिति **वेद** - जानाति, **सः अन्नवान्नादो भवति । महान् भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या** अस्यार्थः पूर्वानुवाके उक्तः ।।

**तै.भा.** - अथ ब्रह्मविदः नियमविशेषानाह **अन्नम्** इत्यादि । **अन्नं न निन्द्यात्** - संस्कारवैकल्यादिना न दूषयेत्, **तत्** - अन्नानिन्दनं, **व्रतम्** - ब्रह्मविदः नियमः, किं पुनः अन्येषामिति भावः । अनिन्दत्वाय अन्नं प्रशंसति । **प्राणो वा** इत्यादि । अन्ने अन्नादे । तत्र प्रसङ्गात् फलाय उपासनं विधत्ते **स य** इत्यादि ।।

**प्र.** - एतद्विद्याङ्गं व्रतमाह - **अन्नं न निन्द्यात्, तद्व्रतम्** इति । प्राणशरीरयोः, अप्तेजसोः पृथिव्याकाशयोः अन्नान्नादत्वदृष्टिम्, तयोः परस्परप्रतिष्ठितत्वदृष्टिम्, परस्परप्रतिष्ठिततया परम्परया स्वप्रतिष्ठितत्त्वदृष्टिम्, तदङ्गव्रतविशेषम्, तत्फलञ्चाह **प्राणो वा अन्नम्** इत्यादिना ।।

**कू.भा. - अन्नं न निन्द्यात्** अध्यात्मनिष्ठस्यैव प्रभूतानि एतानि उच्यन्ते फलान्तरे विनियोगाभावात् प्रकरणाच्च विनियोगाच्च । एतदन्नं अशोभनम् इत्यादि न वदेत् न च चिन्तयेत् । **तद्व्रतम् -** विदुषः वश्यानुपालनीयः नियमः । तत्र हेतुमाह - **प्राणो वा अन्नम् । वै** - इति हेतौ । अन्नं हि सर्वेषां प्राणरूपेण परिणमते । *अन्नेन प्राणाः* (महा.ना.उ.१४५) इत्यादि श्रुतेः । अन्नायत्तस्वरूपस्थितिप्रवृत्तिकः प्राणः इत्यर्थः । **शरीरमन्नादम् -** इति उत्तरवाक्यात् सर्वेन्द्रियसहितश्रेष्ठप्राणोऽन्नं शरीरस्य, शरीरेण ग्रस्तत्वात् धारकत्वाच्च । एवं विधः प्राणः कस्य अन्नम् इत्यत्र स्वयमेवाह - **शरीरमन्नादम्** - पञ्चीकृतत्वात् पाञ्चभौतिकान्नमयं शरीरं प्राणादनम् । अतः, **प्राणे शरीरं प्रतिष्ठितम्** प्राणनिरोधे विनाशात् । **शरीरे प्राणः प्रतिष्ठितः** - शरीरायत्तधारणश्च प्राणः । इन्द्रियाणि च नाभौ हृदये सर्वाङ्गेषु च स्थितानि । अन्तश्शरीरे निरोधेपि हि प्राणाः नश्यन्ति । एवं शरीरस्यापि अन्नत्वम् उक्तं भवति । शरीरगतवस्तूनामेव प्राणेन्द्रियधारकत्वात् । *अन्नमयं हि सोम्य मनः* (छां.उ.६-५-४) इति श्रुतेः मनसोपि अन्नमयत्वम् । अथ जीवेन आत्मनानुप्रविष्टस्य परमात्मनोपि शरीरे स्थितिरन्नायत्ता, अतोऽध्यात्मं सर्वम् अन्नायत्तत्वात् अन्नम् अन्ने प्रतिष्ठितं च । अतः अन्ननिन्दकोऽध्यात्मनिन्दकः स्यात् । कथम् ? अध्यात्मोपासको हि आत्मानं न निन्देत् । *यस्यात्मा शरीरम्* (बृ.उ.मा.पा.५-७-२६) *को ह्येवान्यात् कः प्राण्यात्* (तै.उ.आन.७) इति पूर्वेण सम्बन्धः । आत्मनिन्दाप्रशंसे हि निषिध्येते । उपासनानुगुणफलत्वाच्च अन्नोपासनमप्याह - **स य एतदन्नमन्ने प्रतिष्ठितं वेदेत्यादि । अन्नवानित्यादि** गतार्थम् ।।

**आ.भा.** यो हि ब्रह्म अन्नादिक्रमेण ज्ञातवान् अन्नादिक्रमेण ब्रह्मजिज्ञासुर्वा तेन करणीयं व्रतविशेषम् उपदिशति - **अन्नं न निन्द्यात्** । यदुत्कृष्टम् अपकृष्टं मध्यमं वा अन्नं सम्प्राप्तं भवेत् तदन्नं न दूषयेत् वाचाऽपि । **तद्व्रतम्** अन्नमहं कदापि न निन्दिष्यामि इति संकल्पं सदैव धारयेत् । ब्रह्मविद्यावतो नियमविशेषोऽयम् इत्येतत् ।

यतोऽस्य ब्रह्मोपलब्धौ कर्तव्यायां प्रथम उपायोऽन्नमेव ; तत्क्रमेणैव आनन्दे प्रतिष्ठानात् । अयञ्च व्रतविधिः अन्नस्तुतये क्रियते । अन्नस्य प्रथमपर्वत्वात् । अन्नप्रसङ्गात् अन्नविषयकः काम्योपासनाविशेषोऽपि प्रदर्श्यते **प्राणो वा** इति । **प्राणो वा अन्नम्** प्राणे अन्नदृष्टिः कर्तव्या । **शरीरमन्नादं** - शरीरे च अन्नाददृष्टिः कार्या । **वा** शब्दो वैपरीत्यमपि बोधयति । तस्माच्छरीरमन्नं प्राणः अन्नादः इति वाक्यविपर्ययं कृत्वा **शरीरे** - अन्नदृष्टिः, **प्राणे** - अन्नाददृष्टिश्च कार्येति निष्पद्यते । प्राणशरीरयोः अन्नान्नाददृष्टौ निमित्तं निर्दिशति - **प्राणे शरीरम्** इत्यादिना । सति प्राणे शरीरस्थितिः भवति असति च प्राणे न शरीरस्थितिः इति दृश्यते । अतः यत् यन्निमित्तप्रतिष्ठावत् तत् तस्यान्नमिति नियम्यते अस्ति च शरीरं प्राणनिमित्तकप्रतिष्ठावत् तस्मादन्नं शरीरमिति निश्चितं भवति । शरीरप्रतिष्ठानिमित्तभूतः प्राणश्चान्नादः इति निश्चीयते । एवं प्राणस्य अन्नादत्वे शरीरस्य अन्नत्वे द्रष्टव्ये निमित्तमुक्त्वा **प्राणे** अन्नत्वदृष्टौ, **शरीरे** - च अन्नादत्वदृष्टौ निमित्तं वक्ति **शरीरे प्राणः प्रतिष्ठितः** इति । **प्राणः** प्राणवायुः शरीरान्तर्वर्तते । यच्च यस्य अन्तर्भवति तत् तस्यान्नं यत्र भवति तदन्नादं भवति । शरीरान्तर्भूतत्वात् प्राणस्य अन्नत्वं शरीरस्य च अन्नादत्वम् । तदेवं प्राणोऽन्नम् अन्नादश्च । शरीरमपि **अन्नमन्नादश्च** इत्युक्तं भवति । **तदेतदन्नमन्ने प्रतिष्ठितम्** - तस्मात् प्राणशरीरयोः द्वयोरपि अन्नत्वात् अन्नादत्वाच्च उभयोः उभयत्र प्रतिष्ठितत्वाच्च अन्नं प्राणरूपं शरीररूपं वा अन्ने शरीररूपे प्राणरूपे वा प्रतिष्ठितं वर्तते । अतः अनयोः परस्परप्रतिष्ठितत्वेन उपासना कार्या इति भावः । एवमुपासकस्य काम्यं फलमाह - **स य** इति । **यः** - उपासकः **एतत्** - प्राणरूपं शरीररूपं वा **अन्नम्** - शरीररूपे प्राणरूपे वा अन्नं, **प्रतिष्ठितं वेद** प्राणशरीरयोः अन्नाददृष्टिं विधाय परस्परप्रतिष्ठितत्वेन उपास्ते **स प्रतितिष्ठति** लोके प्रतिष्ठावान् भवति । चिरजीवी भवति इत्येतत् । **अन्नवानन्नादो भवति** इत्यादेः पूर्वव्द्याख्या ।।

**सु.** - तस्य अस्य ब्रह्मविद्यानिष्ठस्य इदं **व्रतम्**, यत् **अन्नम्** समुपनतं तदपकृष्टमपि **न निन्द्यात्** इति । **अन्नं** हि अस्य ब्रह्मोपलब्धौ प्रथमं पर्व । अथ उपासनविशेषः निरूप्यते - प्राणशरीरादि यदिदं कार्यजातं तदखिलम् **अन्नमन्नादं** च पश्येत् इति । ननु कः प्रसङ्गः अस्यात्र, अविशुद्धसत्त्वो ब्रह्मविद्यायाम् अनधिकारी यः सः दर्शनेन अनेन विशुद्धहृदयः सन् अधिकुर्यात् । सत्यां कामनायां फलं चेदं लभेत इति । प्रथमं ब्रह्मदृष्टौ अन्नं प्रस्तुतम् इति च प्रसङ्गः । यदिदं पृथिव्यादिशरीरान्तं सर्वम् एतत् अन्नान्नादोभयात्मकम् अर्वाचीनम् अनित्यम्, तस्यास्य सर्वस्य जन्मादि यतः, तद्ब्रह्म, इति विभागश्च ध्वन्यते ।

**प्राणो वा अन्नं शरीरमन्नादः**, कस्मात् निमित्तात् ? उच्यते - **प्राणे शरीरं प्रतिष्ठितम्**, असति प्राणे शरीरविनाशात्, यत् यत्प्रतिष्ठं तत् तस्यान्नं हि । सोऽयं प्राणः **शरीरे प्रतिष्ठितः** - शरीरे हि अन्तस्तिष्ठति, तस्मात् आश्रयः प्राणस्य शरीरमिति प्राणः शरीरे प्रतिष्ठितः । तथा च शरीरमन्नं प्राणोऽन्नादश्च इत्यपि भवति । एवम् अनयोः परस्परप्रतिष्ठत्वेन यः प्राणलक्षणम् **अन्नमन्ने** - शरीरलक्षणे **प्रतिष्ठितं वेद** - उपास्ते स प्रतितिष्ठति चिरमिह, प्रभूतान्नवान् भवति अन्नादश्च भवति प्रजादिभिः समृद्धः भवति, ब्रह्मणः वेदस्य अधीतस्य यद्वर्चः तेजः तेन च सम्पन्नः भवति ।।

## अष्टमोऽनुवाकः

**[अन्ननिन्दानिषेधः]**

**अन्नं न परिचक्षीत । तद्व्रतम् । आपो वाऽन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।**

।। इति अष्टमोऽनुवाकः ।।

**प्र.दी. - अन्नं न परिचक्षीत** इति । **अन्नं** प्रसिद्धमन्नम् परब्रह्मज्ञानस्य द्वारभूतत्वात्, **न परिचक्षीत** - न परिहरेत्, **तद्व्रतम्** । **तत्** - अपरिहरणं ब्रह्मविदः, **व्रतम्** - व्रतत्वेन उपदिश्यते । **आपो वा अन्नम्** इति । **आपः** उदकानि, **अन्नम्** अन्नम् इत्युच्यते । **ज्योतिः अन्नादम्** । **ज्योतिः** - तेजः, **अन्नादम्** - इत्युच्यते । **अप्सु ज्योतिः प्रतिष्ठितम्** । **ज्योतिषु** तेजसि, **आपः** उदकानि **प्रतिष्ठिताः** स्थितानि भवन्ति । **अप्सु** उदकेषु **ज्योतिः** - स्थितं भवति । **तदेतदन्नमन्ने प्रतिष्ठितम्** । **तत्** - तस्मात् अप्तेजसोः **अन्नान्नादत्वदृष्टेः** उदकरूपमन्नं पूर्ववत्, ज्योतिरूपान्ने प्रतिष्ठितं भवति । **ज्योतिः** ज्योतिरुदकयोः परस्परान्नान्नादत्वं पूर्ववद्द्रष्टव्यम् । **स य एतदन्नमन्ने प्रतिष्ठितं वेद** । **यः** ब्रह्मविद्याशाली **एतदन्नम्** उदकं, **अन्ने** ज्योतिषि **प्रतिष्ठितम्** इति । ज्योतिषि अन्ने उदकं प्रतिष्ठितमिति । **वेद** - जानाति, **सः प्रतितिष्ठति** । परमे व्योमन् परमव्योमशब्दवाच्यपरमपदे स्थावरप्रतिष्ठावत् स्थितः भवति । **अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या** । एतद्वाक्यानां पूर्वानुवाके उक्तोऽर्थः ।।

**तै.भा. -** ब्रह्मविद एव व्रतान्तरमाह **अन्नं न परिचक्षीत** इत्यादि । **न परिचक्षीत -** न परिख्यातं कुर्यात् पुष्टान्नस्य[1] त्याज्यत्वश्रुतेः । शेषं पूर्ववत् योज्यम् ।।

**प्र. - न परिचक्षीत** । पात्रस्थम् अन्नं न निराकुर्यात् इत्यर्थः ।।

**कू.भा.** विदुषः नियमान्तरं चाह **अन्नं न परिचक्षीत** येन केन वा आत्मने दीयमानं निन्दापूर्वकं न निषेधेत्, न परिहरेत् । **तद्व्रतम्** *भोज्यं मेने प्रजापतिः, अपि दुष्कृतकारिणः* इति अविरोधं स्वयमेव वक्ष्यति । यतः एवं अन्नवैभवम् इत्यत्राह **आपो वा अन्नं ज्योतिरन्नादं** - पुरोडाशादिकं मन्त्रपूतम् अन्नं हि जलरूपेण परिणमति । एवं विधाः आपः ज्योतिषोऽन्नं, *अग्नौ प्रास्ताहुतिः सम्यगादित्यम् उपतिष्ठते । आदित्याज्जायते वृष्टिः* (म.स्मृ.३-९७) *हविषां परिणामोऽयं यदेतदखिलं जगत्*

*सरित्समुद्रभौमास्तु तथापः प्राणिसम्भवाः ।*

*चतुष्प्रकारा भगवानादत्ते सविता मुने ।* (वि.पु.२-९-११)

*यज्ञाद् भवति पर्जन्यः* (भ.गी.३-१४) इति । **अप्सु ज्योतिः प्रतिष्ठितं, ज्योतिष्यापः प्रतिष्ठिताः, तदेतदन्नमन्ने प्रतिष्ठितम्** । अत्र अन्नमिति खाद्य-चूष्य-लेह्य-पेयरूपं चतुर्विधमपि गृहीतम् । सोमरसादिकमपि अग्नौ हूयते । लौकिकाग्नेरपि प्राप्ताप्राप्तविवेकद्रवरूपस्नेह एवान्नम् । निहितस्नेहमङ्गारं ज्वलति । वैद्युताग्नेः मेघोदरगतं जलम् अन्नं भवति । अस्मत्पीयमानं जलं वैश्वानराग्नेः अन्नम् । स्निग्धमुष्णं च भोजनम् इति । शिशिरकिरणस्यापि अन्नमयत्वं सिद्धम् । *असावादित्यो ब्रह्म* (महा.ना.उ.२) *आहारमजरः कविः* (महा.ना.उ.९८) *अहं वैश्वानरो भूत्वा* (भ.गी. १५-१४) इत्यादिना अन्तरादित्यविद्याद्युपास्यः । तत्र परंज्योतिः इत्यत्रापि परमात्मपर्यवसानं द्रष्टव्यम् । एकः इत्युक्तं वक्ष्यति च । तदेतत् अन्नम् अन्नायत्तम् आपोज्योतिश्च हुतान्ने प्रतिष्ठितम्, पूर्वोक्तम् अन्नमपि प्राणाग्निहोत्रहुताशे प्रतिष्ठितम् । अतः अन्नत्यागी सोयमपश्च त्यजति । तच्चोभयं न त्याज्यम् । विष्णोः आयतनं हि आपः । त्रय्येव विद्या तपतीति । एवं मेघवृष्ट्यन्नानाम् अपां ज्योतिषां च अन्नायत्तत्वं यो वेद सोऽन्नमय परमात्मप्रसादात् । प्रतितिष्ठति इत्यादिगतम् ।।

**आ.भा.** पूर्वोक्तप्रकारेण प्राणस्य शरीरस्य अन्नत्वेन अन्नादत्वेन च तयोः परस्परप्रतिष्ठितत्वेन च उपासनं यः कुरुते तस्य उपासकस्य कर्तव्यतया व्रतविशेषं दर्शयति **अन्नं न परिचक्षीत** । यदन्नं विधिवशात् प्राप्तं भवेत् तत् न निराकुर्यात् । **तद्व्रतम् -**

---

१. दुष्टान्नस्य स्याद्वा ।

पूर्वोक्तस्य प्राणशरीरयोः अन्नत्वादिना उपासकस्य । अन्नमहं न कदाचिदपि परिहरिष्यामि इति संकल्पविशिष्टः सन्नेवं पूर्वोक्तम् उपासनं कुर्वीत इत्यभिप्रायः । एवं प्राणशरीरयोः अन्नत्वाद्युपासनं तदङ्गभूतम् अन्नापरिहरणरूपं व्रतञ्च उपदिश्य **अप्सु ज्योतिषि** च अन्नान्नादत्वादि उपासनं तत्फलञ्चोपदिशति **आपो वा अन्नम् ज्योतिरन्नादम्** । अत्रापि वा शब्दो वैपरीत्यस्यापि गमकः भवति । ततः अप्सु अन्नत्वदृष्टिः ज्योतिषि अन्नादत्वदृष्टिः कार्या । ज्योतिषि अन्नत्वदृष्टिः **अप्सु** अन्नादत्वदृष्टिश्च कार्या इत्यर्थद्वयं भवति प्राप्तम् । तत्र निमित्तं वक्तुमाह अप्सु ज्योतिः इति । आपो हि **ज्योतिषः** कार्यं कार्ये च कारणं समनुगतं भवति[१] तस्मात् अप्सु ज्योतिः प्रतिष्ठितम् । कारणं हि ज्योतिः यच्च यत्र प्रतिष्ठितं तत् तस्यान्नम्, प्रतिष्ठाधारश्च अन्नादः, तस्मात् प्रतिष्ठितत्वात् ज्योतिः अन्नम् इत्युच्यते । तत्प्रतिष्ठाधारत्वात् आपोऽन्नादपदेन उच्यते । एवं ज्योतिषि तेजोधातौ कार्यरूपेण सूक्ष्मात्मना प्रतिष्ठिता आपोऽपि सन्ति तस्मादापोऽन्नम् । अप्प्रतिष्ठाधारत्वात् ज्योतिरन्नादमिति दृष्ट्या समुपास्यम् । तयोः परस्परप्रतिष्ठितत्वेन उपासनं निर्दिशति **तदेतदन्नमन्ने प्रतिष्ठितम्** । आपः अन्नम् ज्योतिरपि अन्नम् । उभयमपि अन्नादञ्च उभयञ्च उभयत्र प्रतिष्ठितं दर्शितयैव रीत्या । अतः परस्परप्रतिष्ठितत्वेनापि एतदुभयम् उपास्यम् इति फलति । एतदुपासनस्य फलं ब्रूते **स य** इति । **यः** उपासकः **अन्ने** अब्रूपेऽन्नं ज्योतीरूपं प्रतिष्ठितम् । ज्योतीरूपेऽन्ने च अब्रूपमन्नं प्रतिष्ठितम् इति **वेद** । परस्परप्रतिष्ठिततया समुपास्ते **स प्रतितिष्ठति** चिरमत्र लोके दीर्घायुः भवति । **अन्नवान्नादो भवति प्रजा**पशुब्रह्मतेजोभिः **कीर्त्या च महान्** भवति । पदार्थव्याख्या पूर्ववत् ।।

**सु.** प्राणशरीरयोः अन्नान्नादत्वेन परस्परप्रतिष्ठितत्वेन च यो वेद, तस्येदं व्रतम्, **अन्नं** पात्रे समुपनतम् अवरमपि न **परिचक्षीत** - न निराकुर्यादिति । अप्ज्योतिषोः अन्नान्नादत्वेन परस्परप्रतिष्ठितत्वेन दर्शनं तत्फलं च उच्यते **आपो वा** इत्यादिना । स्पष्टम् ।।

## नवमोऽनुवाकः

**अन्नं बहु कुर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।**

।। इति नवमोऽनुवाकः ।।

---

१. *कारणगुणाः कार्ये सङ्क्रामन्ति* इति न्यायेन इत्यर्थः ।

**प्र.दी. - अन्नं बहु कुर्वीत** इति । **अन्नं** प्रसिद्धमन्नम्, **बहुकुर्वीत** अतिथ्यभ्यागतस्वजनादिबहुजनोपयुक्तं कुर्यात् । **तद्व्रतम्** । **तत्** - बहुजनोपयोगकरणं, **व्रतम्** - उपासकस्य व्रतत्वेन उपदिश्यते । **पृथिवी वा अन्नम्** - पृथिवी अन्नम् इत्युच्यते । **आकाशोऽन्नादः** आकाशः अन्नादः इत्युच्यते । **पृथिव्याम् आकाशः प्रतिष्ठितः आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम्** पृथिव्याकाशयोः पूर्ववत् अन्नान्नादत्वात्, तदन्नं पृथिवीरूपमन्नं आकाशरूपान्ने प्रतिष्ठितम् । **स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । यः** - उपासकः, **एतत्** - पृथिवीरूपमन्नं, आकाशरूपान्ने प्रतिष्ठितमिति । **स य एतदन्नमन्ने प्रतितिष्ठतं वेद प्रतितिष्ठति । यः** - उपासकः, **एतत्** - पृथिवीरूपमन्नम्, आकाशरूपान्ने प्रतिष्ठितमिति **वेद** - जानाति, **सः अन्नवानन्नादो भवति** इत्यारभ्य **महान् कीर्त्या** इत्यन्तम् पूर्वानुवाके एव उक्तोऽर्थः ।।

**तै.भा. -** अत्र व्रतान्तरमाह - **अन्नं बहुकुर्वीत** इत्यादि । **अन्नं बहु कुर्वीत -** भूयिष्ठम् उत्पादयेत् बहुमन्वीत वा । समानमन्यत् ।।

**प्र. बहु कुर्वीति** इति । अतिथ्यभ्यागतस्वजनपर्याप्तं कुर्यात् इत्यर्थः । यद्वा **बहुकुर्वीति** बहुमन्वीत इत्यर्थः । अन्ने बहुमतिं कुर्यात् इत्यर्थः ।।

**कू.भा. -** एवम् अप्सु आदित्ये च स्थितं स्वात्मानमेव निषेधति योऽन्नं निषेधति । एवमध्यात्मम् अधिज्योतिषं चान्नं प्रतिष्ठितम् इत्युक्तम् । अथाधिलोकं वक्तुमाह **अन्नं बहुकुर्वीत** बहुकरणं सम्माननम् । अलिप्सापूर्वकं स्वीकृतेन अन्नेन तावन्मात्रे न पर्यवस्येत् । बहुमन्वीत च । अहो मया दिष्ट्या तल्लब्धं इत्याद्युपचाराश्च महता यत्नेन कर्तव्याः । विदुषोऽनुपालनीयं **तद्व्रतम्** यतः एवम् अन्नविस्तारः इत्यत्राह **पृथिवी वा अन्नं आकाशोऽन्नादः**। *हविषां परिणामोऽयं यदेतदखिलं जगत्, भूरग्नये पृथिव्यै स्वाहा* (महा.ना.उ.५९) इति हुतेन अन्नेन पृथिवीलोकात्मनोपस्थानं तद्देवतायाश्च अग्नेः, पृथिवी च अन्नमाकाशस्य, आकाशो हविर्भुजां लोकाशः । **पृथिव्यां** यत्र नारायणः । **आकाशाः प्रतिष्ठितः, आकाशे पृथिवी प्रतिष्ठिता** वृष्ट्यभावे लोकविनाशात् *देवान् भावयताऽनेन* (भ.गी.३-११) इत्यादेः । अतः व्याहृत्यात्मनावस्थितं स्वात्मानं बहुमनुते, योऽन्नं बहुमनुते । *यः पृथिव्यां तिष्ठन्* (बृ.उ.३७-३) *यः आकाशे तिष्ठन्* (बृ.उ.३-७-१२) इति स एव एकः एव । किंच पृथिव्याकाशयोः नित्योपजीव्यत्वात् तयोः बहुमानः कर्तव्यः । तद्बहुमानं न कुरुते योऽन्नं न बहुमनुते ।

एवम् अन्नायत्तत्वात् आध्यात्म्याधिज्योतिषाधिलोकानां सर्वस्य परमात्मोपासकस्य अन्नं बहुमानं कर्तव्यम् । **स य एतदन्नमन्ने प्रतिष्ठितं वेदे**त्यादि गतम् ।।

**आ.भा.** अब्ज्योतिषोः अन्नत्वेन अन्नादत्वेन परस्परप्रतिष्ठितत्वेन च उपासनं कुर्वाणस्य कर्तव्यतया व्रतविशेषम् उपदिशति **अन्नं बहु कुर्वीति** इति । **अन्नं** व्रीह्यादिकं ओदनादिकं वा यद्विधिवशात् उपनतं भवेत् तदल्पमपि **बहु** - पर्याप्तमिति बुद्ध्या सत्कुर्यात् । **तद्व्रतम्** अब्ज्योतिषोः अन्नत्वाद्युपासकस्य । अल्पीयस्यापि अन्ने पर्याप्तम् एतदिति संकल्प्य सहकृतम् उपासनं कार्यमित्येतत् । सम्प्रति पृथिव्याकाशयोः अन्नत्वादुपासनम् उपदिशति - **पृथिवी वा अन्नम्** इत्यादिना । **पृथिवी वा अन्नम्, आकाशोऽन्नादः** इति तयोः अन्नान्नादत्वदृष्टिः विधेया । **वा** शब्दात् आकाशोऽन्नं, पृथिवी अन्नादः इत्येवं वा दृष्टिः कार्या । उभयथा उपासना कार्या इत्येतदुक्तं भवति । पृथिव्याकाशयोः उभयोः अन्नत्वेऽन्नादत्वे च निमित्तं वक्ति **पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता** इति । यद् यत्र प्रतिष्ठितं तदन्नं प्रतिष्ठ आधारश्च अन्नाद इत्यवोचाम । कार्ये कारणं समनुगतं भवति आकाशश्च कारणं पृथिव्याः वाय्वाद्यनुक्रमेण तस्मात् **पृथिव्यां प्रतिष्ठितः** आकाशोऽन्नम्, पृथिवी तु अन्नादा इत्युक्तं भवति । तथा **आकाशेऽपि पृथिवी प्रतिष्ठिता** । कार्यस्य सूक्ष्मतया कारणेऽवस्थानात् अतः प्रतिष्ठितत्वात् पृथिवी अन्नम् इत्युच्यते । तस्याः प्रतिष्ठाधारत्वात् आकाशोऽन्नादः । एतयोः उभयोरपि अन्नत्वेन अन्नादत्वेन च उपासनं कार्यमिति फलति । तयोः परस्परप्रतिष्ठितत्वगुणकम् उपासनम् उपदिशति **तदेतदन्नम्** इत्यादि । **तत्** तस्मादन्नं पृथिवीरूपमन्ने आकाशात्मके प्रतिष्ठितम् । आकाशरूपम् अन्नञ्च पृथिवीरूपेऽन्ने प्रतिष्ठितं भवति पूर्वोक्तरीत्यैव । तस्मात् अनयोः परस्परप्रतिष्ठितत्वेन उपासनं विधेयमिति तात्पर्यम् । एवमुपासितुः उपासनफलं दर्शयति - **स य** इति । **यः** - उपासकः **एतत्** पृथिवीरूपम् अन्नम् आकाशेऽन्ने च प्रतिष्ठितं **वेद** समुपास्ते, आकाशरूपमन्नं पृथिवीरूपेऽन्ने च प्रतिष्ठितं वेद समुपास्ते **सः** उपासकः **प्रतितिष्ठति** चिरकालिकीं स्थितिम् इह लोके लभते दीर्घायुष्यः भवति इत्येतत् । प्रभूतान्नवान् तदुपभोगसमर्थश्च भवति । प्रजा-पशु-ब्रह्मवर्चोभिः श्रेष्ठश्च लोके भवति । कीर्तिशाली च भवति शब्दव्याख्या पूर्ववत् ।।

**सु.** - अप्ज्योतिषी अन्नान्नादत्वेन यः पश्यति तस्येदं **व्रतम्, अन्नं बहु कुर्वीत** - बहु मन्वीत इति । अथ पृथिव्याकाशयोः अन्नान्नादत्वेन दर्शनं तत्फलं च उच्यते - **पृथिवी वा** इत्यादिना । व्याख्यातप्रायम् ।।

## दशमोऽनुवाकः

[अन्नदानमाहात्म्यम्]

**न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नँराद्धम् । मुखतोऽस्मा अन्नँ राध्यते । एतद्वै मध्यतोऽन्नँ राद्धम् । मध्यतोऽस्मा अन्नँ राध्यते । एतद्वा अन्ततोऽन्नँ राद्धम् । अन्ततोऽस्मा अन्नँ राध्यते ।। १ ।।**

**प्र.दी. - न कञ्चन वसतौ प्रत्याचक्षीत** इति । परब्रह्मोपासकः, **वसतौ** स्वगृहे अन्नार्थमागतं **कञ्चन** कमपि मनुष्यं **न प्रत्याचक्षीत** निराकरणं न कुर्यात् । **तद्व्रतम् तत्** निराकरणाभावः एव ब्रह्मोपासकस्य, **व्रतम् -** व्रतमिति उपदिश्यते **तस्मादिति । तस्मात्** - अन्नार्थं स्वगृहम् आगतस्य सर्वस्य जनस्य अन्नदानस्यावश्य-कर्तव्यत्वात् । **यया कया च विधया** यया कया येन केन नीचवृत्त्यापि **बह्वन्नम्** - बहुजनोपयुक्तम् अन्नं, **प्राप्नुयात्** - संपादयेत् इत्यर्थः । **अराध्यस्मा अन्नमित्याचक्षते** - अस्मै उपासकाय एतदर्थमेव अन्नं **अराधि** - संसिद्धं उत्पन्नमिति **आचक्षते** ब्रह्मविदः वदन्ति । *राध्साध् संसिद्धौ* (धा.पा.१२६३) इति धातुः **एतद्वै मुखतोऽन्नँ राद्धम्** इति । अयम् उपासकः अन्नार्थं स्वगृहमागताय अतिथये मुखतः प्रेमपूर्वकगौरववाक्यपुरस्सरं यथा तथा अन्नं **राद्धम्** मुख्यया वृत्त्या पूजापुरस्सरं **अन्नं राद्धम्** - अन्नं प्रयच्छति ददाति । **मुखतोऽस्मा अन्नँराध्यते** अस्मै उपासकाय मुखतः मुख्यया वृत्त्या पूजादिगौरवपुरस्सरं **अन्नँ राध्यते** अन्नं संसिद्धं भवति । यथा स्वेनदत्तं तथा संप्राप्तं भवतीत्यर्थः । **एतद्वै मध्यतोऽन्नँ राद्धम् मध्यतोऽस्मा अन्नँ राध्यते** एतदन्नम् अतिथये, **मध्यतः -** पूजागौरवादिरहितमध्यया वृत्त्या **अन्नँ राद्धम्** - दत्तं, अस्मै उपासकाय गौरवादिकं विना **अन्नं राद्ध्यते** - सम्प्राप्तं भवति । यथा येन दत्तं तथा लभ्यते इत्यर्थः । **एतद्वै अन्ततोऽन्नँराद्धम्** इति । अयम् उपासकः अन्नार्थम् आगताय अतिथये **अन्ततः** नीचया वृत्त्या गौरवादिरहितमपि परिभवं कृत्वा, **अन्नं राद्धं** प्रयच्छति । **अन्ततोऽस्मा अन्नँ राध्यते** अस्मै उपासकाय अन्ततः नीचवृत्त्या गौरवादिरहितमपि परिभवसहितं यथा तथा, **अन्नं राध्यते** - संसिद्धं भवति ।।

**तै.भा. -** व्रतान्तरमाह - **न कञ्चन** इति । **वसतौ -** गृहे काले प्राप्तम् अन्नार्थिनं **न कञ्चन प्रत्याचक्षीत -** न निवारयेत्, तेभ्यः अवश्यमन्नं दातव्यम् इत्यर्थः । दरिद्रस्य कथं दानशक्तिः इत्यत्राह - **तस्मात्** इति । **तस्मात् -** अन्नस्य अवश्यं देयत्वात्

**यया कया च विधया** - येन केनचित्प्रकारेण अध्यापनादिना सिलादिनावा[१] इत्यर्थः। **अन्नं** - अन्नसाधनं व्रीह्यादिकं **प्राप्नुयात्** - सङ्गृह्णीयात् । तस्मात् अन्नवान् विद्वान् स अस्मै अन्नार्थिने **अन्नम् अराधि** - सिद्धम् इत्याचक्षते न तु नास्तीति ।

अथ प्रसङ्गात् सर्वायुषि अपि अन्नसिद्धये उपासात्रयमाह - **एतद्वा** इत्यादि । अत्र य एवं वेद इति सर्वत्र अनुषज्यते, **एतद्वै** - प्रसिद्धमन्नं **मुखतः** - सर्गादौ राद्धम् - सिद्धम् । यः एवं वेद । **अस्मै मुखतः** प्रथमे वयसि, **अन्नं राध्यते** - सिद्ध्यति । **मध्यतः** सर्गमध्यकाले मध्यमे वयसि । **अन्ततः** - सर्गान्ते, **अन्ततः** - चरमे वयसि । शेषं पूर्ववत् ।।

**प्र. - न कञ्चन वसतौ प्रत्याचक्षीत** इति । स्वगृहे रात्र्यादौ भोजनार्थम् आगतं कमपि नरं न निराकुर्यात् इत्यर्थः । **तस्मात्** इति । भोजनार्थम् आगतानां पुरुषाणाम् अप्रत्याख्यानस्य आवश्यकत्वात् निषिद्धेनापि येन [1]केनचिन्मार्गेण[1] बह्वन्नं सम्पादयेत् इत्यर्थः । **अराध्यस्मा** इति । **अस्मै** - उपासकाय अन्नम्, **अराधि** - सिद्धम् । उपासकार्थमेव हि अन्नस्य निष्पत्तिः । अतः तदर्थमेव निष्पन्नत्वात् अन्नानां तेषां येन केनापि उपायेन आर्जने न दोषः इति भावः । **एतद्वा** इति । आदिमध्यान्तप्रदेशेषु अन्नं यदेतत्सिद्धं, सर्वावयवयुक्तमपि अन्नम् अस्मै उपासकाय सिद्धं ; तदर्थमेव उत्पन्नमिति हि सन्तः आचक्षते इत्यर्थः ।

**य एवं वेद, सः यया कया च विधया बह्वन्नं प्राप्नुयात्** इति पूर्वेण सम्बन्धः ।।

**कू.भा.** - पुनश्च ज्ञानिनः व्रतमाह - **न कञ्चन वसतौ प्रत्याचक्षीत, तद्व्रतम्** - वसतिम् आगतम् अन्नापेक्षिणम् आचण्डालं प्रत्याख्यानेन न विमुखं कुर्यात् । *आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः* (रा.यु.१८-३०),

*अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।*

*स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ।।* (महा.भा.शां.१८४-१३)

*योगिनः विविधैः रूपैः* इत्यादि । अतः ब्रह्मणि प्रतिष्ठितस्य सर्वेषु आत्मसु स्वात्मानं परमात्मानम् अनुपश्यतः विदुषः अवश्यकर्तव्यात् नियमानाह **न कञ्चन** अविद्वांसमपि । **वसतौ** - वसत्यर्थम् आगतम् न **प्रत्याचक्षीत** - न प्रत्याख्यातं कुर्यात् । भगवदात्मकं

---

१. शिक्षणादिना वा इति स्यात् ।

1. केन मार्गेण - क,ख,च ।

सर्वं विजानन् यदि कञ्चन प्रत्याचक्षीत, भगवतः एव प्रत्याख्यानं कृतं स्यात् । तस्मात् **तद्व्रतम् -** नियमं नानुष्ठेयम् । तस्मात् विदुषा न कश्चिदपि वासार्थी प्रत्याख्येयः । **तस्मात् यया कया च विधया -** येन केनापि प्रकारेण प्रतिषिद्धेनापि बह्वन्नम् सम्पादयेत् । अन्नहीनगृहे वासो न योग्यः । तथा *किं प्रथमां रात्रिमाश्ना* इति श्रुतेः । **अराद्धि -** सर्वत्र संसिद्धं **अन्नं** तत्सर्वम् । **अस्मै** विदुषः एव इत्याचक्षते । तदुक्तं एतद्वेदनमाहात्म्यात् सर्वावस्थासु सिद्धम् अन्नमिति ।।

**आ.भा. -** पृथिव्याः आकाशस्य च अन्नत्वाऽन्नादत्व-परस्परप्रतिष्ठितत्वरूपेण उपासकस्य कार्यतया व्रतविशेषं निर्दिशति **न कञ्चन** इति । **वसतौ** इति । सप्तमी निमित्तार्थिका, *चर्मणि द्वीपिनं हन्ति* इत्यादिवत्, वसतिनिमित्तमित्यर्थः । रात्रौ दिवा वा आतपवर्षादिप्रयुक्तमार्गगमनाऽनुपयुक्तकाले वासाय स्वगृहमागतं कञ्चन ब्राह्मणमारभ्य आचण्डालान्तं कमपि जनं **न प्रत्याचक्षीत -** न निषिद्धेत् वासदाने, बुभुक्षितस्य कृतनिवासस्य भोजनमपि आवश्यकम् इति तदपि देयमेव । अभुञ्जानस्य अतिथेः स्वगृहवासे गृहस्वामिनः दोषश्रुतेः । **तद् व्रतं** तस्य पृथिव्याकाशयोः अन्नत्वादिना उपासकस्य व्रतमेतत् कर्तव्यं वासार्थागतातिथ्याद्यनिवारणरूपम् । तस्मात् स्वगृहगतातिथ्याद्यनिवारणव्रतम् अनेन धृतम् । **तस्मात् यया कया च विधया** - येन केनापि उपायेन तत्तद्वर्णविहितवृत्तिषु अन्यतमया वृत्त्या याजनाऽध्यापनादिना **बहु** यावताऽन्नेन आतिथ्याद्यनिवारणरूपं व्रतं सम्पद्येत तावत् अधिकम् अन्नं व्रीहियवादिकं **प्राप्नुयात् -** समुपार्जयेत् । पर्याप्तम् अन्नसंग्रहं कुर्यात् इत्येतत् । बह्वन्नसङ्ग्रहे श्रुतिः धर्मज्ञानां विदुषां व्यवहारं प्रमाणत्वेन दर्शयति **अराध्यस्मा अन्नम्** इति । **अस्मै** समागताय अतिथये अन्नम् **अराधि** - सिद्धं किमिति स्वभार्यादिकं प्रति **आचक्षते -** वदन्ति । यद्वा यदस्माकम् अन्नं सिद्धं तदस्मै एव अतिथये इति वदन्ति । न तु अतिथिं निराकुर्वन्ति धर्मतत्त्ववेत्तारः । अयं व्यवहारः पुरातनः आयाति धर्मविदाम् । तस्माद् **बह्वन्नं** सङ्गृह्णीयात् इति भावः । एवम् अन्नं यादृशवृत्त्या यदा च ददाति तदा तादृश्या एव वृत्त्या दत्तमन्नं दानकर्तुः कृते समुपतिष्ठते इत्युपदिशति **एतद्वै मुखतः** इत्यादिना । **एतदन्नं राद्धं** - सिद्धं **मुखतो** मुख्यया वृत्त्या याजनादिकया सत्कारपूर्वकं यदि अतिथये तदा **मुखतो मुख्यया एव** वृत्त्या, **अस्मै** - अन्नदात्रे तदन्नं **राध्यते** - समुपतिष्ठते । **मध्यतः-** मध्यमया वृत्त्या, **राद्धं** - सम्पादितं **यदन्नं** - दीयतेऽभ्यागतजनाय तदन्नं मध्यमयैव वृत्त्या अस्मै अन्नदाय उपतिष्ठते । **अन्ततः** जघन्यया वृत्त्या, **राद्धं** सम्पादितं यदन्नम् अभ्यागताय दीयते तद**न्नम्**

**अन्ततः** जघन्यया एव वृत्या अस्मै अन्नदाय समुपस्थितं भवति । यथावृत्ति यथोपचारं च अतिथये अन्नदानं कृतं भवेत् तथावृत्ति तथोपचारमेव असौ दाता लभते, जन्मान्तरे इति भावः ।।

**सु.** - पृथिव्याकाशे अन्नान्नादत्वेन पश्यतः इदं व्रतम्, **न कञ्चन** पथिकम् अन्यं वा निजवसतिम् उपागतं **वसतौ** - निवासे विषये **प्रत्याचक्षीत** निराकुर्यात् इति । निजवसतिम् उपगतश्चेत् अप्रत्याख्येयः, स भोजयितव्यश्च । तदर्थं **बह्वन्नं यया कया च विधया** मुख्येन गौणैन वा प्रकारेण **प्राप्नुयात्** - सम्पादयेत् इत्येतत् । मुख्यः प्रकारः याजनादिः, गौणश्च इतरः । धर्मज्ञाः हि एवम् आचक्षते - **अस्मै** - वसतिम् अभ्यागताय अस्मै, **अन्नं राद्धम्** - निष्पन्नम्, यत् नः सदने निष्पन्नम् अन्नं तन्न नः अर्थे निष्पन्नम् , अपि तु अतिथ्यभ्यागतजनाय एव निष्पन्नम् इत्याचक्षते इति यावत् । तस्मात् वसतिम् उपागतः अवश्यं भोजयितव्य इति भावः । मुख्यमध्यमाधमभेदेन या इयम् अन्ननिष्पत्तिः भवति सर्वाऽपि सा अतिथ्यभ्यागतजनाय एव इत्याह - **एतद्वै मुखतः** इत्यादिना । **मुखतः** प्रधानतः, प्राधान्येन यदेतत् अन्नं **राद्धम्,** तदपि अस्मै **राध्यते** । **यन्मध्यतः,** तदपि अस्मै । **यदन्ततः** कनिष्ठतः, तदपि अस्मै । यदन्नं निष्पद्यते जगति सर्वम् अतिथ्यभ्यागतजनैकशेषभूतं धर्मज्ञाः मन्यन्ते इति यावत् ।।

**[आध्यात्मिक-आधिदैविकोपासनानि]**

**य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथदैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति ।। २ ।।**

**यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान्भवति । तन्मन इत्युपासीत । मानवान् भवति ।। ३ ।।**

**तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे यश्चासावादित्ये । स एकः ।। ४ ।।**

**प्र.दी. - य एवं वेद** इति । **यः** - उपासकः अन्नदानमाहात्म्यम्, **एवम्** - पूर्वोक्तप्रकारेण, **वेद** - जानाति । सः येन केनापि हेतुना बह्वन्नवान् भवति इति पूर्वेण

अन्वयः । **क्षेम इति वाचि** इत्यादिना ब्रह्मोपासकस्य ब्रह्मविषयकोपासनाप्रकारान् आह कथमिति चेत् उच्यते । **क्षेम इति वाचि** - वाचः क्षेमसाधनत्वात् परब्रह्म वाचि स्थित्वा क्षेमं करोति इति । वाचि परब्रह्मदृष्टिः कर्तव्या । वाचि परब्रह्म स्थित्वा, **क्षेमः** - प्राप्तस्य परिरक्षणं करोति इत्युपासनं कर्तव्यम् । **योगक्षेम इति प्राणापानयोः ।** प्राणापानयोः परब्रह्म स्थित्वा, **योगक्षेम इति ।** अप्राप्तप्राप्तिः **योगः**, प्राप्तस्य परिरक्षणं **क्षेमः ।** एतौ करोतीत्यनुसन्धानं कर्तव्यम् । प्राणापानयोः परब्रह्मयोगक्षेमरूपेण तिष्ठति इत्युपासनं कर्तव्यम् । **कर्मेति हस्तयोः** - पाण्योः परब्रह्मकर्मरूपेण स्थित्वा कर्म कारयति इति बुद्धिः कर्तव्या । एवं करोति इति परब्रह्मोपासनं कर्तव्यम् । **गतिरिति पादयोः** - परब्रह्म **पादयोः गतिरिति** गमनरूपेण स्थित्वा, सञ्चलयति इत्युपासनं कर्तव्यम् । पादयोः परब्रह्म स्थित्वा सञ्चारयति इत्यर्थः । **विमुक्तिरिति पायौ** - अपानमार्गे स्थित्वा परब्रह्म विमुक्तिः इति मूत्रपुरीषोत्सर्जनं कारयति इत्यर्थः । **इति मानुषीः समाज्ञाः ।** इत्येवं पूर्वोक्ताः **मानुषीः** - मानुषेषु भवाः मानुषीः **समाज्ञाः** - सम्यक् आज्ञायन्ते इति समाज्ञाः । ज्ञानानि उपासनानि इत्यर्थः । **अथ दैवीः ।** अनन्तरं **दैवीः** - देवतासम्बन्धीनि **समाज्ञाः** - उपासनानि उच्यन्ते । **तृप्तिरिति वृष्टौ ।** परब्रह्म **वृष्टौ** - वर्षे तृप्तिः इति । अन्नाद्युत्पत्तिद्वारा सर्वभूततृप्तिरूपेण वर्तते । **बलमिति विद्युति** - तटित्सु परब्रह्म, **बलमिति** - शीघ्रस्फुरणरूपेण वर्तते ।

**यश इति पशुषु** - गवाश्वादिषु परब्रह्म यशोरूपेण वर्तते इति । **ज्योतिरिति नक्षत्रेषु** - तारकासु परंब्रह्म, **ज्योतिरिति** - कान्तिरूपेण वर्तते इत्यनुसन्धानं कर्तव्यम् । **प्रजातिरमृतमानन्द इत्युपस्थे** - परब्रह्म उपस्थेन्द्रिये विद्यमानं सत् **प्रजातिरमृतम्** - प्रजात्या संतत्या *अपुत्रस्य गतिर्नास्ति* इति श्रुत्या अमृतत्वप्राप्तिहेतुसन्तानं च पुत्रकर्तृकऋणविमोचनद्वारा, **आनन्दः** - सुखं च ददाति इत्यर्थः । **सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति ।** सर्वं आकाशे प्रतिष्ठितम् यत्सर्वं हि आकाशे प्रतिष्ठितं तत्सर्वं आकाशं च ब्रह्मैव तत्प्रतिष्ठा इति उपासीत । **तत्** - परब्रह्म सर्वस्य **प्रतिष्ठाभूतमित्युपासीत** - उपासनं करोति । **प्रतिष्ठावान् भवति** - प्रतिष्ठागुणयुक्तपरब्रह्मोपासनात् ब्रह्मणि प्रतिष्ठावान् भवति ब्रह्मणि स्थितः भवति इत्यर्थः । *तं यथा यथोपासते तथैव भवति* (मुद्ग.उ.३) इति श्रुत्यन्तरम् । **तन्मह इत्युपासीत । तत्** - परब्रह्म **मह इत्युपासीत** - महत्त्वगुणवत् इति उपासीत सः **महान् भवति** - महत्त्वगुणयुक्तः भवति । **तन्मन इत्युपासीत । तत्** - परब्रह्म **मन इति** - मननयोग्यम् इति उपासीत । सः **मानवान् भवति** - मननसमर्थः भवति ।

**तन्नम इत्युपासीत** - अत्र नमःशब्देन नमनम् उच्यते । **तत्** - परब्रह्म नमनगुणयुक्तमिति उपासीत । **नम्यन्ते अस्मै कामाः । अस्मै** - उपासकाय, **कामाः** - काम्यन्ते इति कामाः, सर्वे भोग्यविषयाः नम्यंन्ते मामेव स्वीकुरु इति प्रह्वीभावं प्राप्नुवन्ति **तद्ब्रह्मेत्युपासीत । तत्** - जगत्कारणत्वेन प्रसिद्धं वस्तु, **ब्रह्मेत्युपासीत** - बृहत्त्वादिगुणयुक्तमिति उपासीत । **सः ब्रह्मवान् भवति** - बृहत्वादिगुणयुक्तपरब्रह्मसदृशः भवति । **तद्ब्रह्मणः परिमर इत्युपासीत** । परितः म्रियन्ते अस्मिन् परब्रह्मणि विद्युद्वृष्टिचन्द्रमादित्याग्नयः इत्येताः पञ्च देवताः इति । **परिमर इति**[1] - सर्वभूतलयकर्तृत्वं ब्रह्मणः अस्तीति **उपासीत** - उपासनं कुर्यात् । **पर्येणं म्रियन्ते द्विषन्तः सपत्नाः ।** अत्र **परि एनं म्रियन्ते द्विषन्तः सपत्नाः** इति च्छेदः । **एनं** - एतादृशम् उपासकं प्रति ये **द्विषन्तः** - द्वेषं कुर्वन्तः । **सपत्नाः** - शत्रवः, ये वर्तन्ते ते **परिम्रियन्ते** - प्राणान् परित्यजन्ति इत्यर्थः । **ये अप्रियाः** - अस्य **भ्रातृव्याः** - ज्ञातयः शत्रवश्च अद्विषन्तः अपि ते च **परिम्रियन्ते** - परितः प्राणान् त्यजन्तीत्यर्थः । **स यश्चायं पुरुषे यश्चासावादित्ये स एकः । आदित्ये** - सूर्ये च **पुरुषे** - जीवे च, अन्तर्यामितया वर्तते, **सः** - प्रसिद्धः अन्तर्यामी परमात्मा एकः एवेत्यर्थः । एतत्सर्वभूतोपलक्षणं सर्वभूतान्तरात्मा परमात्मा एकः एवेति यावत् ।।

**तै.भा.** - पुनरपि उपासनभेदानाह - **क्षेम** इत्यादि । वाचि क्षेमः उपासनपरिरक्षणं तिष्ठति इत्युपासीत इत्यर्थः । क्षेमवान् भवति इति फलवाक्यम् ऊह्यम् । **प्राणापानयोः** योगक्षेमौ स्तः इत्युपासीत योगक्षेमवान् भवति । अपूर्ववद्द्रव्यलाभः योगः, तत्परिपालनं क्षेमः । एकवद्भावे पुल्लिङ्गश्छान्दसः । **हस्तयोः कर्म** तिष्ठति इत्युपासीत । शुभकर्मवान् भवति । **पादयोः गतिः** अस्ति इत्युपासीत । गतिमान् भवति । **पायौ** - गुदे **विमुक्तिरिति** उपासीत । सुखविरेचनवान् भवति । उक्तोपासनानि उपसंहरति **इति** इति । **मानुषीः** - मानुष्यः मनुष्यपरिकरसम्बन्धीनि इत्यर्थः । **समाज्ञा** - उपासनानि उक्तानि इति शेषः । **अथ दैवीः ।** दैवपरिकरसम्बन्धिन्यः उपासाः प्रस्तूयन्ते इत्यर्थः ।

---

१. तथा च श्रुत्यन्तरम् - *अयं वै ब्रह्म योऽयं पवते । तमेताः पञ्चदेवताः परिम्रियन्ते विद्युत् वृष्टिश्चन्द्रमा आदित्योऽग्निः ।* (ऐ.ब्रा.४०-५-२८) इति ।
भट्टभास्करस्तावत् - *परितः सर्वतः म्रियन्ते सर्वेऽप्यस्मिन् इति वा परिमरः महार्थसंहारः परं ब्रह्मण आकारः । यद्वा प्रपञ्चब्रह्मणः परितो नाशः परिमरः* इत्यर्थं कृतवान् ।

**वृष्टौ** - वर्षे, **तृप्तिः** अस्तीति उपासीत, तृप्तिमान् भवति । **विद्युति** - तटिति **बलम्** अस्तीति उपासीत, बलवान् भवति । **पशुषु** - अजादिषु यशः अस्ति इत्युपासीत, यशस्वी भवति । यागसम्बन्धित्वात् पशूनां दैवत्वम् । **नक्षत्रेषु ज्योतिः** अस्तीति उपासीत, ज्योतिष्मान् भवति । **उपस्थे प्रजातिः** - प्रजा, **अमृतम्** अमृततुल्यम्, **आनन्दश्च** स्तः इत्युपासीत । प्रजातिमान् अमृतानन्दवांश्च भवति । प्रजालाभस्य परलोकसाधकत्वात् दैवत्वम् । **आकाशे सर्वम्** जगत् अस्तीति उपासीत, सर्ववान् भवति । अथ आकाशप्रसङ्गात् तदभेदोपासनानि उपदिश्यन्ते - **तत्** इत्यादि । सर्वत्र तच्छब्दात् आकाशम् उच्यते । तत् आकाशं **प्रतिष्ठेत्युपासीत, प्रतिष्ठावान् भवति ।** अन्यत् अतिरोहितार्थम् । **नम्यन्ते** उपनीयन्ते । काम्यन्ते इति **कामाः** - भोग्यविषयाः । **ब्रह्म** - वेदः । **ब्रह्मणः** - ब्रह्मसम्बन्धी **परिमरः** । बह्वृचब्राह्मणे *अयं वै ब्रह्म, योऽयं पवते । तमेताः पञ्च देवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः* (ऐ.ब्रा.४०-५-२८) इत्येताः इत्युक्तपञ्चदेवताः परिम्रियन्ते तस्मिन्निति । **परिमरः** वायुः एनम् उपासकं **द्विषन्तः** - द्वेषपूर्वं, **सपत्नाः** - शत्रवः, **परिम्रियन्ते** - नश्यन्ति । णत्वं छान्दसम् । **परि ये अप्रियाः भ्रातृव्याः** - ज्ञातयः, दुर्योधनादितुल्याः तेऽपि परिम्रियन्ते । एवं जगत्कारणं निरतिशयानन्दं ब्रह्म, इत्युपदिश्य तत् ज्ञानं च परमाकाशप्राप्तिप्रतिपादनस्य फलं इति सङ्ग्रहेण उक्त्वा ब्रह्मज्ञानिनः आनुषङ्गिकफलानि नियमविशेषान् प्रासङ्गिकोपासनविशेषांश्च बुभुक्षोः अपेक्षितान् प्रतिपाद्य पूर्वोक्ते ब्रह्मज्ञानतत्फले विवक्ष्यति - **स यश्चायम्** इत्यादि ।।

**प्र. - क्षेम इति** इत्यादि । क्षेमसाधनत्वात् वाचः, क्षेमत्वबुद्धिः तत्र कार्या इत्यर्थः । एवम् उत्तरत्रापि । **विमुक्तिः** - विसर्गः इत्यर्थः । अध्यात्मम् एताः उपासनाः उक्ताः इत्यर्थः । **अथ दैवीः** दैविकीः उपासनाः वक्ष्यामि इत्यर्थः ।

**प्रजातिः** इति । एतत्तु आध्यात्मिकोपासने सङ्गतम्, पाठक्रमात् अर्थक्रमस्य बलवत्त्वात् इति द्रष्टव्यम् । **सर्वमित्याकाशे** इत्यादि । आकाशस्य [1]प्रतिष्ठितत्वादि[1]गुणयुक्ततया उपासते । तत्क्रतुन्यायेन प्रतिष्ठादिकं भवति इत्यर्थः । **ब्रह्मवान्** - [2]बृहत्त्ववानित्यर्थः[2] । **नम्यन्ते** - प्राप्यन्ते इत्यर्थः । परितः म्रियन्ते अस्मिन् इति **परिमरः** । सार्वत्रिकमरणस्यापि अवकाशतया [3]आश्रय[3] इत्यर्थः । एवम् आकाशस्य ब्रह्मशेषत्वेन परिमरत्वेन च उपासने, **एनम्** - उपासकं परितः द्विषन्तः म्रियन्ते इत्यर्थः ।

---

1. प्रतिष्ठात्वादि - ग,घ । 2. ब्रह्मत्ववानित्यर्थः - ग,घ । 3. श्रूयते - ग ।

**पर्येणम्** इति णत्वं छान्दसम् । तदेव व्याचष्टे **परि येऽप्रियाः** इति । अप्रियाः, **भ्रातृव्याः** शत्रवः परितः वर्तमानाः म्रियन्ते इत्यर्थः ।।

**कू.भा.** - य एवं वेद तस्यापि सर्वकालेषु अन्नं सुसिद्धं स्यादिति भावः । विदुषः अनुसन्धानविशेषैः सुखविशेषान् दर्शयति **क्षेम इति । क्षेमः** - सुखम् । एवम् उपासीनः स्वयं क्षेमवान् **योग इति** योगिवाग्घेतुत्वात् सुखानां प्राणापानयोः योगक्षमौ अनुसन्धेयौ । अलभ्यलाभः योगः । तद्धेतुः प्राणः । लब्धस्य पालनं क्षेमः । उपसंहाररूपत्वात् तद्धेतुः अपानः । क्षेम इति मध्यमपदलोपिसमासेन उभयोपदेशात् एकवचनम् । हस्तयोः कर्म इति बोद्धव्यम् । अप्राप्तस्य प्रापणकर्मनिमित्तं हस्तौ । गतिनिमित्तं पादौ । विमोचनस्थानं पायुः । एवं बुद्ध्यमानानां तत्र तत्र तत्कार्यं निरतिशयं भवतीति भावः । **इति मानुषीस्समाज्ञाः । मानुषीः** - मनुष्यशारीरावयवगताः । **समाज्ञाः** - ज्ञानविशेषाः । भगवदाज्ञाप्रायाः इत्यर्थः ।

**अथ दैवीः** - दिव्याः अमानुष्याः समाज्ञाः प्रकाश्यन्ते । **तृप्तिरिति वृष्टौ** - तृप्तिहेतुः वृष्टिः । **बलमिति विद्युति** - बलवन्मेघसङ्घट्टजन्मा विद्युत् । **यश इति पशुषु** - यशोहेतवः पशवः; क्षीरादिप्रदानेन । **ज्योतिरिति नक्षत्रेषु** - नक्षत्रशब्देन सूर्याचन्द्रमः प्रभृति तेजःपदार्थाः उच्यन्ते । ज्योतिः प्रकाशनहेतुः । **प्रजातिरमृतमानन्द इत्युपस्थे । प्रजातिः** - जन्म, **अमृतम्** - अमृतत्वं मोक्षः, **आनन्दः** - सुखं, एतत्सर्वं उपस्थे बोद्धव्यम् । उपस्थनियमनात् अमृतत्वसिद्धेः । **सर्वमित्याकाशे** - आकाशे सर्वमिति बोद्धव्यम् । आकाशस्य अर्वाचीनसर्वहेतुत्वात् ।

आनन्दमयस्य सर्वहेतुत्वात् तस्मिन् अपेक्षितं सर्वम् अनुसन्धेयं इत्याह - **तत्प्रतिष्ठेत्युपासीत** - प्रतिष्ठाहेतुत्वात् । एवम् उपासीनः **प्रतिष्ठावान् भवति । तन्मह इत्युपासीत** तदेतत् ब्रह्म, महः महत्वं पूजा वा **महान् भवति** - परमपूज्यः भवति । **तन्मन इत्युपासीत । मनः** - मननं, बहुमानः वा । तद्धेतुरपि ब्रह्मेति बोद्धव्यम् । **मानवान् भवति** - आनन्दाभिमानवान् भवति । **तन्नम इत्युपासीत** - नमनं प्रह्वीभावः । तद्धेतुरपि ब्रह्मेति बोद्धव्यम् । **नम्यन्तेस्मै कामाः** - काम्यन्ते इति कामाः । सर्वे कामाः अस्मै स्वयमेव नमन्ते । *न दुह स्नुनमाम्* (पा.सू.३-१-८९) इति छान्दसत्वात् न प्रवर्तते । **तद्ब्रह्मेत्युपासीत । ब्रह्म** - तद्ब्रह्म बृह्मणम् इति बोद्धव्यम् । **ब्रह्मवान् भवति** - बृहत्वगुणयोगिसर्ववान् स्यात् । **तद्ब्रह्मणः परिमर इत्युपासीत** - सर्वतः म्रियन्ते सर्वेऽपि अस्मिन् इति **परिमरं** विरोधिविनाशकम् उपासीत ।

एवम् उपासीनं **एणं** - एनम् । च्छान्दसं णत्वम् । **द्विषन्तस्सपत्ना:** - द्वेष्टारः शत्रवः । एणं परि लक्षीकृत्य, परितः वा । **परि ये भ्रातृव्याः** - ये चान्ये **अप्रियाः, भ्रातृव्याश्च** परितः ये वर्तन्ते ते सर्वे च म्रियन्ते । परी इति दीर्घश्छान्दसः ।

उक्तसर्वार्थे हेतुमाह - **स यश्चायं पुरुषे यश्चासावादित्ये** इत्यादि । **आदित्ये** इति दिव्यानां पदार्थानाम् पुरुषे इति मनुष्याणां च उपलक्षणम् । **एकः** प्रधानः, उभयत्र एकः एवेति ।।

**आ.भा. - य एवं** अन्नदानमाहात्म्यं, **वेद** - जानाति, सः अन्नदानमाहात्म्यज्ञानी एवं प्रोक्तम् एव फलं लभते । तस्मात् सति सम्भवे मुख्यया एव वृत्त्या अन्नं सम्पाद्य देशकालपात्रश्रद्धासत्कारसमन्वितम् अन्नदानं कर्तव्यमिति फलति ।

अतःपरं विद्याङ्गभूतानि एव अपराणि आध्यात्मिकाधिदैविकानि उपासनानि निर्दिशति । लब्धपरिरक्षणं **क्षेमः** । तत्साधनं **वाक्** । वाचा हि लब्धस्य परिरक्षणं क्रियते । उपघातकनिवारणादिना । तस्मात् वाचि क्षेमदृष्टिः कार्या । क्षेमत्वेन वागालम्बनम् उपासनं विधेयम् इत्येतत् । अत्र उत्तरत्र च उपासीत इति पदाध्याहारः । अलब्धवस्तुलाभः **योगः** । लब्धपरिरक्षणं **क्षेम** इत्युक्तमेव । प्राणापानौ च तत्साधनभूतौ । तदभावे योगक्षेमयोः अपि असम्भवात् तस्माद् योगक्षेमबुद्ध्या प्राणापानौ समुपासीत । हस्ताभ्यां कर्म निर्वर्त्यते । अतः **हस्तौ** कर्मसाधनभूतौ कर्मसाधनत्वादेव हेतोः **हस्तयोः** कर्मत्वेन उपासना कार्या । पादाभ्यामेव कश्चित् क्वचिद् गन्तुमर्हति । पादेन्द्रियविहीनस्य गत्यदर्शनात् अतः पादसाध्यगतित्वेन पादोपासनं विधेयम् । पायुः गुदं मलविमोचनसाधनं हि पायुरेव । पायुसाध्यविमुक्तित्वेन पायूपासना कर्तव्या । **इति मानुषीः समाज्ञाः** । **इति** शब्दः मानुषोपासनासमाप्तिसूचकः । मानुषीरिति द्वितीया प्रथमार्थे, छान्दसत्त्वात् । समाज्ञाशब्दः उपासनार्थकः, **मानुषीः** इति मनुष्यशरीरसम्बन्ध्यर्थकम् । **इति** वागादिसम्बन्धिवागाद्यालम्बनानि मनुष्यसम्बन्धीनि आध्यात्मिकानि उपासनानि समाप्तानि इत्यर्थः । **अथ दैवीः** । **अथ** शब्दः मानुषोपसनानन्तर्यम् उपस्थापयति । **दैवीः** - आधिदैविकीः । समाज्ञाः इत्यस्य अनुकर्षः कथयामि इति पदाध्याहारः । मानुषोपासनाकथनानन्तरम् आधिदैविकीः समाज्ञाः कथयामि इति वाक्यार्थः । ताः एव वदति **तृप्तिः** इत्यादिना । वृष्ट्या अन्नानि भवन्ति । ततश्च **तृप्तिरिति** - तृप्तिसाधनता परम्परया **वृष्टौ** भवति । तस्मात् तृप्तिदृष्टिं वृष्टौ कुर्यात् । तृप्तित्वेन वृष्ट्युपासनं विधेयम् इत्येतत् । अत्रापि सर्वेषु उपासनवाक्येषु उपासीत इति पदाध्याहारः

कार्यः । **बलमिति** पराभिभवहेतुः सत्त्वम् उच्यते । **विद्युति** - समुदीयमानायाम् अन्यानि तेजांसि चाक्षुषादीनि दृश्यन्ते अभिभूयमानानि । तस्मात् अभिभवहेतुसत्वाश्रयत्वात् बलत्वेन विद्युतः उपासनं कार्यम् ।

पशवः गवाश्वादयः, ते च दुग्धघृतादिद्वारा यज्ञसाधनभूताः । यज्ञेभ्यश्च यशः उत्पद्यते कर्तुः । तस्मात् पशवः परम्परया यशोहेतवः । अतः **पशुषु** यशोदृष्टिः विधेया । यशस्त्वेन पशूपासनं विधेयम् इत्येतत् । **नक्षत्राणि** - तारकाः **ज्योतिः** - प्रकाशः । अस्ति च ज्योतिः तारकेषु साध्यसाधनभावः तेनैव, **नक्षत्रेषु** ज्योतिष्ट्वेन उपासना विधेया इति । **प्रजातिः** - प्रजननं पुत्रादिस्वरूपम् । **अमृतम्** - पैतृकऋणविमोचनद्वारा अमृतत्वसाधकम् । **आनन्दः** क्षुद्रं सुखं क्रियानिवृत्तिप्रयुक्तम् । तदेतैः साध्यसाधनभावः उपस्थेन्द्रियस्य । ततः हेतोः उपस्थे प्रजातित्वामृतत्त्वानन्दत्वैः त्रिभिः अपि धर्मैः उपासना कार्या । सर्वाश्रयत्वात् आकाशं सर्वम् इत्युच्यते । अतः सर्वत्वेन आकाशोपासनं विधेयम् ।

सम्प्रति प्रतिष्ठात्वादिगुणकतया आकाशोपासनानि विधीयन्ते । तत्फलं च तत्क्रतुन्यायेन प्रतिष्ठादिकम् एव इति च प्रदर्श्यते **तत्प्रतिष्ठा** इत्यादिना । तदाकाशं प्रतिष्ठा सर्वाधारः, तस्मात् प्रतिष्ठात्वेन रूपेण आकाशम् उपासीत । **प्रतिष्ठावान् भवति** - प्रतिष्ठात्वगुणकाकाशोपासनावान् लोके प्रतिष्ठामधिकं लभते इत्येतत् । **तन्मह इत्युपासीत** - तदाकाशं **महो** महत्वगुणयोगात् महस्त्वेन रूपेण आकाशोपासना विधेया । तत्फलं वक्ति **महान् भवति ।** यो महस्त्वेन आकाशम् उपास्ते सः लोके **महान्** पूज्यः भवति । **तन्मन इत्युपासीत** - तदाकाशं मनस्त्वेन उपास्यम् । तत्फलमाह **मानवान् भवति ।** संमानम् अस्य लोकाः कुर्वन्ति यः मनस्त्वेन आकाशम् उपास्ते मननसमर्थः भवतीति वा । **तन्नम इत्युपासीत ।** तदाकाशं नमनगुणविशिष्टतया आकाशोपासकाय सर्वे कामाः मनोरथाः **नम्यन्ते** - स्वयम् उपनताः भवन्ति । उपतिष्ठन्ति इत्येतत् । **तद्ब्रह्म इत्युपासीत । तद् ब्रह्म** - बृहत्त्वगुणयोगात् आकाशे ब्रह्मत्वेन उपासनं कार्यम् । तत्फलमाह **ब्रह्मवान् भवति ।** यो ब्रह्मत्वेन आकाशम् उपास्ते बृहत्वगुणयोगविशिष्टः भवति । **तद्** - आकाशं, **ब्रह्मणः** - परमात्मनः, **परिमरः** - परिम्रियन्ते अस्मिन् इति परिमरः संहरणसाधनं । तच्च वायुरेव ब्रह्मणः अस्ति । *वायुर्वाव संवर्गः* (छां.उ.४-३-१) इति श्रुतेः । ब्रह्मणः परिमरत्वेन आकाशम् उपासीत इत्यर्थः । तत्फलं दर्शयति - **पर्येणम्** इति । णत्वं छान्दसम् । **एनम्** - उपासकं, **परि** - सर्वतः वर्तमानाः द्वेषं कुर्वन्तः **सपत्नाः** - शत्रवः, ते सर्वेऽपि **म्रियन्ते ।** ये च प्रसिद्धाः **अप्रिया भ्रातृव्याः** शत्रवः द्विषन्तः ते अपि म्रियन्ते । बाह्याभ्यन्तर सर्वशत्रुप्रणाशः फलम् अस्याः उपासनायाः इत्येतत् ।

एवं प्रसङ्गप्राप्तानि विद्याङ्गभूतानि उपासनानि प्रदर्श्य सम्प्रति स *यश्चायं पुरुषे यश्चासौ आदित्ये* इति ब्रह्मवल्ल्युक्तम् आनन्दमयमेव प्रकृतं परमात्मानं श्रीरामम् उपासनीयतया प्राधान्येन समुपदिशति **यः** परमात्मा आनन्दमयः, **पुरुषे** - पुरुषस्य हृदयगुहायां वर्तते, **यश्चासावादित्ये** - सूर्यमण्डलमध्यस्थं, रामं सीतासमन्वितम् इति आगमप्रतिपादितः श्रीरामः आदित्यमण्डलस्थः, **स एक** - एकः एव आनन्दमयः एवासौ नान्यः ।।

**सु. - य एवं वेद** - वसतिमभ्यागताः अवश्यमन्नदानेन सत्कर्तव्याः इति, सः यया कयाचन विधया बह्वन्नं प्राप्नुयात् इति पूर्वेण सम्बन्धः । अथ उपासनान्तराणि उपदिश्यन्ते, शरीरप्राणजलतेजःपृथिव्याकाशानि उपास्यत्वेन पूर्वं प्रस्तुतानि, तदनुबन्धीन्येव इह उपास्यतया प्रस्तूयन्ते इति पूर्वेण सङ्गतानि एतानि । तत्र वागादीनि शरीरानुबन्धीनि, जलानुबन्धिनी वृष्टिः, तेजोऽनुबन्धिविद्युदादि, पृथिव्यनुबन्धिपश्वादि, आकाशं च तदेव । वाचि क्षेमदृष्टिं कुर्यात् , वाचा हि क्षेमः । एवं साध्यसाधनभावसम्बन्धेन तत्र तत्तद् दृष्टिविधिर्बोध्यः । **मानुषीः समाज्ञाः** - वागादिशरीरालम्बनानि उपासनानि । **अथ दैवीः** - अधिदैवम् उपासनानि इत्युच्यन्ते इति यावत् ।

**यश इति पशुषु** - पशवः यजनसाधनम् , यजनेन च यशः । पशवः पृथिव्यां जाताः इति पृथिव्यनुबन्धिनः । **ज्योतिः** इति **नक्षत्रेषु** इत्येतत् । **बलमिति विद्युति** इत्यनेन आधिदैविकेन सङ्गतम् । **उपस्थे** इत्येतत् मानुषे सङ्गतम् । **सर्वमित्याकाशे** - सर्वस्य मूर्तजातस्य आकाशेन सम्बन्धात् । **तत्** - आकाशं **प्रतिष्ठेत्युपासीत** - सर्वमूर्तप्रतिष्ठास्पदत्वात् , अप्रकम्पत्वेन प्रतिष्ठात्वगुणयोगाद्वा । प्रतिष्ठात्वेन च उपास्ते सः तत्क्रतुन्यायात् प्रतिष्ठावान् भवति । एवं महत्त्वगुणयोगात् मह इत्युपासीत, सः **महान् भवति । मन इत्युपासीत** - मननसाधनत्वगुणविशिष्टम् उपासीत सः **मानवान्** मननसमर्थः भवति । **तत्** - आकाशं **नम इत्युपासीत** - नमनगुणविशिष्टतया उपासीत । **अस्मै** - उपासकाय सर्वे कामाः **नम्यन्ते** - स्वयम् उपनमन्ते इत्येतत् । **तत् ब्रह्मेत्युपासीत** - बृहत्वगुणयोगात् । **सः** - उपासकः **ब्रह्मवान्** - बृहत्त्वगुणयोगवान् भवति । परितः म्रियन्ते अनेन इति **परिमरः** - संहरणसाधनम्, ब्रह्मणः यत् संहरणसाधनं वायुः सोऽयम् इत्युपासीत । **एनं द्विषन्तः सपत्नाः परितो म्रियन्ते । ये च अप्रियाः** सपत्नाः तेऽपि म्रियन्ते । प्रसक्तानि उपासनान्युपदिष्टानि । अथ यत् प्रधानप्रकृतं परब्रह्म, तदुपासनम् उपदिशति **स यश्चायम्** इत्यादिना । आनन्दवल्ल्याम् आनन्दमयं

परमात्मानं प्रस्तुत्य *स यश्चायं पुरुषे यश्चासावादित्ये* इति श्रुतम् , इहापि अन्नादिक्रमेण तेभ्यः विलक्षणं तदन्तरात्मभूतम् आनन्दस्वरूपं जगज्जन्मादिकारणतया दृष्टत्वेन यदुपश्रुतम् , तदेवाधिकृत्य श्रूयते **स यश्चायम्** इत्यादि । व्याक्यातम् एतत् ।।

[उपासनाफलम्]

**स य एवं वित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञान मयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत्साम‌गायन्नास्ते । हा३ वु हा३ वु हा३ वु ।। ५ ।।**

**अहमन्नमहमन्नमहमन्नम् । अहमन्नादोऽहमन्नादोऽहमन्नादः । अहँ श्लोककृदहँ श्लोककृदहँ श्लोककृत् । अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्योऽमृतस्य ना३ भा ३ इ । यो मा ददाति स इ देवा मा३वा ३ः । अहमन्नमन्नमदन्तमा३ द्मि । अहं विश्वं भुवनमभ्यभवा३म् । सुवर्णज्योतीः[1] । य एवं वेद ।। ६ ।। इत्युपनिषत् ।**

**राध्यते विद्युति मानवान् भवत्येको हा ३वु य एवं वेदैकं च ।। १० ।।**

**।। इकि दशमोनुवाकः ।।**

**।। इति भृगुवल्ली समाप्ता । समाप्ता च तैत्तिरीयोपनिषत् ।।**

**प्र.दी. - स य एवंवित्** इति । **यः** - उपासकः, **एवंवित्** - पूर्वोक्तं ब्रह्मोपासनं, **वेद** - जानाति, **सः** - पूर्वोक्तसर्वशत्रुशून्यवान् भवति इत्यर्थः । **अस्माल्लोकात् प्रेत्य** इति **अस्माल्लोकात् प्रेत्य** - प्रारब्धकर्मलब्धवर्तमानदेहत्यागानन्तरं यद्वा - प्राकृतलोकात् अर्चिरादिमार्गद्वारा लोकान्तरप्राप्त्यनन्तरं तं यथा यथोपासते इति, *यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति* (छां.उ.३-१४-१) इति यथाक्रतुन्यायेन पूर्वं ब्रह्मदृष्ट्या उपासिता उत्तरोत्तराधिकान्न-प्राण-मनो-विज्ञानादिलोकान् अतिक्रमति इत्याह **एतमन्नमयमात्मानमुपसङ्क्रम्य** इत्यादि । **एतम्** - प्रसिद्धम् , **अन्नमयमात्मानम्** - परमात्मानं ब्रह्मदृष्ट्या, उपास्ते परब्रह्म **उपसङ्क्रम्य** - *क्रमु आक्रमणे* इति धातुः । तत्समीपं गत्वा तेन सङ्गतः इत्यर्थः । अनन्तरं प्राणमय-मनोमय-विज्ञानमयमात्मसमीपं

---

१. सुवर्नज्योतीः इति शाङ्करपाठः । *सुवर्नज्योतीः सुवरादित्यो नकार उपमार्थे । आदित्य इव सकृद्विभातमस्मदीयं ज्योतीर्ज्योतिः प्रकाशः इत्यर्थः ।।* इति शङ्करभाष्यम् ।

गत्वा तैः सङ्गतः इत्यर्थः । अनन्तरम् **आनन्दमयमात्मानमुपसङ्क्रम्य** - अन्नमयविज्ञानमयादिभ्यः अधिकं अपरिमितानन्दविशिष्टं *आनन्दमयोऽभ्यासात्* (ब्र.सू.१-१-१३) इति सूत्रे भाष्यकृता प्रतिपादितं श्रियःपतिम्, **उपसङ्क्रम्य** - सम्यक् परमात्मसमीपं गत्वा इत्यर्थः । **इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्** इत्यादिना, परमात्मना श्रियःपतिना सङ्गतस्य मुक्तपरुषस्य वैभवमाह परमात्मानम् उपसङ्क्रम्य, **कामरूप्यनुसञ्चरन्** इत्यादिवाक्यैः एव परमात्मनः पृथक्त्वेन मुक्तपुरुषः स्थितः इत्युच्यते नत्वैक्यं प्राप्य इति गम्यते । *यथा प्रियया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति । तथा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्* (बृ.उ.६-३-२१) इति श्रुत्यन्तरप्रमाणात् । एतच्छ्रुत्युपबृह्मणं वाल्मीकिमहर्षिणा कृतं *एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः* (रा.यु.१-१४) इतिवत् । आनन्दमयात्मोपसङ्क्रमणं नाम आनन्दमयशब्दवाच्यश्रियःपतिना सम्परिष्वक्तः इति यावत् । प्राकृतस्त्रिया सम्परिष्वक्तः जनः तल्लाभात् अन्यत् किञ्चिदपि यथा न जानाति; तथा अपरिमितानन्दाप्राकृतदिव्यमङ्गलविग्रहयुक्तश्रियःपतिना सम्परिष्वक्तः मुक्तपुरुषः । आलिङ्गनानन्तरलब्धवैभवं वदति इयं श्रुतिः परब्रह्मविद्यासामर्थ्यात्, **इमान् लोकान्** - परिदृश्यमानसत्यलोकादिचतुर्दशभुवनेषु सञ्चरन् **कामान्नी** - कामतः सङ्कल्पमात्रेण आगतम् अन्नम् अस्यास्तीति कामान्नी कामरूपी - कामतः सङ्कल्पमात्रेण आगतानि देवमनुष्यादिरूपाण्यस्य सन्तीति कामरूपी सन् अनुचरन् *येन येन धाता गच्छति, तेन सह गच्छति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा सहस्रधा भवति* (छां.उ.७-२६-२) इत्यादि श्रुत्यन्तरप्रमाणाच्च कामरूपित्वाच्च श्रियःपतिम् अनुसृत्य श्रीअनन्तगरुडविष्वक्सेनादि नित्यमुक्तैः सह **सञ्चरन्** - गच्छन् एतत्सामगायन्नास्ते वक्ष्यमाण हा३ वु हा३ वु हा३ वु इति । अत्यन्तविस्मयपूर्वकवाक्यानि **गायन्** - गानं कुर्वन् आ हो बहुकालमारभ्य बद्धसंसारिणः मम ईदृशं भाग्यं जातमिति महादरिद्रः अकण्टकमहद्राज्यं लब्ध्वा यथा आनन्दयुक्तः भवति तथा अयं मुक्तपुरुषोऽपि परब्रह्मदत्तब्रह्मानन्दयुक्तः **आस्ते** - तिष्ठति ।

ब्रह्मोपसङ्क्रमणानन्तरलब्धपरब्रह्मभूतश्रियःपतिसादृश्यं स्वयमेव वदति इत्याह **अहमन्नमहमन्नमहमन्नम्** इत्यादिना । अत्रत्यः **अहं**शब्दः जीवशरीरकपरमात्मपरः, **अहमन्नमहमन्नमहमन्नम् । अहमन्नादोऽहमन्नादोऽहमन्नादः** इति । सर्वस्य ब्रह्मशरीरत्वात् । *अहं मनुरभवं सूर्यश्च* (ऋ.सं.४-२६-१) इत्यादि वामदेवाद्यनुष्ठानवत् अन्नान्नादावपि भोग्यभोक्तारौ च अहमेव सः । सर्वत्र त्रिरावृत्तिः बद्धसंसारी अहम् एतादृशः भवामि इति

विस्मयद्योतिकार्था इति ज्ञेया । अहँ **श्लोककृत्** इति त्रिरावृत्तिः, श्लोक्यन्ते श्लाघ्यन्ते इति श्लोकाः । श्लाघनीयजगद्रक्षणत्वादिगुणः । तद्विशिष्टः श्रियःपतिः । तत्सदृशः अहमस्मि । *सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तस्सर्वमहं सर्वं मयिसर्वं सनातने* (वि.पु.१-१९-८५) इत्यादिना श्रीप्रह्लादकृतभगवदनुभवसमये श्रीपराशरेण इयं श्रुतिः उपबृंहिता । **अहमस्मि प्रथमजा ऋतस्य** - सत्यस्य चेतनाचेतनात्मकप्रपञ्चसृष्टेः पूर्वं विद्यमानोऽहं । यद्वा *अहं मनुरभवं सूर्यश्च* इत्यादि वामदेवाद्यनुष्ठानवत्, **ऋतस्य** - प्रपञ्चसृष्टेः पूर्वं विद्यमानप्रथमजाः - चतुर्मुखश्च नव प्रजापतयश्च । अहं **पूर्वं देवेभ्योऽमृतस्य** मोक्षस्य प्रदानार्थं **देवेभ्यः पूर्वं** ब्रह्मरुद्रादिभ्यः पूर्वं नाभिरिव रथचक्रस्य नाभिरिव स्थितोऽहं, **यो मा ददाति स इ देव मा वा** । **यः** - उपासकः, **न च मां योऽभ्यसूयति** इति भगवद्गीतोक्तयोग्यशिष्याय, **मा** - मां, **ददाति** - एवं पूर्वोक्तभार्गवीब्रह्मविद्याप्रतिपाद्यं माम् उपदिशति इत्यर्थः । इच्छब्दः अनर्थकः । **सः मा** माम् **आवाः** - *वा गतिगन्धनयोः* (धा.पा.१०५०) मां प्राप्नोति इत्यर्थः । **अहमन्नमन्नमदन्तमाद्मि** इति । यः पुनः अन्यः शिष्येभ्यः अर्थिभ्यः मां एतद्ब्रह्मविद्याप्रतिपाद्यं मां अनुपदिश्य काले प्राप्तम् **अन्नमन्नं** समृद्धम् अन्नमदन्तं भक्षितवन्तम् अन्यं, **अहम् अद्मि,** - भक्षयामि नाशयामि इत्यर्थः । **अहं विश्वं भुवनमभ्यभवाम्** - **अहं** प्रळयकाले, **विश्वं भुवनम्** - सर्वं प्रपञ्चं **अभ्यभवाम्** - तिरस्करोमि लयं करोमि इत्यर्थः । **सुवर्णज्योतीः** - सुवर्णकान्तियुक्तदिव्यमङ्गळविग्रहयुक्तः अभवम् । *निरञ्जनः परमं साम्यमुपैति* (मुं.उ.३-१-३) इति मुक्तस्य भगवत्परमसाम्यापत्तियुक्तत्वात् । *जगद्व्यापारवर्जम्* (ब्र.सू.४-४-१७) *भोगमात्रसाम्यलिङ्गाच्च* (ब्र.सू.४-४-२१) इत्यादिसूत्रैः जगज्जन्मादिकारणत्व-लक्ष्मीपतित्व-अनन्तशायित्व-गरुडध्वजत्वादिरहितः चतुर्भुजत्वशङ्खचक्रादि दिव्यायुधदिव्याभरणदिव्यमङ्गळ-विग्रहयुक्तस्सन् सर्वव्यापारं करोति अयं मुक्तपुरुषः इत्यर्थः । *सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता* इति श्रुत्यर्थः अनेन अनुवाकेन विवृतः इति ज्ञेयः । **य एवं वेद । इत्युपनिषत्** । वल्लीद्वयविहिता उपनिषत् । परमात्मरहस्यज्ञानं **यः** - उपासकः **एवं वेद** - भृगुवत् *शान्तो दान्तस्तितिक्षुस्समाहितो भूत्वा* (बृ.उ.६-४-२३) इति श्रुत्या, तपः कृत्वा, **वेद** - जानाति । तस्य पूर्वोक्तं सर्वं फलं भवतीत्यर्थः ।।

**।। इति भृगुवल्ली प्रतिपदार्थदीपिका ।।**

**।। इति श्रीमच्छ्रीभाष्यं जगन्नाथाचार्यसूनु-रामानुजाचार्यकृतिषु तैत्तिरीयोपनिषत् प्रतिपदार्थदीपिका व्याख्या समाप्ता ।।**

**तै.भा.** - पुरुषहृदये सूर्यमण्डले च वर्तमानः **एकः** एकप्रकारः । **स य एवंवित्** । **सः अस्मात् लोकात् प्रेत्य** - गत्वा अन्नमयादिविभूतिकं ब्रह्म प्राप्य मुक्तस्सन् **इमान् लोकान्** - ब्रह्मलोकादिमनुष्यलोकपर्यन्तान् । भगवन्तम् अवतीर्णम् अनुसञ्चरन् **कामान्नी** - यथेष्टं **कामरूपी** - यथाभिलषितछत्रचामरादिपरिकरवेषधरः हर्षप्रकर्षबलात्कारेण **एतत्** वक्ष्यमाणं **साम** स्वानन्यार्हशेषत्वप्रख्यापिकां गतिं **गायन्** । परमे एव **आस्ते** यावत्कालं तदेव साम पठति **हा वु** इत्यादि । **हा** इत्येतदहो इत्यर्थकः विस्मयख्यापकं स्तोभः । विस्मयातिशयात् त्रिरुक्तिः, **अहमन्नं** - भगवतः भोग्यभूतः । पुत्र......भौमस्य ( ) अन्नमत्ति इत्यन्नादः, पचाद्यच् । भोग्यभूतस्य भगवतोऽनुभविता श्लोककृत् पद्यकृत् दासभूतः इत्यर्थः । पद्यकरणस्य दास्यचिह्नत्वात् *पद्य...... छेद* ( ) *उरोविन्यस्तम् अक्षरम् । तन्नामकरणं चेति दास्यमेतच्चतुर्विधम्* इत्युक्तेः । **ऋतस्य** - सत्यस्य जगतः **प्रथमजाः** - पूर्ववर्तिकारणम् इत्यर्थः । *जनसनेति विट्*, अनुनासिकः स्यात् इत्यात्वम् । **देवेभ्यः** - नित्यसूरिभ्यः पूर्वापूर्वभेदः **अमृतस्य** - मोक्षस्य **नाभिः** - नहनं प्राप्तिहेतुः । अत्र राजपुरुषे राजत्वनिर्देशवत् । शेषत्वज्ञापनाय सामानाधिकरण्यम्।

अथ भगवत्युपकारस्मृतिः मामेव ददाति सृष्टवान् । **स** इति । **स एव एवम्** इत्थं प्रकारेण **आवाम्** आसमन्तात् रक्षति स्म । लेटि छान्दसं रूपम् । एवं शब्दार्थं आह **अहम्** इत्यादि । **अहमन्नम्** - भगवद्भोग्यभूतोऽस्मि । अन्नं मा **अदन्तं** - भगवन्तम् **अद्मि** - अनुभवामि । **अहं सुवर्णज्योतिः** निर्मलज्ञानः भूत्वा **विश्वम् भुवनं अभ्यभवाम्** - ज्ञानद्वारा व्याप्तवानस्मि । **य एवं वेद** मुक्तैश्वर्यं जानाति तस्यापि उक्तं फलं भवति इत्यर्थः । **इत्युपनिषत्** रहस्यम् उक्तम् इति शेषः ।।

**।। इति भृगुवल्लीतैत्तिरीयभाष्यम् ।।**

**।। इति कौशिकगोविन्दराजस्य कृतौ वेदान्तहृदये**
**तैत्तिरीयोपनिषद्व्याख्याने प्रथमः प्रपाठकः ।।**

**प्र. - स यः** इत्यादि । पूर्ववदर्थः । एतत् वक्ष्यमाणम् इत्यर्थः । शिष्टं स्पष्टम् । **हा३ वु हा३ वु हा३ वु** इति स्तोभाक्षराणि[१] एतानि ।

---

१. सामवेदे ऋगक्षरव्याप्तसामभागपूरणार्थाः हाउ हाउ इत्यादयः शब्दाः स्तोभाः । इति यादवाभ्युदयव्याख्याने ।

**अहमन्नम्** इति । अत्र **अहं** शब्दः परमात्मपर्यन्तः । भोग्यभोक्तृवाच्यौ अन्नान्नादशब्दौ अपि तत्पर्यन्तौ । **श्लोककृत्** श्लोक्यन्ते इति श्लोकाः; श्लाघनीयजगद्रक्षणादिकृत् इत्यर्थः । **अहमस्मि** इति । **ऋतस्य** कर्मणः । **प्रथमजाः** - सर्गाद्यसमयः तत्परिपाककृत् इत्यर्थः । पूर्वं देवेभ्यः वर्तमानाः **अमृतस्य** - मोक्षस्य, **नाभिः** - रथचक्रस्य नाभिरिव आश्रयभूतः । **नाभा इ** इति गानकृतः विकारः । यो मां योग्याय शिष्याय **ददाति** - उपदिशति, स एव **मा** - मां, **अवाः** - अवात् प्राप्तः भवति । *वा गतिगन्धनयोः* (धा.पा.१०५०) इति हि धातुः । इच्छब्दोऽनर्थकः । **अहमन्नं** इति । अन्नशब्दितम् अचेतनम्, तद्भोक्तारं चेतनञ्च **अद्मि** - व्याप्नोमि । **अहं विश्वम्** इति । प्रळयकाले विश्वम् अभिभूतवान् अस्मि इत्यर्थः ।

**सुवर्णज्योतीः** इति । कमनीयदेदीप्यमानशरीरः भवति । **य एवं वेद । इत्युपनिषत्** । समाप्ता इति शेषः ।।

*क्षेमाय यः करुणया क्षितिनिर्जराणां*
*भूमावजृम्भयत भाष्यसुधामुदारः ।*
*वामागमाध्वगवदावदतूलवातो*
*रामानुजस्स मुनिराद्रियतां मदुक्तिम् ।।*

**।। इति भृगुवल्ली प्रकाशिका ।।**

**।। इति श्रीभगवद्रामानुजसिद्धान्तनिर्धारणसार्वभौम**
**श्रीमद्रङ्गरामानुजमुनिविरचिततैत्तिरीयोपनिषत्प्रकाशिका सम्पूर्णा ।।**

**कू.भा.** - एतद् ज्ञानवतः फलं दर्शयति **स य एवंवित्** । एवं विद्वान् । अन्नमयं प्राणमयं मनोमयं विज्ञानमयं च क्रमेण पूर्वं पूर्वं विहाय उत्तरमुत्तरं प्राप्य । **एतमानन्दमयमात्मानमुपसङ्क्रम्य** । **एतं** - पूर्वोक्तमहामहिमयुक्तमानन्दमयं निरवधिकातिशयम् आनन्दम् आत्मानं सर्वेषां व्याप्तारं धर्तारं नियन्तारं शेषिणं, **उपसङ्क्रम्य** - समीपं प्राप्य । प्रक्षीणाविद्याकर्मवासनारुचिप्रकृतिसम्बन्धः तत्प्रसादप्राप्तज्ञानबलैश्वर्य वीर्यशक्त्यादिगुणाकरः **इमान् लोकान्** - परावरान् अखिलान् लोकान् । **कामान्नी** - काम्यमाणसर्वभोगवान् । **कामरूपी** - यथेच्छाविशेषदिव्यशरीरवान् । **एतत्सामगायन्नास्ते** प्रकर्षेण सर्वकालं तत्सामगानेन चित्रीयमाणः आस्ते इति । तथा *स एकधा भवति द्विधा भवति त्रिधा भवति* (छां.उ.७-२६-२) *जक्षत् क्रीडन् रममाणस्त्रीभिर्वा यानैर्वा* (छां.उ.८-१२-३) *येन*

*येन धाता गच्छति तेन तेन सह गच्छति* (परमसंहिता) *तद्यथा तरुणवत्सा वत्सं वत्सो वा मातरं छाया वा सत्वमनुगच्छेत् तथा* इत्यादि । **हा३ वु हा३ वु हा३ वु** इत्यादि । अहं संसारी संकुचितज्ञानः त्वत्प्रसादेन भगवदानन्दं प्राप्तवानस्मि । हो अहो इति विस्मयते । विस्मयस्य निरवधिकातिशयत्वात् बहूक्तिः । *एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ* (पा.सू.८-२-१०७) इत्योकारेऽकारस्य प्लुतः । उकारस्य वकारोपसर्जनश्छान्दसः । **अहमन्नमहमन्नमहमन्नम्** इति आत्मनः भगवद्भोग्यतां दृष्ट्वा तृप्त्यतिशयेन माद्यति । **अहमन्नादोहमन्नादोहमन्नादः** इत्यादि भगवदानन्दस्य अहं भोक्ता अस्मीति असम्भवदर्थसम्भावनया आनन्दसमुद्रे निमज्जति । **अहं श्लोककृदहं श्लोककृदहं श्लोककृत् इति । अहं** - आनन्दमयस्य पुरुषोत्तमस्य **श्लोककृत्** - स्तोता संवृत्तः इति मन्यते । सर्वत्र अहो अहो अहो इत्यनुषञ्जनीयम् । तथा *तद्विप्रासो विपन्यवः* (सु.उ.६-२) इति । अनन्तरं **अहमस्मि प्रथमजा ऋतस्य** इति कल्याणगुणान् आनन्दमयस्य पुरुषोत्तमस्य प्राप्तस्य सर्वातिशयान् दुर्लभान् प्रदर्शयति । अहं, **ऋतस्य** आदरणीयस्य पुरुषोत्तमस्य **प्रथमजाः** - दिव्यसूर्याग्रगण्यः । **अस्मि** - प्रथमजातः प्रथमः जातः इति *जनसनखनक्रमगमो विट्* (पा.सू.३-२-६७) इति विट् । *विड्वनोरनुनासिकस्यात्* (पा.सू.६-४-४१) इत्यात्वम् । **पूर्वं देवेभ्यो अमृतस्य नाभिः** - न केवलमहं सूरिवर्यः अभवं, अपि तु देवेभ्यः ब्रह्मादिभ्यः **पूर्वं** - पूर्वोऽस्मि । व्यत्ययेन द्वितीया । **अमृतस्य नाभिः** - अमृतत्वस्य नाभिः । आधारः उपायः अभवम् । **यो मा ददाति स इ देवमावाः** .। **यः** - अस्मदाचार्यः मां ज्ञानेन भगवद्योग्यं कृत्वा भगवते ददाति, स एवम् उक्तप्रकारं **आवाः** - रक्षितवान् । अथवा **आवाः** - सर्वम् आवृणोति अन्यैः अनावृतम् । अहमपि तथा भूतोऽस्मि । सर्वत्र सामगानेन प्रीतिप्रकर्षेण क्षरात् अक्षारान्तप्राप्तौ तद्रागः तत्रैव वर्तते । **अहमन्नमन्नमदन्तमाद्मि** इति - आत्मभोग्यत्वम् आत्मनः भगवद्भोक्तृत्वं च पुनः पुनः अभिधाय आत्मानं स्तौति । **अहं विश्वं भुवनमभ्यभवाम्** - सर्वं भूतजातम् अहं अभिभवेयम् इति मुह्यति । *लेटोऽडाटौ* (पा.सू.३-४-९४) इत्यडागमः । सर्वाभिभवने निदर्शनमाह - **सुवर्णज्योतीः** - सुवर्णशब्दवाच्यं परमपदं, तत् ज्योतिरिव । इतिः इवार्थे ।

एतद्वेदितुः फलमाह - **य एवं वेद** इति । **इत्युपनिषत्** एवं विद्वान् आनन्दमयस्य परस्य ब्रह्मणः उपनिषीदति समीपं प्राप्नोति इत्यर्थः ।।

**।। इति भृगुवल्लीभाष्यम् ।।**

**।। इति कूरनारायणमुनिविरचितं तैत्तिरीयोपनिषद्भाष्यम् समाप्तम् ।।**

**आ.भा. - यः** - उपासकः **एवंवित्** - एवं पुरुषे आदित्यमण्डले च वर्तमानम् आनन्दमयम् आत्मानम् एकत्वेन वेत्ति-जानाति समुपास्ते **सः** - उपासकः **अस्माल्लोकात् प्रेत्य** - प्रारब्धकर्मपरिसमाप्तौ इमं लोकं परित्यज्य अर्चिरादिना मार्गेण निर्गम्य **अन्नमयमात्मानं** प्राप्य, ततः **प्राणमयं, मनोमयं, विज्ञानमयञ्चात्मानं** क्रमेण सम्प्राप्य, तदनन्तरम् **आनन्दमयमात्मानं** लब्ध्वा कृतार्थः सन् **कामान्नी** - कामम् अनुसृत्य अन्नं यस्यास्ति सः कामान्नी, यथाकामम् अन्नवान् । **कामरूपी** - कामम् अनुसृत्य रूपम् अस्यास्ति सः कामरूपी । इच्छानुसारं धृतरूपः सन् **इमान् लोकान्** - भूर्भुवःप्रभृतीन् **अनुसञ्चरन्** - परिभ्रमन्, तदीयसुखम् अनुभवन् इत्येतत् । **एतत्** - वक्ष्यमाणं, **साम** - सामविशेषं **गायन्** - समुच्चारयन् **आस्ते** भवति । *स एकधा भवति त्रिधा भवति* (छां.उ.७-२६-२) इत्यादि श्रुतेः कामरूपतायाः विदुषि बोधनाद् इच्छातः एवास्य सर्वाणि रूपाणि समुपतिष्ठन्ते । *सः यदि* पितृलोककामः स्यात् *सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ते* इति श्रवणात् सर्वलोकसञ्चारित्वम् इच्छामात्रादेव आनन्दमयपरमात्मज्ञानिनः भवन्ति इति ध्येयम् ।

**हा ३ वु** इत्यादीनि स्तोभाक्षराणि अहो इत्यर्थकानि । प्लुतत्वं त्रिरुच्चारणं च विस्मयातिशयख्यापनार्थम् । विस्मयश्च **अहमन्नम्** इत्याद्यस्मदर्थस्यैव अन्नत्वान्नादत्वादि-कीर्तनात् अस्मदर्थस्यैव अन्नत्वम् अन्नादत्वं च इत्युभयमपि लोकाप्रसिद्धत्वसङ्गतमिव आभाति । ततः अस्य सङ्कीर्तनं विस्मयजनकं भवति । **अहमन्नम्** इत्यादिरूपस्य अनुभवमेव प्रदर्शयति - परमात्मज्ञानी, **अहं** शब्दः परमात्मपर्यन्तार्थवाची । अन्नान्नाद शब्दौ अपि परमात्मपर्यन्तार्थवाचिनौ । सिद्धान्ते सर्वशब्दानां परमात्मपर्यन्तार्थवाचित्वं स्वीकृतमेव । परमात्मनः सर्वशरीरकत्वं तु *यस्यात्मा शरीरम्* (बृ.उ.मा.पा.५-७-२६) इत्यादि श्रुतिस्मृतिसिद्धम् अस्त्येव । ततः अहमन्नम् इत्यादि वाक्यार्थः अन्नशरीरकः अन्नाद-शरीरकश्च अस्मच्छरीरकः परमात्मा एवेति । अन्नादिसर्वपदार्थान्तर्यामित्वात् परमात्मनः । **अहं श्लोककृत्** इति । श्लोक्यन्ते कीर्त्यन्ते लोकैः उपगीयन्ते इति श्लोकाः । आश्चर्यकराणि कर्माणि लोकोत्तराणि भगवत्सङ्कल्पजानि जगतः सर्गस्थितिप्रलयरूपाणि । तान् श्लोकान् करोमीति **श्लोककृत्** आश्चर्यकरकर्मकर्ता **अहम्** अस्मदन्तर्यामी शेषी परमात्मैव । त्रिः उभयत्र कथितार्थस्य दृढत्वज्ञापनाय । दृश्यते च लोकेऽपि वस्तुदृढत्वाय पुनः पुनः कथनम् । शैली च एषा औपनिषदी यद् गम्भीरार्थस्य दार्ढ्याय पौनःपुन्येन कथनमिति । **अहमस्मि प्रथमजा** इति । **ऋतास्य** सत्यस्वरूपस्य मूर्ताऽमूर्तलक्षणस्य **प्रथमजा** - प्रथमं जातः हिरण्यगर्भः प्रथमः शरीरी इत्येतत् । अहमस्मि प्रथमजातः हिरण्यगर्भशरीरकः स एव

अस्मच्छरीरकः परमात्मा इत्यर्थः । **देवेभ्यः** शक्रादिहिरण्यगर्भान्तेभ्यः सर्वेभ्यः **पूर्वं** पूर्वकालीनोऽहम् अस्मच्छरीरकः परमात्मा एव अस्मि । **अमृतस्य** - मोक्षस्य, **नाभिः** - नाभितुल्याश्रयभूतश्च अस्मच्छरीरकः परमात्मैव । नाभिः इत्यस्य स्थाने **नाभा इ** इत्येवं विकृतगानप्रयुक्ता । **यः** - कश्चित् दाता गुरुर्वा **मां** - मच्छरीरकं परमात्मानं **ददाति** अर्पयति योग्याय शिष्याय इतरस्मै याचकाय वा स एव दाता गुरुर्वा मां मच्छरीरकं परमात्मानम् । **अवा** इति छान्दसः पुरुषव्यत्ययः । **अवात्** - प्राप्नोति । **अहमन्नमद्मि ।** **अन्नम्** - अचेतनम् अदनीयजातम् । **अहमद्मि** - अस्मच्छरीरकः परमात्मा एव अत्ति व्याप्नोति । **अन्नम्** - अचेतनभूतम् अदनीयम् अदन्तं भोक्तारमपि **अहमद्मि** - अस्मच्छीरकः परमात्मा व्याप्नोति । **विश्वं** - समग्रं **भुवनं** - लोकजातं प्रलयकाले **अहमभ्यभवाम्** - अस्मच्छरीरकः परमात्मैव अभिभूतवान् । परमात्मदर्शिनः ईदृशाः एव अनुभवाः भवन्ति । यस्तु अपरमात्मदर्शी तस्य तु अहम् अन्नम् अद्मि, अन्योऽपि अत्ति इत्यादयः अनुभवाः तद्वैलक्षण्यं प्रदर्शयितुम् अयम् उपक्रमः इति तात्पर्यम् ।

**यः** - उपासकः **एवं वेद** - ईदृशम् आनन्दमयं परमात्मानं प्रोक्तक्रमेण **वेद** - उपास्ते **सः** - उपासकः, **सुवर्णज्योतिः** - सुवर्णस्य ज्योतिरिव ज्योतिः यस्य तादृशः, तप्ततपनीयसदृशदेदीप्यमान-कमनीयविग्रहो भवति; गुणाष्टकविशिष्टस्वस्वरूपाविर्भाववत्वात् । **इत्युपनिषत्** । रहस्यभूता वारुणी भार्गवी विद्या समाप्ता इत्यर्थः । **इतिशब्दः** समाप्तिद्योतकः ।।

**।। इति भृगुवल्ली आनन्दभाष्यम् ।।**

**।। इति भगवद्रामानन्दाचार्यविरचितं तैत्तिरीयोपनिषद्भाष्यं समाप्तम् ।।**

**सु. - स एवं वित् अस्माल्लोकात् प्रेत्य ।** अन्नमयाद्यन्तर्यामिणम् आनन्दमयम् उपसङ्क्रामति इत्यानन्दवल्ल्याम् उक्तम् । तम् उपसङ्क्रान्तस्य यः फले विशेषः तं विस्तरेण वक्तुम् उपक्रमते **स एवं वित्** इत्यादिना **आनन्दमयमात्मानमुपसङ्क्रम्य** इत्यन्तेन । व्याख्यातम् एतत् । आनन्दवल्ल्याम् उपक्रमे *सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता* इति फले विशेषः सङ्क्षिप्य उक्तः, स एव इह विशिष्य उच्यते - **इमान् लोकान्** इत्यादिना । आनन्दमयं परं ब्रह्म उपसङ्क्रम्य **एतत् सामगायन् आस्ते ।** न च पुनरावर्तते नाम कर्मगत्या एव । अकर्मवश्यो हि अयम् । अनुसञ्चरति नाम इमान् लोकान् कामतः । सत्यसङ्कल्पो हि अयम् आविर्भूतस्वस्वरूपः । **कामान्नी कामरूप्यनुसञ्चरति ।** न तु कर्मनियन्त्रितः इव अकामान्नी अकामरूपी । *स एकधा भवति, त्रिधा भवति, स यदि पितृलोककामः स्यात् सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ते,*

(छां.उ.७-२६-२) इति च अन्यत्र श्रूयते । न च अयं तान् इमान् लोकान् अनात्मदर्शी इव स्वतन्त्रान् (ब्रह्मणः पृथग्भूतान्) अनुभवति । अपितु ब्रह्मणा सहैव ब्रह्मणः अविभक्तान् तत्प्रकारभूतान् एव । एतेन कथम् आनन्दमयम् आत्मानम् उपसङ्क्रान्तस्य एतल्लोकानुभवः इत्याशङ्का अपास्ता । एवमनुसञ्चरन् एतत् वक्ष्यमाणं **साम गायन् आस्ते । हा ३ वु** इत्यादि स्तोभाक्षराणि एतानि ।

अत्र **अहम्** इति आत्मना मुखेन (प्रकारेण) परमात्मा निर्दिश्यते । जातिगुणादिभिः प्रकारैः धर्मी इव । अयमेव अनुभवप्रकारः तत्त्वदर्शिनः आविर्भूतस्वरूपस्य समुचितः । सर्वमेव हि परमात्मनः प्रकारतैकस्वभावम् । सर्वशरीरी हि सः । अतो यथावस्थितरूपेण परमात्मानम् अनुभवतः वचनम् इदम् । यदन्नं यश्च अन्नादः तदुभयमहमेव - मच्छरीरकः अन्नादशरीरकश्च परमात्मा एव । तत् अहमेव अन्नम् अन्नादश्च । सर्वान्तरात्मभूतं सर्वैः प्रकारैः अवस्थितम् एकम् अपश्यन्तो हि व्यवहरन्ति अहम् अन्त्ता इदम् अन्नमिति । तत्त्वदर्शिनः तु अहम् अन्नम् अहम् एव अन्नादः इति । सर्वैः उपश्लोक्यमानानां सर्गाद्याश्चर्यकर्मणां च कर्ता अहमेव । त्रिरुक्तिः अनुभवदार्ढ्यं गमयति । उत्तरत्रापि अस्मत्पदेन परमात्मनः एव निर्देशः । **ऋतस्य** - सत्यभूतस्य मूर्तामूर्तलक्षणस्य **प्रथमजः** - प्रथमं जातः हिरण्यगर्भश्च अहमेव । **देवेभ्यः** सर्वेभ्यः पूर्वमेव अहमस्मि । **अमृतस्य** - मोक्षस्य **नाभिः** - नाभिरिव आश्रयभूतः अहमेव । **यः** - दाता **मा** - माम्, **ददाति स इत्** एव (इदित्यनर्थको निपातः) स एव **मा** - मां **अवाः** - प्राप्तो भवति । देयं गोभूहिरण्यादि परमात्मनः पृथग्भूतं मत्वा यो ददाति स परमात्मानं नाप्नोति, किन्तु परमात्मनः प्रकारतया पश्यन् देयं मामेव (परमात्मानमेव) मत्वा यो ददाति स माम् (परमात्मानं) प्राप्नोति । यद्वा यः गुरुः मां पात्राय शिष्याय ददाति स मां प्राप्तवान् । **अहमेवान्नम्** - अचेतनम् , अन्नमचेतनम् **अदन्तम्** - भोक्तारं चेतनं च **अद्मि** - व्याप्नोमि । चेतनाचेतनजातं मया व्याप्तमित्येतत् । अहमेव प्रळयसमये इदं **भुवनं अभ्यभवम्** - अभिभूतवान्, मयैव संहृतमित्येतत् । **य एवं वेद स सुवर्णज्योतिः** - कमनीयप्रकाशमानदिव्यरूपः भवति । **इत्युपनिषत्** - भार्गवी विद्या सेयं समाप्ता इत्येतत् ।।

**।। इति भृगुवल्ली सुबोधिनी ।।**

**।। इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण-**

**परमहंसवर्ययोगिराज श्रीगोपालानन्दस्वामिविरचितं तैत्तिरीयोपनिषद्भाष्यं समाप्तम् ।।**

* * *

# अ नु ब न्धाः

# १. मन्त्रसूचनी

* * *

# २. प्रमाणानाम् अकारादि सूचनी

* * *

## ३. तैत्तिरीयोपनिषदर्थसङ्ग्रहकारिकाः

[उत्तमूर् श्रीवीरराघवाचार्यविरचिताः]

वल्लीत्रयात्मके प्रश्ने प्रथमे ब्रह्मवर्चसम् ।
आनन्दमयविद्यैतदाश्रितञ्चोच्यते क्रमात् ।। १ ।।
प्रश्ने द्वितीये कथितो योगिनामाह्निकक्रमः ।
अनुस्यूतप्रधानार्थ एषोऽत्र बहुबोधिनि ।। २ ।।
शिक्षावल्ल्यां शान्तिपाठस्ततश्शिक्षार्थसङ्ग्रहः ।
कृतो वक्तुं संहितायामधिलोकाद्युपासनाः ।। ३ ।।
ऐश्वर्यशिष्यसम्पत्तिसहितं ब्रह्मवर्चसम् ।
प्रेप्सतः पठिता मन्त्राः प्रणवादेः समाश्रये ।। ४ ।।
व्याहृतीनां चतुष्केऽथ चतुर्धा दृष्टिरीरिता ।
यतस्स्याद्ब्रह्मसंवित्तिर्मोक्षस्वाराज्यमोदकृत् ।। ५ ।।
पाङ्क्तोपदेशस्सर्वत्र प्रणवस्य पुरस्क्रिया ।
स्वाध्यायादेश्च साहित्यं सर्वधर्मैस्तपो हि तत् ।। ६ ।।
वेदानुवचनं पश्चादन्तेवास्यनुशासनम् ।
शान्तिपाठः पुनरिति शिक्षावल्ल्यर्थसङ्ग्रहः ।। ७ ।।
आनन्दवल्ल्यामानन्दमयविद्योपदिश्यते ।
पञ्च भूतानि सृष्ट्वैष शरीरे पाञ्चभौतिके ।। ८ ।।
देहप्राणमनोजीवभिन्नो ब्रह्म तदन्तरः ।
आनन्दमय आस्ते, तमुपासीनो जगत्सृजः ।। ९ ।।
सर्वानन्दप्रदस्यैवमज्ञानां भयकारिणः ।
आविरिञ्चमलभ्यो यस्त्ववाङ्मनसगोचरः ।। १० ।।
तस्यानन्दस्तमत्यन्तमश्नुते परमे पदे ।
उपसङ्क्रम्य तं पुण्यपापभीतिहतेरिति ।। ११ ।।
जगज्जन्मस्थितिध्वंसहेतुत्वं लक्षणं विदन् ।
अन्नप्राणमनोजीवभिन्नं ब्रह्मेत्यवैद् भृगुः ।। १२ ।।
विद्याङ्गान्नव्रताद्युक्त्वा वल्ल्यामत्र तथाविदः ।
अन्नान्नादानन्दगानं कामानित्वादि चेरितम् ।। १३ ।।

* * *

# ४. इतरग्रन्थेषु तैत्तिरीयोपनिषद्विचारः

**तत्त्वसारे - जन्माद्यधिकरणम् (१-१-२)**

प्रथमाधिकरणे व्युत्पत्त्यभावः परिहृतः । अत्र प्रतिपत्तिदौस्थ्यं परिह्रियते । कारणत्वस्य विशेषणतया लक्षणत्वे विशेष्यब्रह्मनानात्वप्रसङ्गात्, उपलक्षणतया तत्त्वे च उपलक्ष्याकाराभावात् जन्मादिकारणत्वं ब्रह्मलक्षणं न भवति इति पूर्वपक्षे खण्डतादेः विरुद्धविशेषणस्य विशेष्यभेदापादकत्वेऽपि अविरुद्धविशेषणस्य श्यामतादेः विशेष्यभेदकत्वविरहेण विशेष्यनानात्वाप्रसक्त्या जन्मादीनां विशेषणतया लक्षणत्वं संभवति । निरतिशयब्रह्मत्वस्य उपलक्ष्याकारत्वसंभवात् उपलक्षणतयापि तेषां लक्षणत्वं संभवति इति, (लक्षणविरहात्) (लक्षणविरहप्रयुक्त) प्रतिपत्तिदौस्थ्यपरिहारसिद्धान्तम् अभिप्रयन् लक्षणवाक्यव्याख्यानभूतजन्मादि-सूत्रव्याख्यानात्मकभाष्यवाक्येषु अचिन्त्येत्यादि विस्तरस्य हेतुं प्रयोजनं च श्लोकद्वयेन आह भूतानि इत्यादिना । अस्य इत्युद्दिश्य सौत्रम् इत्यादिना च । (रत्नसारिणीव्याख्या)

भूतानीति पदेन वस्त्ववगतौ सत्यामिमानीति य-
द्गायन्त्यामखिलेश्वरोऽगणि जगज्जन्मादिभिर्लक्षणैः ।
तेनादर्शि विचित्रतैव जगतस्सृज्यस्य तेनापित-
त्स्रष्टुर्ब्रह्मण उज्ज्वला गुणगणा जिज्ञास्यताहेतवः ।। ८ ।। (तत्त्वसारः)

अत्र, यतो वा इमानि इत्यादिलक्षणवाक्ये यतो वा इत्यादिवाक्ये वस्त्ववगतौ कार्यवर्गविषयकशाब्दबोधे भूतानि इति पदेन सत्यां भूतानि इत्यनेन जातेऽपि । इमानि इति गायन्त्याम् - (इदम्पदप्रयोगवत्यां भृगुवल्ल्याम् इति शेषः) इदमुक्तवानिति शेषः । इमानि इति (इदंशब्दे) श्रूयमाण जगज्जन्मादिभिः आदिपदेन स्थितिलयौ उच्येते । लक्षणैः - असाधारणधर्मैः, अखिलेश्वरः पतिं विश्वस्य इत्युक्तः भगवान् । अगणि - अलक्षीति यत् तेन सृज्यस्य जगतः विचित्रता - उच्चावचप्रकारकत्वम् । अदर्शि एव अबोध्यत एव । यद्वा विचित्रता एव अबोध्यत न तु आभासता । तेनापि इत्यादि । तेन - जगद्वैचित्र्येण। तत्स्रष्टुः विचित्रजगत्कारणभूतस्य ब्रह्मणः । जिज्ञास्यतायाः उपास्यताप्रयुक्तविचार्यतायाः हेतवः तत्प्रयोजकप्राप्यतोपपादनेन प्रयोजकाः । उज्ज्वलाः सामान्यविशेषोत्सर्गापवादोपक्रमनयैः निषेधवाक्यानाम् अन्यपरत्वोपपादनेन निर्विघाततया श्रुतिषु प्रतीयमानाः । गुणगणाः - ज्ञानशक्त्यादिगुणानां गणाः समूहाः । (अदर्शिषत) अबोध्यन्त । अनुषक्तस्य अदर्शि इत्यस्य बहुवचनान्ततया विपरिणामः । कारणत्वश्रुत्यर्थापत्त्या गुणानाम् आक्षेपात् इति भावः ।।

अत्र वस्तुपदेन, श्रुतिगतभूतपदं भवनक्रियायोगिपरं न प्राणिमात्रपरम् इति सूचितम् । लक्षणैः इति सिद्धवन्निर्देशात् पूर्वोक्तपूर्वपक्षसिद्धान्तौ अपि सूचितौ । लक्षणभूतैः जन्मादिभिः इत्यन्वयात् समुदायो लक्षणमिति सूचितत्वात् निरतिशयबृहत्त्वसिद्धिः । विचित्रता अदर्शि एव इति योजनया अत्यन्तायोगव्यवच्छेदः प्रतीयते । अयोगस्य च प्रसक्तिः उद्देश्यविशेषणस्य (ग्रहैकत्वाधिकरणन्यायेन) (ग्रहाधिकरणोक्तन्यायेन) विवक्षितत्वात् न इदंपदेन विचित्रताबोधसंभवः इति । तद्व्यवच्छेदश्च ग्रहैकत्वादेः प्रापकवाक्यविरोधिनः त्यागेऽपि तदविरोधिनः अष्टत्वादेर्न त्यागः इति प्रकृते सृज्यवैचित्र्यस्य प्रापकवाक्यसिद्धत्वात् न तत्त्यागः इति । जिज्ञास्यताहेतव इति तु, तद्ब्रह्म तद्विजिज्ञासस्व इति द्वितीयतत्पदार्थः, मुमुक्षूपास्यत्वेन प्रकृते हि तच्छब्दार्थ इत्युक्तत्वात् । अतः (तद्) विजिज्ञासस्व इति न विचारस्य उपासनस्य वा विधिः इत्यनेन विरोधः नास्तीति मन्तव्यम् । जगतः इति सौत्रैकवचनम् अनुसृत्य उक्तम् । अखिलेश्वरः इति च भृगुवल्लीस्थलक्षणवाक्यैकवाक्यसत्यादिवाक्यस्थद्वितीयानन्तपदयोगरूढ्यर्थनिर्देशः इति ।।

यतो वा इत्यत्रस्थेमानीत्यस्य, तन्मूलकस्य सौत्रस्य अस्येति पदस्य च प्रयोजनकथनार्थं इदं अचिन्त्येत्यादि भाष्यम् । अयमर्थः - भूतशब्देन कार्यवर्गे अभिहिते अपि इमानि इति पदं, कार्यवर्गस्य धर्मिग्राहकप्रमाणसिद्धाकारविशेषपरं ; न तु जगतः आभासतापरम् । ब्रह्मणः जिज्ञास्यतानुपयोगित्वात् । वैचित्र्यपरम् इमानि इति पदम् ईदृशकार्यनिष्पादनानुगुणगुणोत्कर्षं ब्रह्म इति ज्ञापनार्थम् । श्रुतिवाक्यस्थ इदंशब्देन निर्दिशतः सूत्रकारस्यापि इयमेव विवक्षा इति भाष्यस्थाचिन्त्येत्यादिविस्तरस्य इदमेव मूलमिति । तदिदमाह अस्य इति ।

अस्येत्युद्दिश्य सौत्रं पदमथ तदचिन्त्यादिभाष्यं विवव्रे
तत्तन्मानप्रसिद्धं जगदभिदधती तद्विचित्रत्वमाह ।
श्रौती सौत्रीदमुक्तिस्त्विति हृदि निदधत्तत्र चाचेतनांशे
वैचित्रीमाह पूर्वं पदमथ नियतेत्यादिकं चेतनांशे ।। ९ ।।

ते ते मानेन प्रमाणेन प्रसिद्धाः धर्मिप्रतीतिदशायाम् एव प्रतीयमानाः यस्य तत्तथोक्तं । धर्मिग्राहकप्रमाणसिद्धाकारविशेषयुक्तम् इत्यर्थः । जगत् - भूतशब्दोक्तकार्यवर्गम् । अभिदधती शक्त्या बोधयन्ती । जगद्धर्मिग्राहकमानसिद्धाकारयुक्तम् अभिदधती इत्यन्वयः । श्रौती - यतो वा इत्यादि वाक्यस्था । सौत्री - जन्माद्यस्य यतः इति सूत्रस्था च । इदमुक्तिः । तुशब्दश्चार्थकः भिन्नक्रमेण योज्यः वैषम्ये वा । तुशब्दः ग्रहैकत्वव्यावृत्तम् अत्रत्योद्देश्यविशेषणमाह । इदमुक्तिः इमानि इति अस्य इति च इदंशब्दः, तस्य - जगतः विचित्रत्वम् आह इति हृदि

निदधत् अचिन्त्यादिभाष्यम् । अस्य इति सौत्रं पदम् उद्दिश्य व्याख्येयतया उपादाय तद्विवव्रे व्याचख्यौ । तत्र भाष्ये, अचिन्त्यविविधविचित्ररचनस्य नियतदेशकाल-फलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य इति भाष्यवाक्ये इत्यर्थः। पूर्वं पदं अचिन्त्यविविधविचित्ररचनस्य इति पदम् । अचेतनांशे कार्यवर्गैकदेशेषु अचेतनेषु वैचित्रीम् आह । अथ अनन्तरम् । नियतेत्यादिकं नियतदेशकालफलभोग-ब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य इति पदम् । चेतानांशे कार्यवर्गैकदेशेषु चेतनेषु वैचित्रीम् आह । तदिदम् आहुः व्यासपादाः तत्रं अचिदंशवैचित्र्यम् आह अचिन्त्येत्यादिना, अथ चिद्वैचित्र्यमाह नियतेति इति ।। (रत्नसारिणी)

**पाराशर्यविजये - जन्माद्यधिकरणम्**

तैत्तिरीये श्रूयते *यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्म* इति । अत्र संशयः किमिदं वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोति नेति ? तदर्थं जन्मादिकारणत्वे धर्मिभेदः प्रसज्यते नेति ? यदा धर्मिभेदः प्रसज्यते तदा *न तत्समश्चाभ्यधिकश्च दृश्यते* इत्यादिप्रतिप न्ननिस्समाभ्यधिकाद्वितीयवस्त्वसिद्ध्या तादृशवस्तुनः लक्षणतः प्रतिपत्तुम् अशक्यतया तत्र वेदान्तानां प्रामाण्यासम्भवेन ब्रह्मविचारो न आरम्भणीयः इति सिद्ध्यति । यदा धर्मिभेदः न प्रसज्यते तदा निस्समाभ्यधिकाद्वितीयवस्तुसम्भवेन तस्य लक्षणतः प्रतिपत्तुं शक्यत्वात् वेदान्तानां तत्र प्रामाण्यसम्भवात् आरम्भयोग्यः ब्रह्मविचारः इति सिद्ध्यति ।

अत्र व्यावृत्तिसमानाधिकरणव्यावर्तकधर्माणां स्वेतरधर्माश्रययावद्धर्म्यपेक्षया स्वाश्रयभेदकत्वस्य औत्सर्गिकतया जन्मादिकारणत्वैः धर्मिभेदः प्रसज्यते । न च दण्डकुण्डलकमण्डलुभिः अपि धर्मिभेदप्रसङ्गः, प्रत्यक्षेण तदपवादात् । मानान्तरागोचरे तत्र ब्रह्मणि न तथापवादः इति धर्मिभेदः प्रसज्यते एव । ननु माभूत् तर्हि कारणत्वं लक्षणम्, माभूवंश्च कारणत्वादयः धर्माः, येन उक्तदोषः प्रसज्यते। किन्तु प्रपञ्चगतजन्मादिकम् एव । लक्षणं हि नाम इतरव्यावृत्तवस्तुप्रत्यायकम्। ततश्च कः चन्द्रशब्दवाच्यः इति जिज्ञासायां शाखाग्रे चन्द्रः इति वाक्ये यथा शाखायाः उपलक्षणतया इतरव्यावृत्तवस्तुप्रत्यायकत्वम् ; एवमिहापि मुमुक्षुभिर्जिज्ञास्यं ब्रह्म किमिति जिज्ञासायां यतो वा इत्यत्र जन्मादेः उपलक्षणतया इतरव्यावृत्तवस्तुप्रत्यायकत्वम् अस्तु इति चेन्न। उपलक्षणत्वे हि ज्ञाताकारः, ज्ञाप्याकारः उपलक्षणम्, इत्याकारत्रयं वाच्यम्। यथा शाखोपलक्षणम्, ज्योतिर्मण्डलसम्बन्धितेजः पिण्डत्वं ज्ञाताकारः, चन्द्रशब्दवाच्यत्वं तत्र ज्ञाप्याकारः इति । इह च न ज्ञाताकारः

अस्ति, मानान्तरागोचरत्वात् । सत्यादिलक्षणवाक्यप्रतिपन्नस्य सत्यत्वादेः ज्ञाताकारता तु न सम्भवति । धर्मिभेदप्रसङ्गादेव, तत्रापि कथञ्चित् उपलक्षणत्वाङ्गीकारे तत्र ज्ञाताकारसिद्धये एतद्वाक्यस्य अपेक्षणीयत्वात् अन्योन्याश्रयः। किंच वेदान्तेषु निर्विशेषं हि वस्तु प्रतीयते। तत्र ज्ञाप्याकारश्च अनुपपन्नः। तस्मात् उपलक्षणत्वानुपपत्त्या जन्मादिकारणत्वानां नानात्वात् धर्मिभेदोऽवर्जनीयः इत्येवम् अखण्डार्थवादिकल्पितकुतर्कावलम्बनेन पूर्वः पक्षः ।

अखण्डार्थवाद्युक्तम् औत्सर्गिकत्वं निर्णिबन्धनम्। क्वचिद्दर्शनमात्रेण अङ्गीकारे अभेदकत्वमेव उत्सर्गः इति वैपरीत्यं किन्न स्यात् । तदङ्गीकारेऽपि न दोषः। एकेनैव तच्छब्देन व्यक्त्यैक्यस्वरसैकवचनान्तेन उपादानातिरिक्तस्य लयस्थानत्वासम्भवरूपतर्कसहकृतेन प्रतिनिर्देशेन अपवादात् । उपलक्षणत्वेऽपि न दोषः, लक्षणजिज्ञासाप्रयोजकज्ञानविषयाकारो हि ज्ञाताकारः, यथा ज्योतिर्मण्डलमध्यवर्तित्वम्। तज्ज्ञानादेव हि अस्मिन् ज्योतिर्मण्डले कः चन्द्र इति प्रश्नः। एवम् इहापि भृगुप्रश्नस्य मुमुक्षूपास्यताबोधनिबन्धनत्वात् तस्य एव ज्ञाताकारः। तथा प्रतिपन्ने वस्तुनि निरतिशयब्रह्मत्वं ज्ञाप्याकारः । वस्तुतस्तु उपलक्ष्योपलक्षण-रूपाकारद्वयमेव नियतम्। चन्द्रशब्दवाच्यं किंचिदस्ति इति एतावन्मात्रं जानतां प्रश्नोऽपि शाखाग्रे चन्द्रः इत्युपलक्षणदर्शनात् सविशेषमेव ब्रह्म वेदान्तैः प्रतिपाद्यते इति अभिप्रेतं प्रागेव अभिहितम् । अतो लक्षणतः प्रतिपत्तुं शक्यतया वेदान्तानां ब्रह्मणि प्रामाण्यसम्भवात् ब्रह्मविचारः कर्तुं योग्यः इति राद्धान्तः ।

वाक्यार्थस्तु अस्य चिदचिदात्मकस्य प्रपञ्चस्य, यतो जन्मादि तद्ब्रह्मजिज्ञासा कार्या इति । आदिपदेन स्थित्यादिपरिग्रहः । वाक्ये *यत्प्रयन्त्यभिसंविशन्ति* इत्यत्र प्रयन्ति सन्ति यदभिसंविशन्ति इति योजना । यद्यपि *यत्प्रयन्ति यदभिसंविशन्ति* इति यच्छब्दानुषङ्गेण लयस्थानत्वं मुक्तप्राप्यत्वं च उच्यते इति वक्तुं शक्यम् ; अभिसंविशन्ति इति बन्धकत्वम् उच्यते इति वा वक्तुं शक्यम् ; तथापि इमानि भूतानि इत्यत्र चिदचितोः विवक्षितत्वात् अचिदंशे मुक्तप्राप्यत्वान्वयासम्भवेन एकदेशान्वयः अस्वरसः । किञ्च प्रतिकार्ययत्पदावृत्तेः दर्शनेन प्रळयसंवेशनयोः भिन्नकार्यत्वे यत्प्रयन्ति यदभिसंविशन्ति इति यच्छब्दावृत्तिप्रसङ्गः । बन्धहेतुत्वार्थकत्वपक्षे सन्निहितयत्पदम् उल्लङ्घ्य व्यवहितस्य येन इति पदस्य अनुषङ्गः । संसारमभिसंविशन्ति इति कर्माध्याहारप्रसङ्गश्च । संविशन्ति इत्यस्य स्वापार्थकस्य बन्धपरत्वाङ्गीकारे लक्षणा, व्यवहितानुषङ्गश्च । तद्विजिज्ञासस्व तद्ब्रह्म इत्यत्र तत्तद्ब्रह्म इति विजिज्ञासस्व इत्यन्वयः । प्रथमतच्छब्दः यच्छब्दप्रतिनिर्देशकः, द्वितीयस्तु बुद्धिस्थमुमुक्षुजिज्ञास्यत्वपरामर्शी । मुमुक्षुभिः जिज्ञास्यत्वस्य बुद्धौ विपरिवृत्त्या खलु भृगुणा प्रश्नः कृतः ।

अत्र जन्मकारणत्वादीनि प्रत्येकमेव इतरव्यावर्तनसामर्थ्यता एव लक्षणानि इति केचिदाचार्याः । अपरे तु अधीहि भगवो ब्रह्मेति मुमुक्षुभिः जिज्ञास्यं ब्रह्म किमिति पृष्टे यद्युत्पत्तिकारणं ब्रह्म इत्युच्यते तदा शिष्यस्य स्थितौ कारणान्तरशङ्कया तस्यापि एतत्तुल्यताज्ञानेन जिज्ञास्यान्तरशङ्कया इदमेव जिज्ञास्यम् इति बुद्धि न स्यादिति श्रुतौ समुदायस्य एव लक्षणत्वाभिप्रायेण यच्छब्दावृत्तावपि तच्छब्दः एकः एवोक्तः। तदनुसाराच्च सूत्रेऽपि समुदायस्यैव लक्षणत्वं विवक्षितम् इति अनुगृह्णन्ति ।

यतः इति हेतौ पञ्चमी । न तु जनिकर्तुः प्रकृतिः इति अपादानसंज्ञानिबन्धनपञ्चमी। स्थित्यादिकर्तुः प्रकृतौ अपादानसंज्ञाया अविधानात्। ततश्च उपादानत्वकर्तृत्वयोः ग्रहः, विषयवाक्यानुसाराच्च । तत्र यद्यपि येन यदिति स्थित्यादिहेतोः पदान्तरेण निर्देशात् यतः इति जनिकर्तुः अपादानसंज्ञानिमित्ता पञ्चमी सम्भवति । अथापि यथाप्राप्त्यनुवादत्वात् सदेव इति ज्ञापकवाक्यानुरोधात् हेतौ एव । तत्र हि इदं सदासीत् स्याम् इति उपादनत्वं तदैक्षत असृजत इति कर्तृत्वं च प्रतीयते । किञ्च विषयवाक्यगत येन यदिति द्वितीयातृतीयार्थयोः सङ्ग्राह्यत्वाच्च अत्र हेतुपञ्चमी एव ग्राह्या इति ।

परे तु यतो वा इमानि भूतानि इति श्रुत्युक्तं ब्रह्मणः जगत्कारणत्वं लक्षणं सम्भवति नवा इति सन्देहे प्रपञ्चसत्यत्वे तेन निर्विशेषब्रह्मावगत्यसम्भवात्, मिथ्यात्वे कृतकत्वेन नित्यस्य इव तेन सत्यस्य ब्रह्मणः लक्षयितुम् अशक्यत्वात् न सम्भवतीति पूर्वः पक्षः ; मिथ्याभूतेनापि प्रपञ्चजन्मादिना निष्प्रपञ्चं ब्रह्म ताटस्थ्येन लक्षयितुं शक्यम्, यद्रजतम् अभात् सा शुक्तिः इतिवत्। एवमस्य शाखाग्रे चन्द्रमाः इतिवत् तटस्थलक्षणत्वेऽपि प्रकृष्टप्रकाशः चन्द्रः इति स्वरूपलक्षणेन स्वरूपविशेषावगमवत् *आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते* इत्यादिनिर्णयवाक्यावगतेन स्वरूपलक्षणेन ब्रह्मस्वरूपविशेषावगतिः भवति इति सम्भवति तटस्थलक्षणम् इति सिद्धान्तः इति ।

अपरे तु तद्विजिज्ञासस्व तद्ब्रह्म इति वाक्यस्थं ब्रह्म किं जीवः? उत विष्णुः ? इति चिन्ता । तदर्थं ब्रह्मशब्दस्य रूढ्यर्थजीवत्यागेन यौगिकार्थविष्णुग्रहणे हेतुः नास्ति उत अस्तीति तदर्थं विध्युद्देशस्थब्रह्मशब्दस्वारस्याय यतो वा इति पूर्ववाक्यं जीवे कथञ्चित् नेतुं शक्यम् उत अशक्यम् इति । पूर्वपक्षस्तु - जीव एव इदं ब्रह्म ब्रह्मजातिजीवेत्याद्यभिधानात् ब्रह्म शब्दस्य तत्र रूढेः, विष्णौ तु तस्य यौगिकत्वात्, योगात् रूढेः बलीयस्त्वात् ; न च जीवपरत्वे यतो वा इत्यादिपूर्ववाक्योक्तकारणत्वमेव बाधकम्, विध्युद्देशगतब्रह्मशब्दस्वारस्याय जीवस्यापि अदृष्टद्वारा तत्र हेतुत्वोपपत्तेः, इमानि इत्यनेन जीवकर्तृककार्यजातस्यैव निर्देशोपपत्तेश्च इति ।

सिद्धान्तस्तु विष्णुरेव जिज्ञास्यं ब्रह्म, विष्ण्वेकनिष्ठस्य कारणत्वस्य जिज्ञास्ये *यतो वा* इति श्रवणात्; तस्य जीवेऽनुपपत्त्या रूढेरपि बाधात्, अदृष्टद्वारा जीवकारणत्वे एव कारणत्वप्रतिपादनास्वारस्यात्, अभिसंविशन्ति इति पदोपस्थापितमुक्तप्राप्यत्वस्य च सर्वथानुपपत्तेः; इमानि इति सर्वनाम्नश्च सङ्कोचकाभावात्। किंच *तदेव ब्रह्म परमं कवीनाम्* इति श्रुतौ विष्णौ विद्वद्रूढिः उक्ता; न च स्वस्य अमुख्यत्वे मुख्यान्तरे वा सति स्वस्य परत्वम्, सा चासम्भाविताज्ञानमूला रूढ्यन्तरात् बलीयसी इति ।

अन्ये तु - जन्मादीनां वैय्यधिकरण्येन लक्षणत्वं न सम्भवतीति पूर्वपक्षं कृत्वा तेषां तटस्थलक्षणत्वं राद्धान्तयन्ति ।

इतरे तु जन्म च तदादिश्च तथा, सर्वः द्वन्द्वः विभाषैकवद्भवति इत्याहुः ।

अत्र विभक्तिविपरिणामेन ब्रह्मशब्दानुषङ्गः सर्वपक्षसाधारणः दोषः । *यत्प्रयन्ति यदभिसंविशन्ति* इति योजनोक्तदोषस्तु अपरान्येतरपक्षसाधारणः । किञ्च आद्ये पक्षे किं जिज्ञासासूत्रे सविशेषस्य जिज्ञास्यत्वम् उक्त्वा तस्य अत्र लक्षणम् उच्यते? उत निर्विशेषस्य ? नाद्यः, शास्त्रस्य सविशेषपरत्वप्रसङ्गात् ; लक्षणासम्भवपूर्वपक्षानुत्थानाच्च । न द्वितीयः, लक्षणस्यानाकाङ्क्षितत्वात्, कृत्स्नस्यापि मिथ्यात्वेन व्यावर्त्यासिद्धेः । मिथ्यावस्तुनो व्यावर्त्यत्वे तत्प्रयोजिकायाः विद्यमानतायाः लक्षणेऽपि सत्त्वात् लक्षणाक्षेपो न सङ्गच्छते । किञ्च दृगतिरिक्तस्य मिथ्यात्वेन दृशः सत्यत्वेन च ज्ञानात् दृग्रूपस्वरूपलक्षणं सत्यत्वेन मिथ्यावस्तुव्यावृत्तिश्च ज्ञाते एव इति कुतो लक्षणाकाङ्क्षा? विवरणमते प्रपञ्चमिथ्यात्वव्युत्पादनाय प्रथमसूत्रम्। वाचस्पतिमते साधनसम्पत्तिदशायाम् एव मिथ्यात्वं निर्व्यूढम् इति पूर्वपक्षश्च अनुपपन्नः । मिथ्यावस्तुनोऽपि विद्यमानतया लक्षणत्वसम्भवात्। अन्यथा लोकलक्षणस्यैव असिद्ध्यापातेन इह लक्षणापेक्षा कुतः स्यात् ? मिथ्यावस्तुनः व्यावर्तकत्वाभावे सिद्धान्ते ताटस्थ्योक्त्या कथं परिहारः? एतेन लक्ष्यसमसत्त्वस्यैव लक्षणत्वम् इत्यपि ध्वस्तम्, तटस्थलक्षणत्वस्यापि अभावप्रसङ्गादेव । शुक्तिरजतस्यापि तच्छुक्तिव्यावर्तकत्वम् अस्त्येव इति कथं मिथ्यावस्तुनः लक्षणत्वसम्भवः? दृष्टान्तश्च विषमः, कृतकत्वं हि नित्येन असम्बन्धात् न तदन्यस्मात् व्यावर्तयति । कारणत्वं तु ब्रह्मगतम् । तत् कथम् अन्यस्मात् न व्यावर्तयेत्? एवं सिद्धान्तोऽपि अनुपपन्नः, ताटस्थ्योक्तिवैय्यर्थ्यात् । नहि ताटस्थ्यं मिथ्यावस्तुनः लक्षणत्वोपपादकम्, किन्तु साक्षादसम्बन्धिनः । मिथ्यात्वे हि साक्षात् सम्बन्धवत् परम्परासम्बन्धोऽपि अनुपपन्नः एव । दृष्टान्तश्च विषमः, रजतभानविषयत्वस्य सत्यस्यैव शुक्तिस्वरूपलक्षणत्वात् । बाधानन्तरमपि शुक्तौ पूर्वरजतस्य विद्यमानतां ये

जानन्ति मिथ्यावादिनस्तेषां रजतमपि शुक्तिस्वरूपलक्षणमेव, शुक्तिस्वरूपसम्बन्धादितरस्मात् व्यावृत्तिबुद्ध्युपयोगाच्च । तस्मात्ताटस्थ्योक्तिर्व्यर्था । साक्षादसम्बन्धात् पूर्वपक्षकरणे हि ताटस्थ्योक्तिस्सफला स्यात् ।

ननु पूर्वपक्षे जगत्कारणत्वस्य ब्रह्मस्वरूपलक्षणत्वं न सम्भवति, तस्य मिथ्यात्वे ब्रह्मणो मिथ्यात्वप्रसङ्गात् । सत्यत्वे तस्य प्रपञ्चनिरूप्यत्वेन निरूपकसत्यत्वमन्तरेण निरूप्यसत्यत्वाप्रसिद्ध्या प्रपञ्चस्यापि सत्यत्वप्रसङ्गेन निर्विशेषस्वरूपलक्षणत्वासम्भवादिति विवक्षितम् । अतस्तटस्थलक्षणत्वेन परिहारः सिद्धान्ते युक्त इति चेन्न ; साक्षात्सम्बन्धि स्वरूपलक्षणम्, परम्परासम्बन्धविशेषवत् तटस्थलक्षणमित्येव विभागात् । नहि स्वरूपमेव लक्षणं सम्भवति। लक्षणं हि नाम पूर्वं स्वरूपे ज्ञातेऽपि इतरव्यावृत्त्यवबोधाय जिज्ञासायोग्यं वस्तु। न च स्वरूपं तादृशम् । स्वरूपस्य ज्ञानेनेतरव्यावृत्तिबुद्धौ लक्षणाकाङ्क्षाविरहात्, तज्ज्ञानेपि तद्बुद्धौ न व्यावृत्तिबुद्धये स्वरूपजिज्ञासा स्यात्, किन्तु धर्मजिज्ञासा । न च निरंशे ज्ञाताज्ञातस्वरूपद्वयं वक्तुं शक्यम् । किंचैवं पूर्वपक्षे सति निरूपकस्य मिथ्यात्वेऽपि निरूप्यसत्यत्वस्य प्रपञ्चाभावरूपे ब्रह्मण्यङ्गीकृतत्वेन तथैव परिहारे कर्तुं शक्ये सिद्धान्ते ताटस्थ्योक्तिर्व्यर्था । किञ्चात्र तटस्थलक्षणे एव सूत्रे शब्दतः प्रतिपन्नेऽपि स्वरूपलक्षणपरत्वं किमर्थमिष्यते? यदि परिमळोक्तरीत्या तटस्थेन शाखाग्रेण देशान्तरस्थवस्तुव्यावृत्तिसिद्धावपि तद्देशस्थनक्षत्राव्यावृत्तिवदिहापि कारणत्वेन शङ्कार्हवस्त्वन्तराद्व्यावृत्तिर्न सिद्ध्यतीति तदर्थं स्वरूपलक्षणेऽपि तात्पर्यमित्युच्येत, तदा तटस्थलक्षणं व्यर्थम् । ननु आनन्दाद्ध्येव खल्विमानि जायन्त इत्यानन्दस्य जगत्कारणतयोपदिष्टत्वात् तादृशस्वरूपलक्षणप्रतीत्यर्थमेव तटस्थलक्षणकीर्तनमिति चेन्न। तटस्थलक्षणप्रतिपन्नस्वरूपातिरिक्तस्वरूपस्य स्वरूपलक्षणेन प्रतिपत्तौ सद्वितीयत्वस्यावर्जनीयत्वात् । किञ्च कारणत्वस्यान्यत्र सम्भावनायामानन्दस्वरूपे कथं नान्यत्र सम्भावना? तेन विषमो दृष्टान्तः, प्रकृष्टप्रकाशत्ववदन्यत्र सम्भावनाविरहासिद्धेः । किंच तटस्थलक्षणेन स्वरूपप्रतिपत्तिरस्ति न वा? नान्त्यः, लक्षणत्वस्यैवाभावप्रसङ्गात् । आद्ये किमर्थं स्वरूपलक्षणम्? इतरव्यावृत्तिबुद्धिजननार्थमिति चेत्? किमस्याः प्रतीतेः पूर्वप्रतीतिवैलक्षण्यम्? पूर्वाप्रतीतानन्दत्वगोचरतेति चेद्धन्त दुस्त्यजं सद्वितीयत्वम् । पूर्वाप्रतीतानन्दस्वरूपगोचरतेत्युक्तावप्ययमेव दोषः । किंच सत्यं ज्ञानमित्येतदपि स्वरूपलक्षणमित्युच्यते, तदप्यनुपपन्नम्, अनृतादि व्यावृत्तिबुद्धिहेतुतया हि तस्य लक्षणता वाच्या, स्वरूपमात्रस्य समानाधिकरणलक्षणवाक्येन लक्षणया प्रतीतौ कथं व्यावृत्तिसिद्धिः? सत्यत्वादिविशिष्टैकदेशलक्षणत्वाद्व्यावृत्तिबुद्धौ वैशिष्ट्ये मानान्तरं वाच्यम्, तत्रापि लक्षणायामुक्त एव दोषः । तस्य मुख्यार्थत्वाङ्गीकारे चातत्वावेदकत्वप्रसङ्गः।

इष्टापत्तौ आनन्दस्वरूपविशेषासिद्धिः । किञ्च - सत्यं ब्रह्मेत्येतावतैव स्वरूपलक्षणसिद्धेः ज्ञानादिपदं किमर्थम् ? ज्ञानादिस्वरूपलक्षणार्थमिति चेत् ? किन्तत्सत्यस्वरूपादन्यत् ? तथासत्यद्वैतभङ्गः, सामानाधिकरण्यभङ्गश्च । अस्तु वा अभेदे सत्येव स्वरूपभेदः, तथाप्यनेन पदेनास्य स्वरूपस्य लक्षणेत्ययन्नियमः कुतः ? नहि गङ्गायास्तीरविशेषसम्बन्धित्ववत् सत्यत्वस्य ज्ञानस्वरूपव्यावृत्तसत्यसम्बन्धित्वं गृहीतमिति ।

द्वितीयपक्षे जीवादिषु रूढ्यङ्गीकारेण पूर्वपक्षो गरुडपुराणविरुद्धः, ब्रह्मजातिजीवेत्यादिकञ्चासिद्धमित्याहुः । अतः पूर्वपक्षोप्यनुपपन्नः । किञ्च - प्रथमाधिकरणे त्वया सर्वेषामद्वैतवाक्यानां विचारविधिवाक्यगतब्रह्मशब्द- मुख्यार्थत्वानुरोधेनैवान्यथा-नयनादिहापि तदनुरोधाय यतो वेत्यस्य तत्प्रापकाणाञ्चैवान्यथानयनं युक्तमिति । राद्धान्तोप्यनुपपन्नः, योग्यार्थानुरोधायापि बहूनां वाक्यनामन्यथाकरणे क्रियमाणे रुढ्यर्थानुरोधाय अन्यथाकरणे का विचिकित्सा । तदेव ब्रह्म परमं कवीनाम् इति परमशब्दो मुख्यपरः, मुख्यत्वरूपोत्कर्षस्यैव परमशब्देन विवक्षितत्वात्, तदेव ब्रह्मशब्दस्य मुख्योर्थ इति ब्रह्मवादिनो वदन्तीत्यर्थः । किंच ब्रह्मणश्चिदचिद्विलक्षणत्वचिन्तायाः कथमुपोद्घाते निवेशः ।

अन्यपक्षो जघन्य एव ; तत्र पूर्वपक्षो नोपपन्नः, यतो जायन्ते तद्ब्रह्मेत्युक्तौ कथं लक्षणवैय्यधिकरण्यशङ्का ? नहि जातं ब्रह्मेत्युक्तम्, येन जन्मनो लक्षणत्वं प्रतीयेतासम्भवश्च शङ्क्येत, यत इति यच्छब्दनिर्दिष्टस्य कारणत्वावगमात् जन्मादेस्समभिव्याहाराच्च जन्मादिकारणं ब्रह्मेत्यवगमेन कारणत्वमेव लक्षणमिति स्वरसतोऽवगम्यते । नापीदन्त्वं नापि जन्मादि । सिद्धान्ते ताटस्थ्योक्तिरनुपपन्ना, कारणत्वस्य स्वरसतो लक्षणतया प्रतीयमानस्य स्वरूपगतलक्षणत्वात् । नच जन्मादिकारणत्वापेक्षया जन्मादिकमेव लघ्विति वाच्यम्, तथासति लाघवेन जन्मैकमेव लक्षणं स्यात्। यदि प्रयोजनवशात् गौरवम्मृष्यते, तदा वैयधिकरण्येन प्रत्यवस्थितं पूर्वपक्षिणं प्रति समानाधिकरणधर्मोक्त्या तन्निरासस्य प्रयोजनत्वादिदमपि मृष्यताम् । लघुभूतस्य व्यधिकरणस्यापि लक्षणत्वोपपादनसम्भवात् गुरुणो लक्षणत्वमनुपपन्नमिति चेन्न ; सम्बन्धार्थं कारणत्वस्यापेक्षिततया लाघवासिद्धेः । अन्यथा सम्बन्धविशेषेण जगत एव लाघवात् लक्षणत्वप्रसङ्ग इति ।

इतरपक्षे आदिपदे तदाद्यर्थकत्वस्य वक्तव्यतया बहुव्रीह्यर्थलक्षणाप्रसङ्गः । सर्वो द्वन्द्व इत्येकवद्भावश्च जघन्यः ।। इति ।

**नयमयूखमालिकायाम् - जन्माद्यधिकरणम् ।**

भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेत्यारभ्य यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म इति श्रूयते । किमेतद्वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोति उत नेति, सृष्ट्यादीनां त्रयाणां विशेषणत्वेन उपलक्षणत्वेन च लक्षणत्वासम्भवसम्भवाभ्यां संशये पूर्वपक्षः । विशेषणत्वपक्षे ब्रह्मैक्यं न सिद्ध्यति, विशेषणभेदेन विशेष्यभेदापत्तेः, भेदकं हि विशेषणं, भेद्यं विशेष्यम्, अतो खण्डो मुण्डः पूर्णशृङ्गो गौरश्वो महिष इत्यादिष्विव अनिवार्यो विशेष्यभेदः । श्यामो युवा लोहिताक्षो देवदत्त इत्यत्र तु देवदत्तैक्यस्य प्रमाणान्तरसिद्धत्वात् न तत्र विशेष्यानेकत्वं, प्रमाणान्तरसिद्ध्यभावे तु तत्रापि विशेषणभेदेन तद्भेदस्स्यादेव । अतोऽत्रानेनैव लक्षणेन लिलक्षयिषितस्य ब्रह्मणः प्रमाणान्तरेण ऐक्यानवगतेः विशेषणभेदाद्बहुत्वमवर्जनीयम् । एतेन एकमेवाद्वितीयम् इत्यादिभिरपि तदैक्यसिद्धिर्निरस्ता । तत्राप्येकत्वादिविशेषणभेदेन विशेष्यबहुत्वप्रतीतेः तदनुसारेण एकमित्यादिना एको व्रीहिरितिवत् साजात्यविषयतोपपत्तेः । न चात्रैव तद्ब्रह्मेत्येकवचनात्तदैक्यसिद्धिः, गोस्स्वरूपं जिज्ञासमानं प्रति खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्रवाक्ये गोशब्दगतैकवचनस्येवजातिविषयत्वोपपत्तेः । तर्ह्येक एव गौः खण्डो मुण्डः पूर्णशृङ्गश्च भवति, खण्डत्वादीनां परस्परविरुद्धत्वात्, तत्रैकवचनं जातिविषयञ्चेत् इहापि स्रष्टृत्वादीनां भेदकस्वभावानां विरुद्धत्वादेकवचनं जात्येकविषयं वाच्यमिति तुल्यम् । अपि च स्रष्टृत्वसंरक्षकत्वयोस्संहर्तृत्वेन अन्यथाऽस्ति विरोधः, न हि पुत्रमुत्पाद्य यत्ने तत्संरक्षकः पिता तस्य संहर्तापि भवति । एतेन उपलक्षणत्वपक्षेऽपि निरस्तः, विरुद्धधर्माणामेकोपलक्षणत्वासम्भवात् । किञ्च आकारान्तराप्रतिपत्तेरपि उपलक्षणत्वं न सम्भवति । उपलक्षणेन लक्ष्यप्रतिपत्तौ हि उपलक्षणं उपलक्ष्याकारः उपलक्ष्यस्य प्रतिपन्नाकारश्चेति आकारत्रयमपेक्षितं यथा यत्रायं शरारिः पक्षिविशेषस्समित्रकेदार इत्यत्र हि शरारिसम्बन्ध उपलक्षणं, मित्रस्वामिकत्वं उपलक्ष्यं, केदारत्वं पूर्वप्रतिपन्नाकारः । शाखाग्रञ्चन्द्र इत्यत्र शाखाग्रमुपलक्षणं, कालविशेषे शाखाग्रोर्ध्वदेशसंबन्ध उपलक्ष्याकारः, चन्द्रस्वरूपं पूर्वप्रतिपन्नाकारः । अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति पूर्वप्रतिपत्तिसाध्यायां बुभुत्सायामेव शाखाग्रञ्चन्द्र इति उत्तरावतरणात् प्रत्यक्षप्रतीतः प्रकृष्टप्रकाशादिर्वा पूर्वप्रतिपन्नाकारः । ननु च अत्रापि सत्यज्ञानादिवाक्यतः प्रतिपन्नं पूर्वप्रतिपन्नोपलक्ष्याकारोऽस्तीति चेन्न । तत्रापि सत्यज्ञानादीनां विशेषणानां भेदेन विशेष्यभेदापत्त्या विशेषणत्वासम्भवात्,

आकारान्तराप्रतिपत्त्या उपलक्षणपक्षस्याप्यसम्भवात्, यतो वा इमानि इत्यादिवाक्यप्रतिपन्नाकारान्तरसमाश्रयणे परस्पराश्रयपत्तेः। अतो विशेषणोपलक्षणपक्षद्वयस्याप्यसम्भवात् न ब्रह्म लक्षणेन प्रतिपत्तुं शक्यमिति । एवं प्राप्ते सिद्धान्तः लक्षणमुखेन ब्रह्म प्रतिपत्तुं शक्यमेव । न च अभेदेऽपि विशेषणभेदायत्तविशेष्यभेदप्रतीतिस्तत्प्रतिपत्तिबाधिका, श्यामो दीर्घ इत्यादाविव विशेषणभेदेऽपि विशेष्याभेदोपपत्तेः । ननु विशेषणभेदे विशेष्यभेद औत्सर्गिकः, खण्डो मुण्ड इत्यादौ दर्शनात्, श्यामो दीर्घ इत्यादौ मानान्तरसिद्धविशेष्यैक्यप्रतीतिस्तद्बाधिकेत्युक्तमिति चेत् सत्यमुक्तम् । दुरुक्तन्तु तत्, विशेषणभेदेऽपि विशेष्यैक्यमौत्सर्गिकम्, खण्डो मुण्ड इत्यादौ विशेषणानां विरोधस्तद्बाधकइत्येव उत्सर्गापवादव्यवस्थाकल्पनौचित्यात् । किमत्र विनिगमकमिति चेत्, ऐक्यस्य औत्सर्गिकत्वकल्पने लाघवं, भेदस्य औत्सर्गिकत्वकल्पने गौरवमित्येतद्विनिगमकं, श्यामो दीर्घ इत्यादौ श्यामत्वादीनां गौरादिभेदकत्वेन विशेषणत्वमुपपद्यते, एवं तद्ब्रह्मेत्येकवचनावगतविशेष्यैक्यमपि विशेषणभेदायत्तविशेष्यभेदबाधकं, एकवचनस्य हि व्यक्त्यैक्यविषयत्वमौत्सर्गिकम् । खण्डो मुण्ड इत्यादौ तु विशेषणानां विरोधात्तत्त्यागः, तत्रापि विशेषणानां विशेष्यभेदकत्वं खण्डो मुण्डाः इत्यादावौत्सर्गिकं श्यामो युवाऽयमित्यादौ मानान्तरतो विशेष्यैक्यावगत्या तत्त्याग इति, विपरीतोत्सर्गापवादव्यवस्थाकल्पनप्रतिक्षेपे व्यक्त्यैक्यविषयतौत्सर्गिकत्वध्कल्पने लाघवं अन्यथा गौरवमित्येव विनिगमकमनुसन्धेयम् । एवं लोकसाधारणमिदं विनिगमकं, विशिष्य चात्र, यतो वा इत्यादिवाक्यस्य यच्छब्दयोगेन सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा इति श्रुत्यन्तरसिद्धसृष्ट्यादिकारणानुवादकत्वप्रतिपत्तेः श्रुत्यन्तरसिद्धसर्वविज्ञानप्रतिज्ञानुरोधात् एककारणविषयत्वावश्यम्भावेन पुरोवादप्रतिपन्नैककारणविषयत्वं वाच्यमिति अन्यद्विनिगमकम् । तथा च यथा यदि रथन्तरसामा सोमस्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रानिति ज्योतिष्टोमप्रकरणाम्नातरथन्तरसामत्वबृहत्सामत्वविशेषणयोः तत्प्रकरणाम्नातगायत्राऽमहीयवादिसामान्तरव्यावर्तकत्वं नास्ति, एवमिहापि सृष्टिकारणत्वस्य पुरोवादप्रतिपन्नस्थितिलयकारणत्वव्यावर्तकत्वं नास्तीति युक्तमुत्पश्यामः । न च उत्पाद्य संरक्षितवतस्संहर्तृत्वं विरुद्धमिति शङ्कनीयं, उत्पादनसंरक्षणयोरिव संहारस्यापि कालभेदेनाविरोधात् । स्वयमुत्पाद्यसंरक्षितानां सस्यानां कालान्तरे लवनदर्शनात्, तत्तत्सृज्यकर्मानुसारिणः ईश्वरस्य तत्तत्संहारे वैषम्यनैर्घृण्यदोषानापत्तेर्वक्ष्यमाणत्वाच्च । एवञ्च उपलक्षणपक्षेऽपि न दोषः ।

यथा दृष्टान्ते शरारिरुपलक्षणं, मित्रकेदारत्वमुपलक्ष्याकारः, केदारत्वसामान्यं पूर्वप्रतिपन्नाकारः, एवमिहापि जगज्जन्मस्थितिलयकारणत्वमुपलक्षणं, तदुपलक्ष्याकारो लक्ष्मीपतित्वं, उपलक्षणस्य जन्मादिकारणत्वस्य अनूद्यमानस्य पुरुषसूक्तरूपपुरोवादानुसारेण ह्रीश्च ते लक्ष्मीश्च पत्न्या विति तत्रत्यमन्त्रप्रतिपन्ने लक्ष्मीपतौ पर्यवसानात् । न हि सन्मूला इति छन्दोगश्रुतिरेव पुरोवादः, विनिगमनाविरहेण कारणवस्तु समर्पकाणां पुरुषसूक्तादीनामपि पुरोवादत्वानिवारणात् । ब्रह्मत्वं पूर्वप्रतिपन्नाकारः । तद्धि केदारत्वं प्रत्यक्षतोऽनेककेदार-साधारण्येनेव बृहतेर्धातोरर्थानुगमेन यस्माद्बृहति बृंहयति तस्मादुच्यते परंब्रह्म इति श्रुत्या बृहत्त्वाद्बृंहणत्वाञ्च तद्ब्रह्मेत्यभिधीयत इति स्मृत्या च भगवति पुरुषोत्तमेऽवगम्यमानं मन्त्रार्थवादावगतनानाविधमहिमशालिब्रह्माद्यनेक देवतासाधारण्येन प्रतिपन्नं, एवं लक्षणमुखेन पुरषोत्तम एव ब्रह्मत्वपर्यवसानात् नारायणपरंब्रह्मेत्यादिश्रुतिः । ननु बृहतिधातोर्मनिन्प्रत्ययान्तस्य बृहत्त्वमात्रमर्थः, कथं ब्रह्मणत्वमपि तदर्थ इति वर्ण्यते । उच्यते - ब्रह्मणत्वं हि स्वसङ्कल्पेन चेतनाचेतनस्थूलपरिणामहेतुत्वं, तदपि स्वरूपतो गुणतो विभूतितश्च बृहत्त्ववाचिना ब्रह्मशब्देन क्रोडीकृतमेव । ननु लक्षणस्य विशेषणोपलक्षणत्वपक्षद्वयं परस्परविरुद्धं कथं परिगृहीतं, ज्ञाप्यान्वयिव्यावर्तकं विशेषणं, तदनन्वयिव्यावर्तकमुपलक्षणमिति भेदमाहुः । सत्यम् । इहापि उपासनाभेदेन जन्मादिकारणत्वस्य अन्वयानन्वयाभ्यां पक्षद्वयोपपत्तिः, यथा शाण्डिल्यविद्यायां - सर्वं सल्विदं ब्रह्म तज्जला नित्युपास्यकोटावन्वितं तद्विशेषणं, व्याहृतिशरीरकाक्ष्यादित्य-मण्डलस्थपुरषोपासनायां उपास्यब्रह्मस्वरूप-प्रदर्शकतयोपलक्षणम् । यदि कारणन्तु ध्येय इत्यथर्वशिखावचनं सर्वेषु उपासनेषु कारणत्वस्य उपास्यत्वसमर्पणार्थमिष्यते, तदानीमनन्तकल्याणगुणाकारस्य ब्रह्मणस्सर्वोपासनानुगता गुणा विशेषणानि, केषुचिदेवोपासनेषु व्यवस्थिता गुणाः ते तदन्योपासनेषु उपलक्षणानीति शिष्यशिक्षार्थजन्मादिकारणत्वे स्थित्वा पक्षद्वयं भाष्यकारैर्दर्शितम् । यद्यपि जन्मकारणत्वादिकमेकैकमप्यनतिव्याप्तं लक्षणं भवितुमर्हति, तथाऽपि ब्रह्मविष्णुरुद्राः कारणपुरषाः परस्पराभिन्नाः प्रत्येकं जन्मादिषु कारणानीत्यनादिप्रवादप्राप्तशङ्काव्यावृत्त्यर्थं समुदितलक्षणाश्रयणमिति सर्वमनवद्यम् । सत्यज्ञानादिवाक्योक्तब्रह्मलक्षणान्तरस्योपयोगः तदर्थश्च आनन्दादयः प्रधानस्य इत्यधिकरणे दर्शयिष्यते ।।

**श्रीभाष्यप्रकाशिकायाम् - जन्माद्यधिकरणम् ।**

जन्माद्यधिकरणे - यतो वा इमानि भूतानि (तै ३-१) इत्यादिवाक्यावगतजन्मस्थिति-लयास्तत्कारणत्वानीव ब्रह्म लक्षयितुं शक्नुवन्ति नवेति संशय्य, तेषां विशेषणत्वेन

लक्षकत्वे विशेषणानां स्वस्वाश्रयभेदकत्वस्वाभाव्येन स्वाश्रयभूतब्रह्मनानात्वापातात्, श्यामत्वयुवत्वादिनामाश्रयैक्यग्राहकप्रत्यक्षबाधेन भेदकत्वाभावेऽपि प्रमाणान्तरागोचरे ब्रह्मणि बाधकानवतारात्, खण्डो मुण्डो गौः इत्यत्र गोशब्दैक्येऽपि खण्डत्वादिना भेदप्रतीतिवदिह ब्रह्मशब्दैक्येऽपि जन्मादिविशेषणभेदेन ब्रह्मव्यक्तिभेदस्य दुर्वारत्वात्, खण्डत्वादीनां विरुद्धत्ववज्ञायन्त इत्यादिवर्तमाननिर्देशावगतैककालीनानां भूतनिष्ठजन्मादीनां विरोधात् स्वाश्रयापृथक्सिद्धप्रकारितासम्बन्धेन एकधर्मिनिवेशासन्भवेन ब्रह्मव्यक्तिनानात्वस्यानिवार्यत्वात् तादृशजन्मादिकारणत्वान्यपि विरुद्धानीति ब्रह्मनानात्वापत्त्या तेषामपि ब्रह्मलक्षणत्वा-सम्भवात्, विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् इति न्यायेनानुन्मत्तस्य बुद्धिमतः पुंसः स्रष्टृत्वरक्षकत्वसंहर्तृत्वानां विरोधाच्च तेषां विशेषणत्वेन लक्षकत्वस्यासम्भवात् ; उपलक्षणत्वस्य उपलक्ष्यातिरिक्तोपलक्षणीयगतधर्मान्तरनियतत्वेन प्रकृतेतथाविधाकाराभावेन तेषामुपलक्षणविधयापि ब्रह्मलक्षणत्वासम्भवात्, वाक्यान्तरेण आकारान्तरप्रतीतावुच्यमानायां तत्राप्युक्तरीत्या विशेषणत्वपक्षदूषणेनोपलक्षणत्वस्याश्रयणीयतया तत्राप्याकारप्रतिपत्तये वाक्यान्तराश्रयणे तत्रापि तथेत्यनवस्थापातादेतद्वाक्याश्रयणे परस्पराश्रयप्रसङ्गाच्च शब्दानां सिद्धे व्युत्पत्तावपि व्यावृत्तब्रह्मविषयापातप्रतीत्यसम्भवनिबन्धना (धि) कारिदौर्लभ्यादिना शारीरकं शास्त्रमनारम्भणीयमिति प्राप्ते

सिद्धान्त उच्यते । जन्मादीनामुपलक्षणतयैव ब्रह्मलक्षणत्वम् । न चोपलक्षणोपलक्ष्यातिरिक्ताकाराप्रतिपत्तिदोषः । यतो वेत्यादिवाक्यस्य यद्वृत्तयोगेनानुवादतया पुरोवादवाक्येसदेव (छां.६-२-१) इत्यादाववगतकारणत्वाक्षिप्तसर्वज्ञत्वादेराकारान्तरप्रतिपन्नस्य सत्त्वात् । सर्वज्ञत्वसर्वशक्तत्वादेरविरोधेन विशेषणत्वमेवेति न तदुपलक्षणत्वप्रयुक्ता-न्योन्याश्रयणादिदोषगन्धोऽपि ।

तथा जन्मादीनां विशेषणतया ब्रह्मलक्षणत्वमुपपद्यते । न च विशेषणानां स्वाश्रयभेदकतया ब्रह्मनानात्वापत्तिदोषः । भिन्नाश्रयत्वेन निर्धारितानामेव तथात्वेऽपि एकाश्रयत्वेनानगतानां श्यामत्वादीनामिव सदादिपुरोवादवाक्ये सन्मूला इत्यादिना सदेकाश्रयत्वेनावगतस्थित्यादीनामाश्रयभेदकत्वाप्रसक्त्या ब्रह्मनानात्वानवकाशात् । न चैककालीनानां तेषां विरोधश्शक्यः । निद्राति स्नानि भुङ्क्ते चलति कचभरं शोधयत्यन्तरास्ते इत्यादावेकावान्तरस्थूलोपाधि प्रयुक्तैकस्थूलकालमादाय निद्राद्यनेकक्रिया वर्तमानत्ववदत्रापि जन्मादीनामेकस्थूलकालमादायैकधर्मिणि विरोधानवकाशात् । सस्यादिविषये कर्षकादेरेकस्यैव बुद्धिमतस्सस्याद्युत्पादकत्वरक्षकत्वलावकत्ववत् पित्रादीनां हितैषिणां

पुत्रादिविषये रोगापराधादिभूयस्त्वं सति निगलबन्धकत्वादिशिक्षकत्ववत् सार्वभौमस्योद्यानादिविषये तत्तत्कालानुगुण्येनोत्पादकत्वादिवञ्च भगवतोऽपि स्रष्टृत्वादि-सम्भवात् । तस्माज्ज्न्मादीनामविरुद्धतया विरुद्धानामेव भेदकत्वात् विशेषणत्वेन चेतनाचेतनव्यावर्तकतया वेदान्तानां व्यावृत्तलब्रह्मस्वरूपविषयापातप्रतीति-सम्भवेनाधिकारिलाभात् शारीरकं शास्त्रमारम्भणीयम् । विशेषणत्वोपलक्षणत्व-निर्वचनतत्फलभेदादिकं टीकाभावप्रकाशिकापाराशर्यविजयादौ द्रष्टव्यम् । इति ।

**तत्त्वसारे - आनन्दमयाधिकरणम् (१-१-१३)**

आनन्दमयाधिकरणे पुच्छब्रह्मणः प्राधान्यं परोक्तमनुवदति षष्ठ्या इत्यादि ।

षष्ठ्यान्यत्वमवेदि नैनमवदच्छ्लोको न चाज्ञातता
ज्ञातस्यास्य तथापिं नावयविता तस्यान्य आत्मा श्रुतः ।
शोध्यत्वं च विकारवाचकवचस्तद्ब्रह्मपुच्छं भवेन्न
त्वानन्दमयः स चान्नमयवत् कोशो बहिः कथ्यते ।। (१८)

(व्या) अस्य - आनन्दमयस्य । षष्ठ्या - तस्य पुच्छम् इति षष्ठ्या अन्यत्वं ब्रह्मान्यत्वम् । अवेदि - श्रोतृभिरज्ञायि, व्यतिरेकषष्ठीस्वारस्यादिति भावः । एनं - पूर्वं ब्रह्मान्यत्व (प्रतियोगित्वे) (नियोगित्वे) नोपत्तामिमानन्दमयम् । श्लोकः असन्नेव स भवति इति ब्रह्मविषयश्लोकः । नावदत् न प्रतिपादयामास, अपि तु पुच्छतयोक्तं ब्रह्मैवावददित्यर्थः । ज्ञातस्य प्रियमोदादिरूपेण लोकविदितस्यानन्दमयस्य, अस्य । अज्ञातता (सद्भाव ज्ञानांशकौ) (अब्रह्मविदोऽसद्भाव) प्रयोजकमज्ञातत्वं न - न भवतीत्यर्थः । तथापि यथाकथंचिदज्ञातत्वोपपादनेऽपि । तस्य - निरवयवस्य परमात्मनः । अवयविता शिरःपुच्छाद्यवयववत्ता । न न भवतीत्यर्थः । तथा च ज्ञातोऽवयवी च आनन्दमयो न परमात्मेत्यर्थः । तस्य आनन्दमयस्य अन्य आत्मा श्रुतः तस्यैष एव शारीर आत्मा इत्यात्मन्तरं श्रुतम् । परमात्मनोऽप्या (ह्या) त्मान्तरासंभवादात्मान्तरवानानन्दमयो न परमात्मेत्यर्थः । अस्य आनन्दमयस्य । शोध्यत्वं श्रुतं - आनन्दमयो मे शुध्यन्ताम् इति वाक्यावगतमित्यर्थः । श्रुत इत्यनुषक्तस्य लिङ्गविपरिणामः । नित्यशुद्धेपरमात्मनि शोध्यत्वानुपपत्तेः, शोध्यत्वेन प्रतीत आनन्दमयो न परमात्मेत्यर्थः । अस्यानन्दमयस्य, विकारवाचकवचः विकारत्वबोधकमयट्-प्रत्ययरूपशब्दः । श्रुतमित्यनुषज्यते । परमात्मनो विकारत्वानुपपत्तेर्विकारतया श्रुतो न

परमात्मेत्यर्थः । यत एवं ततः, पुछं ब्रह्म तद्भवेत् - परमात्मतया प्रतिपाद्यत्वार्हं भवति । यद्वा तत् - भवेदित्यध्याहारेणयोजना । आनन्दमयस्तु ब्रह्म न भवेत् परमात्मत्वानर्हमित्यर्थः । स च आनन्दमयस्तु, अन्नमयवत् अपरमात्मभूतान्नमयादिवत् । बहिःकोशः अन्तःस्थितपुच्छब्रह्मवस्तुनि बुद्ध्यवतरणहेतुभूतबुद्धिविषयसंपुटरूपतया कथ्यतेश्रूयते ।

तदाहुः - तस्य प्रियमिति सम्बन्धवाचिन्या षष्ठ्या व्यतिरेकप्रतीतेः, ब्रह्मविषयस्योपरितनश्लोकस्यानन्दमयविषयत्वाभावेन पुच्छतयोक्तब्रह्मण एव प्रधानत्वावगमात्, प्रियमोदादिदरूपेण लोकाविदितस्यानन्दमयस्य सद्भावासद्भावज्ञानशङ्कानुपपत्तेः, निरवयवस्य परमात्मनोऽवयवित्वानुपपत्तेः, अविकारस्य विकारत्वानुपपत्तेः, तस्यैष एव शारीर आत्मा इत्यात्मविषयवाक्यावगतस्य आत्मान्तरस्य परमात्मतया आनन्दमयस्य परमात्मत्वानुपपत्तेः, अन्नमय-प्राणमय-मनोमय विज्ञानमयानन्दमया मे शुद्ध्यन्ताम् इति श्रुतस्य शोध्यत्वस्य नित्यशुद्धे परमात्मनि अनुपपत्तेश्च नानन्दमयः परमात्मा अपि तु पुच्छतया निर्दिष्टमेव ब्रह्म परमात्मेति पुच्छब्रह्मवादहेतुसंग्रहः इति । (रत्नसारिणी) तदिदम् दूषयति (पुलिङ्गेत्यादि)

पुल्लिङ्गान्तप्रधानप्रकृतपरवचोरूपणं चाप्यनन्यैः
श्लोकाः पुच्छं न चाहुः स्वरसमपि च नः सूत्रमन्योऽन्तरो न ।
षष्ठ्यादिश्भ्रांशभावान्निरवधिकतया रूपणादानुरूप्यात्
पर्यायत्वादनन्यात्मकवचनतया पुच्छहेतुः परास्तः ।। (११)

पुंल्लिङ्गान्तः प्रधानप्रकृतपरं वचः सोऽकामयत इति वाक्यस्थः स इति शब्दः । पुँल्लिङ्गान्तेत्यनेन आनन्दमयपरत्वमावश्यमित्यभिप्रेतम् । प्रधानेत्यनेन सर्वपर्यासाधारणस्य तस्यैष एव शारीर आत्मा इत्युक्तस्य न प्रधानवाचिना सर्वनाम्ना परामर्शसम्भव इत्यभिप्रेतम् । प्रकृतेत्यनेन तस्माद्वा एतस्मादात्मनः इत्यत्र आत्मशब्दनिर्दिष्टस्य व्यवहितस्याव्यवहितपूर्वपरामर्शिना तेन परामर्शासम्भव इत्यभिप्रेतम् । तथा च सोऽकामयत इत्यानन्दमयस्य कारणत्वप्रतीतेः परमात्मत्वसिद्धिरित्यर्थः । अस्मिन् प्रकरणे, अनन्यैः - स्वस्मादनतिरिक्तैः स्वावयवैः । रूपणं शिरःपक्षादिरूपणं, दृश्यते इति शेषः । तथा च पुच्छरूपवयवत्वेन रूपिताद्ब्रह्मणोऽवयवितया रूपितस्यानन्दमयस्यानतिरेकसिद्धिरिति आनन्दमयस्य परब्रह्मत्वसिद्धिरित्यर्थः । अस्मिन् प्रकरणे श्लोकाः तत्तत्पर्यायस्थाः अन्नाद्वै प्रजाः इत्यादिश्लोकाः । पुच्छं नाहुः, अपि तु पुच्छवन्तमाहुः इति प्रकृतश्लोकेऽपि पुच्छवदानन्दमयपरः न तु पुच्छमात्रपर इत्यर्थः । अनेन, पूर्वपक्षिणानैनमवदच्छलोकः

इत्युक्तस्य हेतोः स्वरूपासिद्धिरभिप्रेता । रूपणं चाप्यनन्यैरिति तु अवयवितया रूपणमात्रं न वस्तुतोऽवयवित्वम् । अन्यथा ब्रह्मणोऽवयवत्वं प्रसज्येतेत्यवयवितेत्युक्तहेतोः स्वरूपासिद्धिरभिप्रेता । आनन्दमयोऽभ्यासात् इति सूत्रं, न स्वरसम् । आनन्दमयस्य परमात्मत्वं वदतामस्माकं पक्षे अनुपहतस्वारस्यकम्, पुच्छब्रह्मणः परमात्मत्वे त्वस्वरसमित्यर्थः । तथा सति ब्रह्मपुच्छमभ्यासात् इति हि भवितव्यम् । अस्मत्पक्षे तु आनन्दमयः नेतरः इति वा नाशब्दम् इति वा प्रतिज्ञावाक्ययोजनया आनन्दमयः परमात्मेति सिद्ध्यति । अभ्यासादिति च सन्निहितानन्दाभ्यासादित्यर्थकतया स्वरसम् । त्वत्पक्षे तु आनन्दमयशब्दस्य लक्षणयानन्दमयवाक्यश्रुतपुच्छब्रह्मपरत्वं वक्तव्यमित्यस्वारस्यं स्पष्टम् । किञ्च, अन्यः अन्तरो न तस्माद्वा एतस्मादन्योऽन्तर आत्मा मनोमयः इत्यादिवदस्य आनन्दमयस्यान्तरात्मान्तरं न श्रुतमित्यर्थः । अन्तरात्मपरम्परोपदेशस्यानन्दमये पर्यवसानादानन्दमयः परमात्मेत्यभिप्रेतम् । षष्ठ्यादिः इत्यादिशब्देनाज्ञातत्वं, मयट्श्रवणं अवयवित्वं, शोध्यत्वं, ब्रह्मपदम्, तस्यैष एव शारीर आत्मा इति शारीरात्मश्रवणम् इत्येतेषां समुदायो गृह्यते । तत्र च क्रमेणांशभावादित्यादिकमुपपादकम् । तस्य पुच्छमिति षष्ठी, अंशभावात् - अवयवत्वात् । अवयवावयविभावः षष्ठ्यर्थ इति भावः । अनन्यैरित्यनतिरेकः पूर्वमुक्तः । अज्ञातत्वं निरवधिकतया । प्रियादिरूपेण ज्ञातस्यापरिच्छिन्नानन्दत्वेनाज्ञातत्वमप्युपपन्नमिति भावः । मयट्श्रवणं च निरवधिकतया । प्राचुर्यार्थे मयड्विधानाद्विकारश्रवणहेतुरसिद्ध इति भावः । ज्ञातत्वहेतोरप्य-सिद्धिर्निरवधिकतयेति सूचिता । अवयवित्वं रूपणात् । न वस्तुत इत्यर्थः । अवयवित्वहेतुरसिद्ध इति भावः । अन्यथा ब्रह्मणः पच्छत्वाप्रसङ्गः । न च पुच्छपदेनाधारलक्षणा । रूपप्रकरणविरोधादिति हृदयम् । शोध्यत्वं आनुरूप्यात् । आनन्दमयस्य जीवत्वपक्षे संसारनिर्हरणवत् तस्य परमात्मत्वपक्षे जीवापराधजनितकालुष्यनिवृत्तिरेव अनुरूपं शोध्यत्वमित्यर्थः । अनेनानन्दमयस्यापरमात्मत्वसाधकपरोक्तशोध्यत्वहेतोर-सिद्धिरभिप्रेता । पर्यायत्वात् ब्रह्मपदश्रवणम् । आनन्दो ब्रह्मेति व्यजानात्, आनन्दमयमात्मानम् इत्यादिस्थानप्रमाणेन आनन्दमयात्मब्रह्मशब्दानामैकार्थ्ये निश्चिते सति, आनन्दपर्यायश्लोके असन्नेव स भवति, असद्ब्रह्म इति ब्रह्मशब्दश्रवणमानन्दमयविषये, नानुपपन्नम् इत्यर्थः । अनेन पूर्वोक्तहेत्वसिद्धिर्दृढीकृता । अनन्यात्मकवचनतया शरीरात्मश्रवणम् । प्रकारान्तरात्मोपदेशपरम्पराया अस्मिन्नानन्दमये अन्योऽन्तर इत्युक्त्यभावात् परिसमाप्त्यवगमेन, तस्यैष एव इति वाक्यमनन्यात्मकत्वपरमित्यर्थः । स्वे

महिम्नि प्रतिष्ठितः, आत्मेश्वरम् इतिवत् । अनेनात्मान्तरवत्त्वरूपहेत्वसिद्धिरभिप्रेता । यत एवं ततः, पुच्छहेतुः पूर्वपक्षोक्तपुच्छब्रह्मत्वहेतुः, आनन्दमयस्याब्रह्मत्वहेतुरिति यावत् । जातावेकत्वम्, षष्ठ्यान्यत्वमवेदि इत्याद्युक्तहेतव इत्यर्थः । परास्तः सिद्धान्तसाधकबलवद्धेतुभिः स्वरूपासिद्ध्या च दूषिता इत्यर्थः ।।

**अधिकरणसारावल्याम् - आनन्दमयाधिकरणम् ।**

मुख्येक्षा यद्यभीष्टा भवतु तदुचिते सा पुनर्जीवतत्त्वे
सद्विद्यायां हि शब्दैस्त्रिभिरुपरि सतस्तस्य जीवैक्यमुक्तम् ।
इत्यूहादुज्झिहानं प्रशमयितुमथ प्रस्तुतो विश्वकर्ता
जीवस्याप्यन्तरात्मा निरुपधिकमहानन्दथुः स्थाप्यतेऽत्र ।। ५८ ।।

पूर्वोत्तराधिकरणयोस्सङ्गतिद्वयोक्तिपूर्वकमुत्तराधिकरणार्थं सङ्ग्रहेणोपदर्शयति मुख्येति । यदि सतो मुख्यमीक्षणमिष्टम्, तर्हि चेतनत्वात् मुख्येक्षणार्हो जीव एव जगत्कारणमस्त्विति पूर्वपक्षोत्थानादेका सङ्गतिः । अन्या च सद्विद्यावाक्ये तत्त्वमसीति त्रिभिः पदैर्जीवब्रह्मणोरैक्यमेवनवकृत्वः प्रदर्शितम्, तथा च जीव एव जगत्कारणं ब्रहास्त्विति पूर्वपक्षोत्थानमिति । इत्यूहादुज्झिहानं पूर्वपक्षिणं निराकर्तुं पूर्वप्रस्तुतो विश्वकर्ता जीवस्याप्यन्तरात्मा निरुपाधिकमहानन्दवान् अत्राधिकरणे स्थाप्यते । तदर्थविचारस्तु ब्रह्मविदाप्नोति परम् इत्यस्मिन्वाक्ये यः पुनरान्दमय उच्यते स किं जीव उत परमात्मा । पुनर्विचार्यते अत्र मयड् विकारार्थः प्राचुर्यार्थो वा । तदर्थं विचार्यते उपक्रमगतान्नमयशब्दस्थमयटो विकारार्थत्वानुसारेण अत्रापि मयटो विकारार्थत्वमेव युक्तम्, उत प्राचुर्यार्थत्वम् । पुनश्च विचार्यते उपक्रमावगतस्य मध्ये प्राणमयमनोमयादिभिर्विच्छेदोऽस्ति न वेत्यादि । फलफलिभावस्तु तत्राविच्छेदादुपक्रमावगतविकारार्थत्वस्यैवात्रापि ग्रहीतुं योग्यत्वेनानन्दमयशब्दस्थमयटो विकारार्थत्वादानन्दमयो जीव इति पूर्वपक्षे । व्यत्ययेन राद्धान्ते फलफलिभावः ।। (चिं.म)

दृष्टः पूर्वं विकारे मयडिति चरमेऽप्येवमस्त्वित्ययुक्तं
मध्ये तद्भङ्गदृष्टेः प्रचुरमिह वदेत् प्रत्ययोऽन्यस्य बाधात् ।
आनन्दप्राचुरी च प्रकृतपरसुखाल्पत्वलब्धावधित्वात्
दुःखाल्पत्वानपेक्षा परदुरितभिदः शासितुस्तद्विरोधात् ।। ४९ ।।

अत्र कश्चिदाह आत्मन आकाशः संभूतः इत्यादिना सृष्टेरेवाभिधानात् पूर्वं स वा एष पुरुषोऽन्नरसमयः इत्यत्र विकारे मयड् दृश्यत इति चरमेऽपि अन्योऽन्तर

आत्माऽऽनन्दमयः इत्यत्रापि एवमस्तु मयटो विकारार्थत्वमेवास्तु पूर्वोक्तस्य मयटो विकारार्थत्वप्रत्यभिज्ञानादिति, तदिदमाहदृष्ट इति । तन्निराकरोति - अयुक्तमिति । तत्र हेतुमाह - मध्य इति । प्राणमयादिषुविकारार्थत्वभङ्गदृष्टेरित्यर्थः । फलितमाह प्रचुरमिति । विकारार्थत्वे को दोष इत्याशङ्क्याह - अन्यस्येति । आनन्दमयादतिरिक्तस्य वस्तुनो बाधेन विकारार्थत्वस्य बाधितत्वादित्यर्थः । नन्वत्रानन्दप्राचुर्याभिधाने दुःखात्पत्वमेव स्यात् यथा ब्राह्मणप्रचुरो देश इत्युक्ते शूद्राल्पत्वं प्रतीयत इति, तत्प्रतिक्षिपति - आनन्देति । अत्रानन्दप्राचुरी मनुष्यानन्दमारभ्य चतुर्मुखानन्दपर्यन्ततया प्रकृतपरसुखाल्पत्व-लब्धावधित्वात् आनन्दमयनिष्ठदुःखाल्पत्वं नापेक्षते, अपि तु चतुर्मुखादिनिष्ठानन्द-प्राचुर्यनिवृत्तिमेव । यथा अनन्मयो यज्ञः इत्यादि । नन्वानन्दप्राचुरी दुःखाल्पत्वेनापि निर्वक्तुं शक्यत इत्याशङ्क्य नेत्याह परेति । परदुरितभित् संश्रितानां दुरितं भिनत्ति आनन्दमयः इति हि श्रूयते । अथ सोऽभयं गतो भवति, एतं ह वाव न तपति, न कर्मणा लिप्यते पापकेन इत्यादिकं वाक्यजातं शतशो ह्यधीमहि । तस्मादत्र दुःखाल्पत्वशङ्का न सङ्घटत इति । किं च भीषास्माद्वातः पवते, तस्य हवा एतस्य प्रशासने गार्गि, प्रशासितारं सर्वेषाम् इत्यादिभिः प्रशासितृत्वेन प्रतिपन्नस्यानन्दमयस्य पापाल्पत्वविरोध इत्याह शासितुरिति ।। (चिं.म.)

आत्मा तस्यैव एवेत्युदितमनितरात्मत्वमस्यैव वक्तुं
शारीरोक्तिश्च तस्मिन्नखिलतनुतया स्यादसङ्कोचवृत्तिः ।
शोध्यत्वं तत्तदर्थानुगुणमिति विभोस्तत्प्रसाद्यत्वमात्रं
प्राप्येऽस्मिन् प्राप्तिरूपा परविद उपसङ्क्रान्तिरानन्दसिन्धौ ।। ६० ।।

नन्वस्मत्पक्षे भवद्भिरानन्दमयत्वलक्षणं लिङ्गं विरुद्धमिति ह्युक्तम् । अस्माकमेक एवायं विरोधः, भवतां बहवो विरोधाः । आनन्दमयेऽपितस्यैष एव शारीर आत्मा यः पूर्वस्य इत्यात्मान्तरकथनं विरुध्यते । शारीरत्वकथनमपि शरीरस्य कर्मफलत्वान्न युज्यते । न च घटते शोध्यत्ववादः परस्मिन् ब्रह्मण्यशुद्धिप्रसङ्गाभावात् । श्रूयते ह्यानन्दमयेऽपि अन्नमय प्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम् इति शोध्यत्ववादः । किं च तस्मिन्नेवानन्दमये फलनिर्देशदशायामुपसङ्क्रमितव्यत्वमुच्यते तदपि विरुद्धम् । परमात्मनि नित्यमेव वर्तमानस्य जीवस्य कथमपूर्वमुपसङ्क्रमणमिति । एवं चतुरोऽपि विरोधाननूद्य चतुर्भिरपि पादैरनुक्रमेण समाधत्ते - आत्मेति इयं किल समाधानप्रक्रिया तस्यैष......आत्मा इत्युक्तिरानन्दमये स्वयंदासास्तपस्विनः इतिवदात्मान्तरनिवृत्त्यर्थेति

को विरोधः ? शारीरत्वकथनमपि भगवतः सर्वशरीरकत्वादानन्दमय एव विशेषेणोपपद्यते । शोध्यत्वमपि विशुद्धमेव राजहृदयम् इत्यादिवदानन्दमयस्य प्रसाद्यत्वमेव । न पुनः पूर्वमशुद्धस्य कश्चित् शुद्धिविशेषः । लोकेऽपि राजहृदयं विशुद्धमित्यादौ निग्रहनिवृत्तिरेवोच्यते ; अनुगुणस्यैवार्थस्य तत्रतत्र स्वीकार्यत्वात् । आकाङ्क्षासंनिधानवद्योग्यत्वस्यापि वाक्यार्थनिर्णयाङ्गत्वात् । अत्रोपसङ्क्रमणमेव हि शिष्यते, तदपि सङ्घटते प्राप्तिरेव ह्युपसङ्क्रमणमुच्यते । प्राप्तिश्च पूर्वमननुभूतस्य ब्रह्मणः पश्चादनुभवसंभवः । एतदेवाभिधीयतेसोऽश्नुते सर्वान् कामान् सह इति। अथवा देशविशेषप्राप्तिरेव ह्यस्माभिर्वक्तुं शक्यत इति । तदेव ह्युच्यते वैकुण्ठे तु परे लोके इति । अतोऽस्मत्पक्षे न विरोधावकाशः । अत्र पदार्थकथनं स्वयमेव भाव्यम् ।। (चिं.म.)

निर्देहेऽस्मिन्निरंशे नहि भवति शिरःपक्षुपुच्छादि किञ्चित्<br>
तस्मात्पुच्छं प्रतिष्ठेत्युदितमिह परब्रह्मभावीति चेन्न ।<br>
सोढा पुच्छत्वक्लृप्तिं यदि कथमितरन्नानुमन्येत कल्प्यं<br>
ब्रह्मण्यात्मप्रतिष्ठावचनमनितराधाराख्यापनाय ।। ६१ ।।

अत्र पुच्छब्रह्मवादी प्रत्यवतिष्ठते निर्देह इति। आनन्दमयस्यैव ब्रह्मत्वे तस्य निरंशत्वात् तस्य प्रियमेव शिरः इत्यादिना शिरःपक्षादिभेदेन पञ्चप्रकारावयवक्लृप्तिर्न घटते । तस्मात् पुच्छं प्रतिष्ठा इत्युक्तं सर्वभूताधिष्ठानतया विश्वप्रतिष्ठारूपं पुच्छमेव परं ब्रह्म, आनन्दमयस्य ब्रह्मत्वे शिरःपक्षादि क्लृप्तीनीनामयोग्यत्वादिति । इमं पक्षं प्रतिबन्द्या दूषयितुमुपक्रमते सोढेति । देशकालपरिच्छेदरहिततया भवद्भिरङ्गीकृतस्य सच्चिदानन्दरूपस्य ब्रह्मणः पुच्छत्वकथनं कथं युज्यते । श्रुतिप्रामाण्यसिद्ध्यर्थमस्माभिः पुच्छत्वकल्पनं सोढव्यमिति चेत् हन्त तर्ह्यस्माभिरपि आनन्दमये निरंशे प्रियमोदादितत्तद्विभागविवक्षया शिरः पक्षादिकल्पनं सोढव्यमिति सन्तोष्टव्यम् आयुष्मतेत्याह - कथमिति । इतरत् - शिरःपक्षादिकमित्यर्थः । तर्ह्यत्यन्तविरुद्धमेतत्, यदानन्दमयस्य ब्रह्मण एव स्वप्रतिष्ठारूपत्वमिति । तच्च न विद्यते । स्वस्यैव स्वप्रिष्ठानत्ववचनमनितराधारताख्यापनाय स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि इति श्रुत्यन्तरप्रकारेण सर्वप्रतिष्ठारूपस्य ब्रह्मणः प्रतिष्ठान्तरनिवृत्तिरेव ह्यत्रोच्यत इति को विरोधः । अत्र पुच्छब्रह्मवादिनां बहून्यपि दूषणानि भाष्य एव व्यक्तमुक्तानीति श्लोकार्थमेव प्रदश्य विरमामः ।। (चि.म.)

**पाराशर्यविजये - आनन्दमयाधिकरणम् ।**

यतो वेत्यादिकारणत्वानुवादिभृगुवल्लीस्थलक्षणवाक्यन्निरूप्य, तद्विधायकसदादिवाक्यानि निरूप्य, स्वरूपप्रमाणलक्षणप्रमाणाभ्यां प्रतिपन्नं कारणत्वं स यश्चायं पुरुषे यश्चासावादित्ये इति वाक्येन भगवति पर्यवसाययितुं भृगुवल्ल्याः पूर्वप्रकरणेन स यश्चायं पुरुषे इत्येतदर्थप्रतिपादकेन ईक्षणेनाचितो व्यावृत्तं लक्षणं जीवाद्व्यावर्तयति । स यश्चायं पुरुष इति वाक्यं हि यो वेद निहितं गुहायाम् इति हृदयान्तर्वर्तितया पुरुषान्तरात्मत्वपरम्परापर्यवसानभूमितया च प्रतिपन्नस्यास्यानन्दमयस्यादित्यान्तर्वर्तित्वमुपदिशति । पुरुषशब्दः स वा एष पुरुषोन्नरसमय इति प्रकृतशरीरपरः आनन्दमयस्यास्मिन्प्रकरणे प्रकृतत्वादयमिति निर्देशः । स यश्चायं पुरुष इति कथं प्रसिद्धवन्निर्देश इत्यपेक्षायां आनन्दवल्ल्यां पुरुषान्तर्वर्तितया आनन्दमयः प्रतिपन्न इति व्यवहितप्रकरणस्थत्वं सूचयता स इत्येनेन स्फोरयति । आदित्यान्तर्वर्ती भगवानिति कुतोवगम्यत इत्यपेक्षा चेत् ? तदा अन्तरादित्यविद्यान्निरूपयिष्यामीति भगवतो वेदाचार्यस्य हृदयम् । यद्वा कारणत्वं भगवति पर्यवसाययितुं भृगुवल्ल्या अनुद्यमानकारणत्व-प्रापिकामनन्तभयपदभूषितां तापनीयप्रसिद्धाभयहेतुत्वरूपभगवल्लक्ष्मचिह्नितां सन्निहितानन्दवल्लीन्निरूपयति । अनन्त पदञ्च द्वितीयान्तत्वान्न नपुंसकान्तत्वशङ्कार्हम् । वेदनं प्रति कर्मार्पणस्यावश्यकत्वात् । नच विवरणरूपत्वात्प्रथमान्तता शङ्कनीया । वित्परमाप्नोती ति पदविवरणेषु शेषपदेषु प्रथमान्तताया अदर्शनात् । आनन्दवल्ल्यां ब्रह्मविदाप्नोतिपरमि ति ब्रह्मज्ञानात्परप्राप्तिमुक्त्वा सत्यज्ञानादिमन्त्रेण ज्ञेयज्ञानप्राप्तिप्राप्यस्वरूपाणि विवृत्य, तस्माद्वा एतस्मादि त्यादिना आन्नात्पुरुष इत्यन्तेन परमित्युक्तं परत्वं विपश्चितेति मन्त्रेण विवृतं पुनर्विवृत्य तद्ब्रह्म विविच्य ज्ञापयितुं पुनरपि प्राप्यतोपयोगिपरत्वमुपपादयितुं ज्ञानप्राप्तिप्रकारमुपपादयुतुञ्च स वा एष पुरुषोन्नरसमय इत्यारभ्य उत्तरग्रन्थसन्दर्भः प्रवृत्तः । तत्र स्थूलारुन्धतीन्यायेन ब्रह्म ज्ञापयितुं पञ्चकोशावतार इत्येकः पक्षः । अस्मिन्पक्षे तस्यैष एवे ति वाक्यमुत्तरस्य पूर्वं प्रति शारीरत्वप्रतिपादनपरम् । अन्तरात्मत्वेनेवशारीरात्मत्वेनापि लिलक्षयिषितं ब्रह्म । वाक्यस्यायमर्थः ·पूर्वस्यांन्नमयस्यान्तरात्मतया सम्बन्धी यः एष एव तस्यान्नमयस्य शारीर आत्मापीति । परेतु - योयं प्राणमय एष तस्य पूर्वस्य शारीर आत्मेति योजयन्ति । तत्र यत्पदवैयर्थ्यम्, अयमिति पदाध्याहारः, तस्य पूर्वस्येति भिन्नवाक्यस्थयोः पदयोरन्वय इत्यस्वारस्यं स्पष्टम् । अस्मिन्पक्षे पूर्वं प्रत्युत्तरस्यैव शारीरत्वं वाच्यम्, नतु सर्वत्र एकस्य शारीरत्वम्, जगत्कारणत्वेन प्रतिपादित आत्मा क इत्यपेक्षायां स्थूलारुन्धतीन्यायेन तत्प्रतिपादनं हि चतुर्थकोशपर्यन्तेषु पूर्वेष्वेतदारोपेण पञ्चमकोशे स्वरूपप्रदर्शन एव स्वरसं

भवति, नतु प्रतिपर्यायमात्मनस्तदतिरेकबुद्धौ, नहि तत्र तदारोपेण लिलिक्षयिषया प्रवृत्ते वाक्ये मध्ये उत्तरोपदेशादन्येनारोपविच्छेदो युक्तिमान् । तस्माद्वा एतस्मादात्मन इत्यत्रात्मशब्दनिर्दिष्टोजीव इति आत्मशब्दप्रसिद्धिनिबन्धनभ्रमवारणाय जीवादन्यत्वमुपदेष्टुं पञ्चकोशावतार इत्यपरः पक्षः । तत्र द्वितीयादित्रिकं दृष्टान्तार्थं, - यथान्नमयात्प्राणमयोन्यः यथा च तस्मान्मनोमयः यथा वा तस्माद्विज्ञानमयः एवं विज्ञानमयादानन्दमयोन्यः इति । अस्मिन्पक्षे तस्यैष एवे ति सर्वत्रैकस्यशारीरत्वं प्रतिपाद्यते । वाक्यर्थस्तु अन्नमयस्य यश्शीरस्स एव प्राणमयस्येति । कथमन्नमये शारीर लाभः, तत्पर्याये तथोपदेशादर्शनात् ? ननु स वा एष पुरुषोन्नरसमय इति तच्छब्देन आत्मापरामृश्यते, तत्सामानाधिकरण्यं तच्छरीरत्वादेन वाच्यमिति तेन वाक्येनान्नमये शारीरलाभ इति चेन्न ; स इत्यव्यवहितस्य सृज्यस्य परामर्शादेष इति प्रत्यक्षदृष्टस्य निर्देशः । तस्माच्छारीरलाभः कथामिति चेत् ? उच्यते, आत्मान आकाश इत्यात्मसङ्कीर्तनात् पुरुष इति शरीरनिर्देशशाच्च परस्पराकांक्षाबलादुभयसम्बन्धावगम इति । आनन्दमये तस्यैष इति वाक्यमनन्यात्मत्वपरम् । स्थूलारुन्धतीन्यायपक्षे अन्योन्तर आत्मेत्यन्तरात्मसंशब्दनानि स्वरसानि, अन्तरात्मतयैव प्रतिपिपादयिषिततया तत्संशब्दसाफल्यात् । तत्र शारीरत्वस्य रूपणार्थत्वं आनन्दमये तद्वैकल्यं पर्यायान्तरस्थत्वञ्चास्वरसम् । अन्तरात्मत्वेनेव शारीरत्वेनापि लिलक्षयिषायान्नैतद्दोषद्वयं लगति । द्वितीयपक्षे आनन्दमये तस्यैष इति वाक्यस्यानन्यात्मपरत्वेपि पर्यायन्तरेष्विमानि वाक्यानि स्वरसानि ।

तत्र तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तर आत्मानन्दमय इत्यत्र सन्देहः किमानन्दमयो जीवः, उत परमात्मेति ? तस्यैष एव शारीर आत्मे ति आनन्दमयस्य शारीरत्वश्रवणात् स जीव एव, ब्रह्मादिष्वन्यतमे तदन्यस्मिन्वा क्वचिदुपचितपुण्ये जीवे निरुक्तेक्षणात्मशब्दतन्निष्ठोपदेशहेयत्वावचनप्रतिज्ञाविरोधाभावस्वाप्ययगतिसामान्यश्रुतत्वाना-मुपपत्तेः बहुस्यामिति प्रकृतेः शरीरतया परिग्रहादुपपद्यते, अथवा बहुस्यामिति भूयान् स्यामित्यर्थः प्रजायेयेत्यर्थः ; अस्मिन्पक्षे तत्तेज ऐक्षतेत्यत्र तेजश्शब्दः कर्तृलक्षकः, प्रकृतिवियुक्तस्वस्वरूपनिष्ठस्य मोक्ष उपपद्यते, कारणज्ञानेन कार्यज्ञानस्य विवक्षितत्वात्, तस्य चेह सम्भवात् ; जीवान्तरस्य तदकार्यस्याज्ञानेपि न दोषः, प्राधान्यात् तज्ज्ञानेन सर्वेषां ज्ञातप्रायत्वे वा प्रतिज्ञायास्तात्पर्यम् । एवं कल्पभेदेन पुरुषभेद इति पूर्वः पक्षः ।

तत्र राद्धान्तः आनन्दमयोभ्यासात् इति । आनन्दमय इति धर्मिणन्निर्दिशति, नेतरोनुपपत्तेरिति साध्यनिर्देशमन्यार्थ वक्ष्यामि, तदनेन सम्बन्धं स्यामिति प्रधानव्यावृत्तिमकरवम्,

तेनेतर इति जीवमवगमयिष्यामि, आनन्दवल्ल्यां स एको मानुशषानन्द इत्यारभ्य स एको ब्रह्मण आनन्द इत्येतावत्पर्यन्तेन कृतं, इदानीमयोगव्यवच्छेददशायामानिर्णीतचिदचि-द्विलक्षणार्थकब्रह्मशब्दाभ्यासात् भूयस्तदानन्दमयपदोपस्थापिततया मयडर्थोपस्थापकतया च कृतशीघ्रोपस्थितिकमानन्दशब्दाभ्यासं सद्वारकहेतुमभ्यासपदेन बोधयिष्यामीति भगावान् सूत्रकारो मन्यते । अभ्यासग्रहणेनापरिच्छेदे वाक्यस्य तात्पर्यातिरेकं व्यञ्जयति । जीवायोग्यमानन्दयोगं द्वारहेतुं मन्यते । तदयमर्थः - पर्यवसितः - आनन्दमयो जीवादन्यः, आनन्दपदाभ्यासचिह्नितवाक्य- प्रतिपन्ननिरतिशयानन्दयोगादिति । शरीरत्वं जगच्छरीरत्वादुपपन्नम् ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ।। (१-१-१४)

नित्यं वृद्धशरादिभ्य इत्यत्र भाषायामित्यनुवृत्तावप्यारम्भादेव नित्यत्वे सिद्धेपि नित्यग्रहणं छन्दसि विकल्पार्थमिति वेदाचार्यो मन्यते । विकारार्थोयम्मयडानन्दमय इति न हि सम्भवति स्वार्थिक इति, वैय्यर्थ्यात् ; नापि प्राचुर्यार्थः, जीवे वैपरीत्यदर्शनात् ; अल्पदुःखसम्बन्धापत्त्याजीवत्वप्रसङ्गेन जीवात्पप्रसङ्गेन जीवातिरिक्तेप्यसम्भवात् ; तस्मादुपक्रमानुसाराद्विकारशब्द एवायम्, स च जीवातिरेके न स भवति, तस्य विकारत्वानङ्गीकारात्, जीवे त्वानन्दविशिष्टरूपस्य कादाचित्कस्यानन्दाधीनतया कथञ्चिद्विकारार्थो युज्यते जीवस्य स्वत आनन्दरूपस्य स्वतस्संसारित्वावस्था वा तद्विकारः अत आनन्दमयो नेतर इति न, मयडर्थविकारानन्वयादिति शङ्कार्थः । विकारार्थत्वस्य जीवेतरयोरसंभवात् अन्नरसप्राणमनोविज्ञानवृत्तिप्राचुर्याणां पूर्व मयडर्थत्वात् प्राचुर्यस्य धर्म्यन्तरे सजातीयाल्पतयाप्युपपत्तेस्तस्यैवानन्दवल्ल्यां प्रतिपादनाच्च प्राचुर्यशब्दएवायम्मयट् पूर्वत्र प्राचुर्यसमानाधिकरणविजातीयाल्पत्वमपेक्ष्य, शरीर इव पुरुषेऽन्नरसांशात् इतरांशोऽल्पः, प्राणे प्राणवृत्तेरपादानादिवृत्तिरल्पा, मनस्यपि जाग्रत्स्वप्नावस्थापेक्षया सुषुप्त्यवस्थाया अल्पत्वान्मनोवृत्त्यभावोऽल्पः, तत्कालाल्पत्वेन तदल्पता, जीवे ज्ञानवृत्त्यपेक्षया सुखादिवृत्तिरल्पा, एवं सर्वत्र समानाधिकरणाल्पसिद्धावपि आनन्दमये व्यधिकरणस्य जीवानन्दस्यामनुष्या- नन्दादाचतुर्मुखानन्दादल्पत्वस्य प्रकरण एव मयडर्थनिरूपणार्थमेव प्रतिपादनान्मयट् प्राचुर्यार्थ एव ।

तद्धेतुव्यपदेशाच्च ।। (१-१-१५)

जीवानन्दहेतुत्वेनायमानन्दमय उपदिश्यते को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाती ति । आनन्दयितव्यादानन्दयितान्यः ।

यद्यवयवत्वमेव जिज्ञास्यत्वप्रयोजकस्य कारणत्वादेः अवयवत्वेपि सत्त्वात् । यद्यवयवत्वमेव जिज्ञास्यत्वविरोधि, तदा सोकामयतेत्यादिना जगत्कारणत्वेन श्रुतस्य असन्नेव स भवती त्यादिना ब्रह्मशब्दाभ्यासवत आनन्दमयरूपस्य परब्रह्मणोवयवे ब्रह्मशब्दप्रयोग इति वा, सोकामयत, असन्नेवे त्यादिवाक्यपरामर्शे तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायत इत्यत्रैव ब्रह्मशब्दः परब्रह्मान्यविषय इति वा स्यादिति कथं जिज्ञास्यत्वाक्षेपः । द्वितीये ब्रह्मशब्दाभ्यासरूपसिद्धान्तहेतूपन्यासासम्भवः । ब्रह्मणो जिज्ञास्यतायां कारणतायां यद्गतिसामान्यमुक्तम् ; तदयुक्तम्, ब्रह्म प्रत्यवयविन आनन्दमयस्य सोकामयते त्यादिना कारणत्वावगतेः; कारणस्यैव च जिज्ञास्यत्वनियमादिति पूर्वोक्ताक्षेपेण पूर्वपक्ष-प्रवृत्तेराक्षेपिकी सङ्गतिरित्यवान्तरसङ्गत्युपपादकत्वादुक्तिविरोधश्च । किंचात्रानन्दमये परमात्मत्वनिरूपणे सति तुल्यन्यायेनान्नमयादावपि परमात्मत्वं सिद्ध्यति, नवा? मुदैवोभयथापि लक्षणा । नापि द्वितीयः, अभ्यासस्य हेतुत्वेनाभिधानात्तस्य ब्रह्मशब्दाभ्यासरूपतायास्त्वयाभिधानाच्च तस्यान्नमयादावसिद्ध्यान्नमयादावेतन्न्यायाप्रवृत्तेः । यच्च ब्रह्मशब्द एव हेतुतया विवक्षितः, विज्ञानमयानन्दमययोः ब्रह्मशब्दाभ्यासस्यापि सत्त्वात्तत्कीर्तनमित्युक्तम् ; तन्न, ब्रह्मशब्दाभ्यासाच्चेत्यनुक्तेः, अतोभ्यासस्यैव हेतुतया कीर्तनादेतन्न्यायविषयत्वमन्नमयादीनामनुपपन्नम् । अथ स्यात्, प्रतिपर्यायं ब्रह्मशब्दप्रयोग एवाभ्यास इति विवक्षितः, आनन्दमयशब्दश्चोपलक्षणमेव, तश्चान्नमयादयः परमात्मा, प्रतिपर्यायं ब्रह्मशब्दप्रयोगादिति ; तन्न, तथा सति ब्रह्मशब्दस्यैव हेतुतयाभ्यासपर्यन्तधावन-वैय्यर्थ्यात् । ततश्चाभ्यासपदग्रहणेन विना यो हेतुर्न प्रतीयेत स एव हेतुतया विवक्षित इति वाच्यम् । स च प्रागेव दर्शितः । श्रुतिविरुद्धञ्चान्नमयादीनां परमात्मत्वम्, अन्नात्पुरुष इत्यन्नप्रसूतत्वेनोक्तं स वा इति परामृश्य एष इत्यपरोक्षनिर्देशेन, इदं शिरः अयं पक्षः अयमात्मा इदं पुच्छमित्यपरोक्षनिर्देशेन च प्रसिद्धशरीरस्यैवान्नरसमयत्वावगमेन तस्य परमात्मत्वासम्भवात् । प्रतिपर्यायं अन्योन्तर आत्मेति निर्देशश्च धर्मिभेद एव स्वरसः ।

यदुक्तं आत्मन आकाशस्सम्भूतः इत्यात्मशब्देन मान्त्रवर्णिकं ब्रह्मोच्यते, आकाशशब्देन भूताकाशतदभिमानिदेवता तद्विग्रहैतत्त्रितयान्तर्यामिणो गृह्यन्ते; आकाशाद्वायुरिति मुख्यामुख्यभेदेन चतुर्विधादाकाशादुक्तविधया चतुर्विधस्य वायोः सृष्टिरुच्यते, एवं वायोरग्निरित्यादिकमपि योज्यम्, अन्नात्पुरष इति चतुर्विधादन्नाच्छरीर-तदभिमानितदन्तर्यामिरूपस्य त्रिविधस्य पुरुषस्य सृष्टिरुच्यते, अत्र सर्वत्र सम्भूत इति यथायोग्यमुत्पत्तिप्रादुर्भावावुच्येते, स वा एष पुरुष इति प्रकृतमपि भूतादिकं सर्वं त्यक्त्वा आत्मादिदेहपर्यन्तमागतं तेन तेन शब्देन प्रकृतं हरिमेव परामृशति, तस्यैव

सृष्टिकर्तुश्शरीरेऽन्नमयादिपञ्चरूपत्वज्ञापनाय स इत्यात्मपदोद्दिष्टः परामृश्यते, एष इति जीवशरीरगः परामृश्यते, प्रत्यक्षे जीवशिर आदौ ईश्वरशिरः प्रभृतीनां व्यवस्थितेः इदमेव शिर इत्यादिनिर्देशः अप्रत्यक्षेपि वस्त्रप्रावृते प्रत्यक्षवस्तुसन्निधानादिदमिति निर्देशवत्, अन्योन्तर आत्मेति निर्देशश्च विशेषनिबन्धनः, इति तत्र किमाकाशादिशब्दा अक्षादिशब्देवच्छक्तिप्रवृत्तिनिमित्तभेदेन भूताकाशादिनानार्थान् बोधयन्तीति विवक्षितम्, उतैकेन प्रवृत्तिनिमित्तेनैकया शक्त्या इमानर्थान् बोधयन्तीति ? आद्ये एकस्य प्रयोगस्यैकार्थ्येनैव चारिताथ्यार्त् अनेकार्थबोधनासम्भवः । क्वचिन्मन्त्रादावेकस्मिन्प्रयोगे नानार्थत्वाङ्गीकारो निरुक्तिवचनेप्रामाण्यात् । तादृशनियामकाभानेप्येकस्मिन्प्रयोगेनेकार्थ-बोधनाङ्गीकारे धात्वादिभेदेन बह्वर्थोन्नयनसम्भवात् बह्वसामञ्जस्यम् । मुख्यार्थप्रतीतावप्य-मुख्यार्थप्रतीत्यङ्गीकारे अमुख्यत्वात् परित्यागः क्वापि न स्यात् । द्वितीयेपि किं प्रवृत्तिनिमित्तिं शक्तिर्वा एकैकत्र परिसमाप्य वर्तते, उत द्वित्वादिवद्व्यासज्य ? आद्ये कथं सर्वव्यक्तिबोधः । तादृशप्रवृत्तिनिमित्ते च न मानम् । न द्वितीयः, शक्तेर्व्यासज्यवृत्तौ तादृशधर्मे च मानाभावात् । किञ्च भगवत आकाशादिशब्दार्थत्वेऽर्थान्तराणि किमर्थमिष्यन्ते? किं युगपद्बोधनियमात्, उत प्रयोजनवशात्? आद्यमसिद्धम् । द्वितीये किन्तत् प्रयोजनम् ? शरीरे सृष्टिकर्तुरन्नमयादिपञ्चरूपप्रतिपादनमिति चेत्? माभूत्तत्प्रयोजनम् । नहि प्रयोजनानुसारिप्रमाणम्, किन्तु प्रयोजनमेव प्रमाणानुसारि । किञ्चैवमपि देवताविग्रहयोः किमर्थः परिग्रहः । अपि च पञ्चानां विग्रहाणां शरीरे सत्त्वे न किञ्चिन्मानम्? ऋगादीनाञ्च कथं शरीरान्तर्वर्तिता? कथञ्चशिरःप्रभृतिरूपता? ऋगादिशब्दानां प्रसिद्धार्थं परित्यज्याप्रसिद्धार्थकल्पनं च न प्रमाणपदवीमधिरोहति । स वा एष पुरुषविध एवेति प्रथमपर्याये न श्रुतम्, किन्तु द्वितीयादावेव, अतोनेन वाक्येन रूपणमेवावगम्यते । एवशब्द इवार्थः, अन्यथा वैय्यर्थात् । पुरुषे चक्षुरादि विधान्तराणामपि सत्त्वाच्छिरःप्रभृतीनामेव रूपणमिति ख्यापनार्थं तस्य पुरुषविधताम्, अन्वयं पुरुषविधः इत्युक्तम् । पूर्वोक्तपुरुषविधानुसारेणैवैतत्पुरुषविधत्वरूपणमित्यर्थः । एवं च शरीरे कथं पञ्चविग्रहसिद्धिः । यदुक्तं - स एष आनन्दमयः पुरुषाकार एव, तस्यानन्दमयस्य पुरुषाकारतानुसारेणायं विज्ञानमयः पुरुषाकारः तस्मादुद्भूत इत्यर्थ इति उद्भूतत्वबोधकपदाभावात् । तस्य पुरुषविधताम्, अन्वयं पुरुषविध इति तस्येत्यनेन पूर्वपर्यायोक्त परामर्शस्यायम् इत्यनेनैतत्पर्यायस्थपरामर्शस्य च स्वसत्वाच्च । विशेषस्यान्यशब्दनिबन्धनत्वं चानुपपन्नम्, विशेषो हि भेदकार्यकर इत्युक्तम्, ततश्चाभेदेन विरोधस्यापि भेदकार्यत्वादभेदे

सति भेदवदेव विशेषस्यासम्भवः । भेदव्यवहारस्य भेदकार्यत्वविवक्षायान्न विशेषेत्यभेदव्यवहारजनकत्वमाज्ञापनभीत्यादिमुखेन । अतो भेदव्यवहारजनकत्वं भेदव्यवहारविषयत्वमेव । तत्र किं भेदव्यवहारो विशेषे मुख्यः, उतामुख्यः ? मुख्यत्वे किं भेदशब्द एकार्थः, उत नानार्थः ? आद्ये विशेष एव भेदः स्यात्। अन्त्यस्त्वसिद्धः मानाभावात् । न द्वितीयः, प्रकृते मुख्ये बाधकाभावात् । ननु मुख्यार्थग्रहणे बाधकमस्ति, तथाहि अन्नमयादिपर्यायेषु येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनन्दं ब्रह्मणो विद्वान्, ब्रह्म ज्येष्ठमुपासते, विज्ञानं ब्रह्म चेद्वेदेति ब्रह्मशब्दः श्रूयते, तथा एतमन्नमयमात्मानमुपसङ्क्रामती त्यात्मशब्दो मुक्तप्राप्तत्वञ्च श्रूयते, नच शरीरपरिग्रहे तद्युज्यते, तस्येदमेवशिरः, अयन्दक्षिणः पक्षः अयमुत्तरः पक्षः, अयमात्मा, इदं पुच्छं प्रतिष्ठे त्युपदेशश्च व्यर्थः शरीररशिरःप्रभृतेः प्रत्यक्षत्वेन उपदेशानपेक्षणात् ; अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति चानुपपन्नम्, भूतात्तृत्वभूताद्यत्वयोश्शरीरेऽसम्भवात् ; सर्वं वै तेऽन्नमाप्नुवन्ती त्यन्नमयज्ञानान्मोक्षः श्रूयते, नच शरीरज्ञानान्मोक्षस्सम्भवति किञ्च सर्वमेव त आयुर्यन्तीति प्राणमयज्ञानान्मोक्षः श्रूयते, कदापि मरणाभावो हि सर्वमायुः, न चासौ विना मोक्षाद्युज्यते ; तथा प्रणां देवा इति सर्वदेवचेष्टकत्वं प्राणमयस्य श्रूयते, नच तदुभयं प्राणपरिग्रहे युज्यते ; किञ्च - यतो वाचो निवर्तन्त इति वाङ्मनसागोचरत्वम्मनोमयस्य श्रूयते, तथा विज्ञानं देवास्सर्वे, ब्रह्म ज्येष्ठमुपासत इति सर्वदेवोपास्यत्वं ज्येष्ठत्वं च विज्ञानमयस्य श्रूयते, न च कोशपरिग्रहे तद्युज्यते ; इतिचेत् ? उच्यते । न तावद्ब्रह्मशब्दसामानाधिकरण्यानुपपत्तिः, एष इति प्रत्यक्षसिद्धस्य शरीरस्योपक्रम एवान्नमयपर्याये निर्देशात्पर्यायान्तरेषूपक्रमे एतस्मादन्योऽन्तर आत्मेति निर्देशाच्चोपक्रमानुसारेणोपसंहारस्थस्य ब्रह्मशब्दस्य नेयत्वात् ; मनोमयविज्ञानमययोश्च न ब्रह्मशब्दप्रयोगोस्ति यतो वाच इत्यस्यार्थः प्रागेव वर्णितः विज्ञानश्लोकस्यायमर्थः विज्ञानशब्देन जीव उच्यते, यज्ञशब्दो विहितकर्मोपलक्षकः, कर्माणीति निषिद्धकर्मपरः, अनेन कर्मवश्यत्वमुक्तम्, निरुक्तोभयविधपाप्मनिवृत्त्युपायं सदाचारं प्रदर्शयन्नाह विज्ञानं देव इति, विज्ञानशब्दो ब्रह्मविशेषणम्, विज्ञानं ब्रह्मेति विज्ञानशब्दः कर्तृनिर्देशकः, कर्माकाङ्क्षाया ब्रह्मपदेन शान्ते, कर्त्राकाङ्क्षया निवर्तकान्तराभावाच्च, देवग्रहणेन तेषामेवोपासनाधिकार इति भ्रमं वारयितुं विज्ञानमिति जीवमात्रनिर्देशः कृतः, पाप्मन इति न सुकृतन्न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त इत्युक्तयोरिह यज्ञकर्मशब्द-निर्दिष्टयोस्सुकृतदुष्कृतयोर्ग्रहणम्, एतमन्नमयमात्मानमुपसङ्क्रामतीत्यत्रात्मशब्दः

प्राप्यपरान्नमयादियशब्दानां परमात्मपर्यन्ततां ख्यापयितुम्, पूर्वमन्नमयादिसामानाधिकरण्येन क्वाप्यात्मशब्दाप्रयोगात् इह च प्राप्ये सर्वत्रान्नमयसामानाधिकरण्येनात्मशब्दप्रयोगाञ्च पूर्वं कोशमात्र तात्पर्यमुत्तरत्र परमात्मतांत्पर्यं च स्पष्टमेवावगन्यते च तस्येदमेव शिर इत्याद्युपदेशश्च उत्तरपर्यायेषु एभिरेव शिरःप्रभृतिभिः पञ्चभिरवयवैः पुरुषविधत्वं रूपयिष्यत इति ज्ञापनार्थः; अद्यतेऽत्ति चे त्यत्र भूतश्शरीरिभिरन्नमद्यते भूतानि शरीरिण अन्नमात्राधिक्यादत्ति - हिनस्तीत्यर्थः, अतो नात्तृत्वाद्यनुपपत्तिः; सर्वं वै तेन्नमाप्नुवन्तीत्यत्रान्नं ब्रह्मतयोपासीनस्य सर्वविधान्नप्राप्तिरेवोच्यते, अन्यस्यान्यथोपासनं च स्थापयिष्यते; सर्वमेव त आयुर्यन्ती त्यत्रापि न मोक्ष उच्यते, आयुश्शब्दो हि द्वादशमासपरिमितजीवनकालपरः, स च कालो मोक्षो नास्त्येव, अत आयुश्शब्द एव सांसारिकं पलं द्योतयति; सर्वशब्दश्शतसंख्यापरः, शतायुः पुरुष इत्यभिधानात्; प्राणान्देवा अनुप्राणन्तीत्यत्र प्राणाधीनजीवनमेव स्वरसतोऽवगम्यते, अतो नार्थान्तरोत्प्रेक्षावकाशः; तस्मादन्यशब्देन भेद एव गृहीतुं युक्तः, न तु तदतिरिक्तो विशेषः। यञ्च विशेषसमर्थनम्, विज्ञानमानन्दं ब्रह्मे त्यत्र विज्ञानत्वानन्दत्वब्रह्मत्वानां धर्माणां धर्मिणो वा भेदाभावेन विज्ञानादिशब्दानामपर्यायत्वाय विशेषोऽङ्गीकरणीयः; किञ्च भेदप्रतिनिधेर्विशेषस्याभावे धर्मधर्मिभावो धर्माणामनेकत्वं च न युक्तम्, धर्मधर्मिणोर्धर्माणां च परस्परं भेदाभावात्, अयञ्च विशेषो वस्त्वभिन्न इति; तत्र न तावद्विज्ञानामपर्यायत्वाय विशेषकल्पनम्, धर्म्याभिन्नेन विशेषेणेव धर्म्यभिन्नैधर्मैरेवापर्यायत्वोपपादनसम्भवात् नापि धर्मधर्मिभावाय धर्मानेकत्वाय वा तत्कल्पनम्, भेदस्य धर्मधर्मिभावधर्मानेकत्वयोरुपपादकत्वे तदभावे तदनुपपत्तेः; यदि भेदाभावधर्मधर्मिभावयोः प्रमाणसिद्धयोरुभयोरप्यपह्नवासम्भवः, तर्हि भेदो न धर्मधर्मिभावप्रयोजकः, व्यभिचारात्। यदि च तत्र स प्रयोजकः, तर्हि प्रयोजकाभावेपि प्रयोज्यसिद्धिं कथं मन्यसे। प्रयोजकान्तरेणेति चेत्? किं तद्वस्तु तस्य प्रोयजकत्वञ्चान्यत्र क्लृप्तम्, किंवात्रैव कल्प्यते? नाद्यः, असिद्धेः। न द्वितीयः, लाघवेनात्र प्रयोजकनैरपेक्ष्यस्यैव कल्पयितुमुचितत्वात्। तस्माच्छ्रुतिविरुद्धमन्नादीनां परमात्मपरत्वम्। द्वितीये सूत्रमभ्यासग्रहणस्य ब्रह्मशब्दगोचरतां वारयति। हेत्वाक्षेपसमाधानार्थत्वे ह्यत्रास्य सन्निवेशोपपत्तिः। हेत्वाक्षेपकत्वाञ्च मयडर्थस्य हेतुत्व एव। अतो मयडर्थप्राचुर्योपपादकाभ्यास एव हेतुतया विवक्षितः, न तु ब्रह्मशब्दाभ्यास इति। तृतीयसूत्रे तच्छब्दास्वारस्यं स्पष्टम्। को ह्येवान्या दित्यत्र च एष ह्येवानन्दयाती त्युत्तरवाक्यानुसारादननप्राणनयोरैहिकामुष्मिकानन्दरूपता स्वरसतोऽवगम्यते,

अतोऽर्थान्तरकथनमनुपपन्नम् । चतुर्थसूत्रे मान्त्रवर्णिकस्यानन्दमयपदेनैव गानादन्नमयादिशब्दैरपि गीत इत्यसङ्गतम्, अन्नमयादीनामब्रह्मत्वस्य स्थापनात् । पञ्चमसूत्रार्थोप्यनुपपन्नः, सर्वं वै तेऽन्नमाप्नुवन्ती त्यादीनां मोक्षपरत्वाभावस्योक्तत्वात् । सप्तमसूत्रेऽपेक्षापदमस्वरसम् । अष्टमसूत्रेऽस्मिन्निति व्यर्थम्, तद्धेतुव्यपदेशादित्यादाविवाधिकरणग्रहणाभावेपि प्रकृतत्वादेवाधिकरणलाभात् ।

अन्येषामेकदेशिमते तद्धेतुव्यपदेशाच्चेत्यत्र यो विशेष उक्तस्सोऽनुपपन्नः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती त्यत्र जीवानां ब्रह्मनन्दश्रयत्वे जीवानन्दे नाशोत्पत्तितरतमभावाः जीवस्य किञ्चिज्ज्ञत्वादीनि च विरुद्ध्येरन्, ज्ञानस्यैवानन्दरूपत्वात् । ब्रह्मगतसार्वज्ञ्यस्य जीवे प्रसङ्गे तस्य किञ्चिज्ज्ञत्वविरोधः । तारतम्येनाभिव्यक्तेः सर्वमुपपद्यत इति चेत्? किमभिव्यक्तौ तरतमभावो विवक्षितः? तथा सत्यानन्दस्यैव स्वाभिव्यक्तिरूपतया तत्र नानात्वनित्यत्वतरतमभावाः ब्रह्मणि किंचिज्ज्ञत्वं जीवे सर्वज्ञत्वञ्च प्रसज्येरन् । अभिव्यक्तेरन्यत्वेति तस्यास्तरतमभावो विषयबाहुळयाल्पत्वाभ्यां वाच्यः, सोऽनुपपन्नः, अभिव्यङ्ग्यस्यानन्दस्यैकत्वात् । किञ्च अस्यान्दस्य ब्रह्मण्यमिव्यक्त्यन्तरापेक्षास्ति नवा? आद्ये स्वप्रकाशत्वभङ्गः । द्वितीये कुतो जीवेऽभिव्यक्त्यन्तरापेक्षा । ततश्चाविकला एव पूर्वोक्ता दोषाः । अभिव्यक्तन्तराङ्गीकारे गौरवमधिकम् । अथ तरतमभावेन अभिव्यक्तिर्नाम - तरतमभावविशिष्टतयाभिव्यक्तिः ; तत्र किमभिव्यक्तिस्तत्रोत्पत्तिः तत्र सत्वं तत्र प्रतीतिर्वा स्यात् ? आद्ये व्याघातः, नहि ब्रह्मानन्दस्यात्रोत्पत्तिसम्भवः । द्वितीये तत्तदधिकरणावच्छेदेन तरतमभाव उत्पद्यत इति स्यात्, तत्तु व्यक्त्यैक्ये सत्यनुपपन्नमेव । तृतीये यदि सा प्रमा तदा दोषतावस्थ्यम्, यदि भ्रमस्तदा अधिकन्तु प्रविष्टन्न तद्धानिकरं इति न्यायेन सर्वेषान्निरतिशयानन्दत्वमपरिहार्यम् । तरतम-भावारोपस्तत्स्वरूपतिरोधानेनैवेत्युक्तावानन्दाप्रकाशः प्रसज्यते, निरवयवत्वात् । किञ्चित्स्वरूपन्तिरोहितम्, किञ्चित्प्रकाशत इत्युक्त्यसम्भवः, तरतमभाववैयर्थ्यं च । अथ तरतमभावोपन्नान्तः करणवृत्त्वच्छेद एव तारतम्येन अभिव्यक्तिः? तथा सति जीवानन्दस्य ब्रह्मानन्दात् अविशेषः । उपाधिगतस्यात्रारोपे तूक्त एव दोषः । अथ ब्रह्मानन्दस्य सर्वगतस्यानुभवेन कस्यचित्प्रीतिमान्द्यं कस्यचित्तदुत्कर्षश्च तारतम्येन अभिव्यक्तिः ; तथासत्येतस्यैवेत्यवधारणविरोधः । अवधारणेन जीवे ब्रह्मानन्दातिरिक्तानन्दस्य निषेधात् । ननूपजीवन्तीति ह्युच्यते, न तु तदानन्देनानन्दिन इति, ततश्चोपजीवन्तीति तमेवानन्दं भुञ्जत इत्यर्थः, इति; तन्न, स्रक्चन्दनादिभोगानुभवविरोधात् । तस्मादियं

श्रुतिरान्दवल्लीवचतुर्मुखाद्यानन्दानां ब्रह्मानन्दापेक्षया खद्योतकल्पत्वपरा । रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवती त्यत्रापि भगवतो भोग्यत्वमेव प्रीतयते, नतु तदानन्देनानन्दवत्त्वम् । रसेनानन्दवत्त्वोक्तावपि ब्रह्मणैवानन्दवत्त्वं स्यात्, नतु ब्रह्मानन्देन । तस्मात्, रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवतीति महानन्दलक्षणमोक्ष उक्तः । स कुतो भवतीत्यपेक्षायां एष ह्येवानन्दयाति इत्युच्यते । तदुपपादकं को ह्येवान्यात्कः प्राण्यादिति । प्रकर्षेणानन्दः सुखेन जीवनम् । तस्मादान्दयितव्यानन्दयित्रोरनेन सन्दर्भेण भेदप्रतीतिस्सूत्रे विवक्षिता । सा च परमसाध्य एव हेतुः ।

एकदेश्यन्तरमते गुहाविवरणरूपता कुतः प्रतीयते ? यदि गुहायां परमे व्योमन्निति अधिकरणद्वयनिर्देशादुत्तरत्राप्यधिकरणद्वयं निर्दिश्येत, तदा विवरणविवरणिभावः प्रतीयेत । यदि वा परमव्योमस्थं वस्तु निर्दिश्येत, तदापि प्रतीयेत । न च तन्निर्देशोऽस्ति । ब्रह्म तु ब्रह्मपुच्छं प्रतिष्ठेति प्रतिष्ठात्वेन निर्दिष्टम्, नत्वाधेयत्वेन, तत्रापि पर्यायान्तर साधारणोपसर्जनावयवत्वेन । अत इदं कथपरमव्योमनिहितप्रकाशकं भवेत् । अत आनन्दमयादान्तरस्यानभिधानात् ब्रह्मेत्युपक्रान्तो गुहानिहितत्वेनोक्तः तस्माद्वा एतस्मादिति आत्मशब्दनिर्दिष्टः सोकामयते त्यदिना वक्ष्यमाणः । अतएव प्रकरणप्रधानप्रतिपाद्यश्चानन्दमय इत्यवगम्यते । तेन तद्विरुद्धा विवरणरूपता । गुहाविवरणार्थत्वे अन्योन्तर आत्मेति अन्तरात्मत्वेनोपदेशो न समञ्जसः । अतः स्थूलारिन्धतीत्यायेन ब्रह्मलिलक्षयिषैव प्रकरणस्य प्रतीयते । हृदयस्यैव गुहात्वेन तदाकाशवर्तित्वेन भगवतः श्रुतिस्मृतिषु प्रसिद्धेर्नेविवरणापेक्षा । अपेक्षायामपि न तद्विवरणयोग्यस्सन्दर्भः । सूत्रार्थोप्यनुपपन्नः । तथाहि भीषास्माद्वातः पवते, भीषोदेति सूर्य इति अस्मादित्यानन्दमयः परामृश्यते । यद्ययमेव सैषानन्दस्ये त्यानन्दशब्देन परामृश्यते तदा अस्माद्वा इतिवदतस्य मीमांसा भवतीत्येव स्यात्, नन्वानन्दस्येति । तस्मादानन्दग्रहणं आनन्दमयविशेषणानन्दपरिग्रहार्थमेव अत आनन्दमयः पचुरानन्दाश्रय एव, नतु प्रचुरानन्दरूपः । पूर्वापरसूत्रेषु चिच्छक्तेरप्रसङ्गेन चिच्छक्तिरिति साध्यनिर्देशश्चानुपपन्नः । द्वितीयसूत्रार्थोऽप्यनुपपन्नः, जीवानन्द इव ब्रह्मानन्देपि प्राचुर्यासम्भवात् । प्रचुरत्वं जीवानन्दाल्पत्वापेक्षम्, ब्रह्मानन्दस्यैव जीवानन्दरूपतायास्त्वयाभ्युपगमात् कथन्तत्र प्राचुर्यम् । अत्र हि प्राचुर्यम् - प्रभूतत्वं दशवर्णस्वर्णस्य स्वर्णान्तरादिवोत्कर्षः, ततश्च स एवानन्दोन्यत्रापीति कथमुत्कर्षः । अतः प्राचुर्यार्थोनुपपन्नः । एतेन तृतीयमपि निरस्तम्, अत्र विवक्षितप्राचुर्यस्यावयवबाहुळयसापेक्षकेदारन्यायविषयत्वासम्भवात् । एवमुत्कर्षविवक्षयैव हि शतं एक इत्यावर्त्यते । दृष्टश्च यूनो युवतिसम्भोगजन्यानन्दात्स्थविरस्य, तद्भोगजन्यानन्दस्यापकर्षः ।

अन्नमयादयश्चेतना इत्येकदेशिपक्षोप्यनुपपन्नः, पूर्वान्नमयादिव्यावृत्त्यर्थमेव आत्मानमुपसङ्क्रामति, आत्मानमुपसङ्क्रम्ये त्यात्मपदसामानाधिकरण्येन प्रयोगात् । अत एवान्नमयादीनां शोध्यत्वोपपत्तिः, तस्मिन्वाक्ये आत्मपदप्रयोगाभावाश्च । नेतरोनुपपत्तेरि त्यादेरधिकरणान्तरत्व वर्णनञ्चानुपपन्नम्, हिरण्यगर्भविषयचिन्तातात्पर्यसूचकाभावात् । ईक्षत्याद्यधिकरणेषु तत्तच्चिन्तासूचकानि दृश्यन्ते । प्रतिज्ञाचकाराभावयोरवान्तरप्रति-ज्ञात्वेनोपपत्तिः प्रागेवाभिहिता । कामाच्च नानुमानापेक्षा इत्यत्र अपेक्षापदवैयर्थ्यं स्पष्टमेव । इति ।

इतरपक्षे अभ्यासशब्द स्वरसः, ते ये शंत स एक इतिवद्विषयैक्याभावात् । तद्धेतुसूत्रवैयर्थ्यं च, आनन्दयितृत्वस्याभ्यासादित्यत्र विवक्षिततया व्याख्यातत्वात् । कामादिति सूत्रार्थः परपक्षदूषणे नैव निरस्तः । इति ।

**नयमयूखमालिकायाम् - आनन्दमयाधिकरणम् ।**

यदि सतो मुख्यमीक्षणं वाच्यं, तर्हि चेतनत्वान्मुख्येक्षणार्हो जीव एव जगत्कारणमस्त्विति पूर्वपक्षोत्थानादनन्तरसङ्गतिः, तैत्तिरीयाः आनन्दवल्ल्यां ब्रह्मविदाप्नोति परमित्युपक्रम्य किन्तद्ब्रह्म कीदृशन्तद्वेदनं कीदृशं तद्वेदनफलमित्याकांक्षायां सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता इति मन्त्रेण ब्रह्मणः स्वरूपं तद्वेदनप्रकारं तत्प्राप्यफलस्वरूपञ्चोपवर्ण्य तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत इत्यादिना तस्मादेव ब्रह्मण आकाशादिसकलजगदुत्पत्तिमुक्त्वा तस्य सुखप्रतिपत्त्यर्थं स्थूलारुन्धतीन्यायेन अन्नप्राणमनोबुद्धिषु क्रमेण तदबुद्धमवतार्य तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय इति आनन्दमयमुपक्रम्य तस्मिन्नेव प्रस्तुतजगत्कारणब्रह्म बुद्धिस्समापिता, तदनन्तरं तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मेति आत्मान्तरोपदेशाभावात् । स किमानन्दमयो जीवः, उत परमात्मेति संशये पूर्वपक्षः जीव एवायं, एष एव शारीर आत्मे ति शारीरत्वश्रवणात्, तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः आनन्द आत्मा । ब्रह्मपुच्छं प्रतिष्ठेति प्रियमोदप्रमोदानन्दशब्दितेष्टवस्तुदर्शनतल्लाभतदुपयोगजन्यसुखतदनन्तरानु-वर्तमानतृप्तिसुखसम्बन्धिलिंगात्, यत्र सम्पादनीयभोग्यस्य जीवस्येव नित्यावाप्त-समस्तकामस्य ईश्वरस्य इष्टवस्तुलाभजन्यसुखविशेषाणामाशङ्काऽनास्पदत्वात्, तस्माद्वा एतस्मादात्मन आकाशस्संभूत इत्यत्र तस्मादित्यनेन परामृष्टस्य प्रकृतस्य ब्रह्मणो

जीवरूपत्वप्रतिपत्त्यर्थं एतस्मादिति निर्देशेन इदानीमनुभूयमानतायाः आत्मन इति निर्देशेन लोकवेदप्रसिद्धात्मशब्दवाच्यतायाश्च स्फुटीकरणात्, तदनन्तरं लौकिकानामहंबुद्धिगोचरत्वेन आत्मशब्दवाच्यत्वशङ्कास्पदेषु अन्नप्राणमनोबुद्धिषु स्थूलारुन्धतीन्यायेन तद्बुद्ध्यवतारणाच्च, अन्नप्राणादिषु लौकिकानां ब्रह्मबुद्ध्यभावेन तेषु ब्रह्मविषयस्थूलारुन्धतीन्यायानवतारणात् । न च जीवस्य सर्गाद्यकाले स्वशरीरसृष्टेः प्राक् शरीराभावेन तत्साध्यसृष्टिसंकल्पानुपपत्तेः स्वशरीरसृष्ट्ययोगात् तन्मूलसृज्यान्तर सृष्ट्यसम्भवश्शङ्कनीयः, तदानीमप्यनादिलिङ्गशरीरसत्त्वेन तत एव सृष्टिसङ्कल्पस्य तन्मूलसृज्यवर्गस्य चोपपत्तेः, अभावं बादरिराह ह्येव मित्यधिकरणे मुक्तानां शरीराभावदशायां सङ्कल्पजपित्रादिस्रष्टृत्वस्य तत एव उपपादयिष्यमाणत्वात् । ननु आनन्दमयोक्त्यनन्तरं ब्रह्म पुच्छं प्रतिष्ठेति ततोऽन्यदेव ब्रह्म श्रूयत इति चेन्न । प्रियमेव शिर इत्यादिना जीवानन्दावयवानां मुक्त्यनन्तरं तदीयाखण्डानन्दस्य संसारदशायामावृतस्य तत्र ब्रह्मशब्देनाभिधानात्, तस्यैव च अखण्डानन्दस्य मुक्तिदशायामभिव्यक्तिः तद्वेदनफलत्वेन ब्रह्मण विपश्चितेति ब्रह्मशब्देन प्रदर्शिता, तत्र हि भोग्यसाहित्ये तृतीया, न भोक्तृसाहित्ये, भोक्तृकर्तृकभोगस्य आनन्दमयोपासनाफलकोटौ निर्देशायोगात् । न च पुच्छब्रह्मणो जीवान्यत्वाभावे असन्नेव स भवति अस्ति ब्रह्मेति चेद्वेद सन्तमेनन्ततो विदुरिति ब्रह्मसत्त्वासत्त्ववेदनोक्तिर्न युज्यते, जीवसत्त्वस्य सुप्रसिद्धत्वेन तस्यासत्त्वशङ्कानर्हत्वादिति वाच्यम् । अन्नमयादिश्लोकानां पुच्छवद्विषयत्वेन आनन्दमयपर्यायश्लोकस्यापि पुच्छवदानन्दमयविषयताया एव युक्तत्वात्, आनन्दमयस्य, प्रियमोदादिमत्तया प्रसिद्धावपि ब्रह्मशब्दोक्ताखण्डानन्दवत्तया प्रसिद्ध्यभावेन सत्त्वासत्त्ववेदनयोस्तद्विषयतोपपत्तेः । तस्मादानन्दवल्ल्यां जीव एव जगत्कारणत्वेन प्रतिपाद्यते, न तु तदतिरिक्तं ब्रह्म, एवं च तदनुसारेण कारणवाक्यान्तराण्यपि जीव एव पर्यवस्यन्ति । अत एव सद्विद्यायां सच्छब्देन उपक्रान्तं जगत्कारणं वस्तु तत्वमसीति जीवरूपतयोपसंहृतमिति । एवं प्राप्ते सिद्धान्तः - यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्नबिभेतिकुतश्चनेति निरतिशयदशाशिरस्कत्वेन अभ्यस्यमानो महानन्दो जीवेऽल्पसुखभागिनि असम्भाव्यमानः तदितरमीश्वरमाश्रयमासाद्यैव निर्वृणोति । एवं भूतमहानन्दभागानन्दमय ईश्वर एव, न जीवः जीवस्याप्येवंभूत आनन्दोभ्युपेयत इत्युक्तमिति चेत्, सत्यमुक्तं दुरुक्तं तु तत् । युवा स्यात्साधु युवाध्यायकः आशिष्ठो द्रढिष्ठो बलिष्ठः तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्द इत्युक्तलक्षणमानुषानन्दप्रभृति प्राजापत्यानन्दान्तसकलप्राणिवर्गानन्दजातादधिकतमतया ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्द इति कीर्तितस्य आनन्दमयानन्दस्य पूर्ववाक्येषु तदपेक्षया अतिक्षुद्रानन्दभाक्त्वेन कीर्तिते जीववर्गे संभावनानर्हत्वात् । किञ्च

तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानंदमय इति विज्ञानमयशब्दिताज्जीवादन्यत्वेनोप-क्रान्तस्य आनन्दमयस्य कथं जीवत्वाशङ्का ? न च विज्ञानमयशब्दो बुद्धिपरश्शङ्कनीयः। योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरित्यादिश्रुत्यन्तरेषु जीव एव प्रयोगात् विज्ञानमयपर्याये विज्ञानं देवास्सर्वे ब्रह्मज्येष्ठमुपासत इति केवलविज्ञानशब्दोऽपि श्रूयत इति चेत् तस्यापि यो विज्ञाने तिष्ठन्नित्यादिश्रुत्यन्तरेष्विव जीवपरत्वात्, विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चेति तस्य यज्ञादिषु कर्तृत्वश्रवणात्, बुद्धेस्तेषु करणत्वेन कर्तृत्वाभावात् । अपि च जीवमानन्दमयं वदता तत्र मयडर्थः क इति वक्तव्यं, न विकारः, मयड्वैतयो र्भाषायामभक्ष्याच्छादनयोः इति सूत्रेण भाषायामेव विकारावयवार्थयोर्मयड्विधानात्, कथं तर्हि यस्य पर्णमयीजुहूर्भवतीत्यादिवैदिकप्रयोगः ? द्व्यचश्छन्दसि इति विधानान्तरात् । इदं हि छन्दसि मयटोऽप्राप्तस्य च प्राप्त्यर्थं विधानं । कथं तर्हि वैदिको विज्ञानमयशब्दः ? नात्र विकारार्थो मयट्प्रत्ययः । किन्तु विज्ञानशब्दोक्तबुद्धिवृत्तिप्राचुर्यार्थः । तस्माद्विकारार्थत्वासंभवात् आनन्दमयेऽपि मयट्प्रचुर्यार्थ एव वाच्यः । प्राचुर्यार्थत्वञ्च प्रागुदाहृतानन्दमीमांसावाक्य-शेषोपदर्शितप्रकारेण मानुषादिप्राजापत्यान्तसकलजीववर्गसुखापेक्षया आधिक्यरूपमिति न कस्यापि जीवस्य आनन्दमयत्वशङ्कावकाशः । एतेन आनन्दप्राचुर्यार्थक आनन्दमयशब्दो जीवेऽप्युपपद्यते, सांसारिकदुःखलवभाजि मुक्त्यभिव्यंग्यमहानन्दवति जीवे समानाधिकरणदुःखाल्पत्वापेक्षाऽऽनन्दाधिक्यरूपप्राचुर्यार्थसंभवात् । प्राचुर्यार्थशब्दस्य उत्तरत्वे समानाधिकरणविजातीयाल्पत्वापेक्षमेव हि प्राचुर्यमर्थः । न तु प्रचुरब्राह्मणो ग्राम इत्यत्रेव व्यधिकरणसजातीयाल्पत्वापेक्षं, तथैव व्युत्पत्तेरिति निरस्तम् । वाक्यशेषे व्यधिकरणसजातीयाल्पत्वापेक्ष एव प्राचुर्ये कीर्त्यमाने विधान्तरेण प्राचुर्यग्रहणायोगात् । अव्यवस्थितपौर्वापर्यस्य प्रचुरशब्दरूपस्य नामपदस्य उत्तरत्वे तथा व्युत्पत्तावपि तत्प्रकृतवचने मयडिति सूत्रविहितस्य नियतोत्तरभावस्य मयड्प्रत्ययस्य उत्तरत्वे तथा व्युत्पत्तिकल्पकाभावाच्च । तस्मादानन्दमयो ब्रह्मैव । अत एव तस्योपक्रमे जीवोपास्यत्वनिर्देशः। यो वेद निहितं गुहायामिति जीवासंभावितविविधद्रष्टृत्वरूपसार्वज्ञ्यनिर्देशः। सह ब्रह्मणा विपश्चितेति वाक्यशेषे च को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयातीति जीवानन्दयितृभावव्यपदेशः, सोऽकामयत बहु स्यां प्रजायेयेति हिरण्यगर्भादिजीवासंभावितप्रधानानपेक्षस्वतन्त्रसृष्टिकामनाव्यपदेशः। रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति जीवास्वादनीयत्वव्ययपदेशश्च । एतैरप्युक्रमोपसंहारगतहेतुभिरानन्दमयो न जीवः किं तु ब्रह्मैवेति प्रधानस्येव जीवस्यापि न सद्विद्यानन्दवल्ल्यादिकारणवाक्यप्रतिपाद्यत्वमिति सिद्धम् ।।

**श्रीभाष्यप्रकाशिकायाम् - आनन्दमयाधिकरणम् ।**

चेतनैकान्तेक्षणादिधर्मेणाचित्प्रधानवैलक्षण्येऽपि कारणवस्तुनो न चिद्वैलक्षण्यमित्युत्थितेस्सङ्गतिः।

आनन्दमयाधिकरणे ब्रह्मविदाप्नोति परं इत्युपक्रान्तब्रह्मस्वरूपतदुपासनतत्फल प्रकारान् सत्यं ज्ञानमनन्तं इत्यादिनोपदिश्य आत्मन आकाशः इत्यादिना तदुपयोगित्वेन आकाशाद्युत्पत्तिमुक्त्वा तस्य सुखप्रतिपत्त्यर्थ स्थूलारुन्धतीन्यायेनान्नशब्दित शरीरप्राणमनोविज्ञानमयेषु ब्रह्मबुद्धिमवतार्य आनन्दमयानन्तरमन्तरात्मानुपदेशेन प्रस्तूतब्रह्मशब्दितकारणवस्तुभूतान्तरात्मबुद्धेः तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः इत्युक्तानन्दमय एव परिसमाप्त्यवगमेन तस्मिंश्च तस्यैष एव शारीर आत्मा इति कर्मानुबन्धिशरीरसम्बन्धप्रतीत्या शरीरप्राणादितत्तदन्तरवस्त्वनुक्रमपाठ-लक्षणस्थानप्रमाणेन शरीरादिजीवोपकरणप्रायपाठेन सद्विद्यायां तत्त्वमसीति सच्छब्दवाच्यकारणवस्तुनो जीवैक्योपदेशेन तत्रेक्षणादिसम्भवेन च आनन्दवल्लीसद्विद्ययोश्चेतन - परत्वसिद्धावन्येषामपि तथात्वमिति कारणवस्तुनो न सूक्ष्मचिद्वैलक्षण्यसिद्धिरिति प्राप्ते - सैषाऽऽनन्दस्य मीमांसा भवति इत्यारभ्य ते ये शतम् इत्यादिना यतो वाचः इत्यन्तेन शतगुणितोत्तरक्रमेणाभ्यस्यमाननिरतिशयदशाशिरस्कानन्दविशेषस्य सुखलवभागिनि प्रत्यगात्मन्यसम्भावितस्याऽऽनन्दमये श्रवणात्, तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः इति विज्ञानमयशब्दितज्ञानगुणकाज्जीवादन्यत्वेन आनन्दमयस्य व्यपदेशाच्च, आनन्दमयस्य जीवान्यत्वे निश्चिते, निरतिशयानन्दरूपलिङ्गेन स्थानादेरेव बाधौचित्यात्, तत्त्वमसीति जीवैक्योपदेशस्य शरीरात्मभावनिबन्धनत्वावश्यम्भावात् जगच्छरीरके परमात्मनि शरीरप्रतिसम्बन्धित्वरूपशारीरत्वोपपत्तेश्च चिद्विलक्षणचेतनकारणपरत्वमानन्दवल्ल्या इति गतिसामान्यन्यायात् सर्वेषामपि वेदान्तानां सूक्ष्मचिदचिद्विलक्षणकारणपरत्वमिति सिद्धान्तितम् ।

**अधिकरणसारावल्याम् - आनन्दाद्यधिकरण् (३-३-४)**

नानाशब्दादिभेदादिति खलु भिदुरां वक्ष्यति ब्रह्मविद्यां
रूपं विद्यान्तरस्य प्रकरणपठितं नान्यदन्यत्र योज्यम् ।
तस्मात् सत्यत्वपूर्वास्तदितरगुणवत् स्युर्व्यवस्थापनीयाः
मैवं ब्रह्मस्वरूपावगतिरिह यतस्तद्धि सर्वास्वपेक्ष्यम् ।। ३३४ ।।

पूर्वं त्रिभिरधिकरणैर्विद्यानां भेदाभेदचिन्ता कृता । तत्र च वैश्वानरविद्यायां वायुः प्राणः इति वायुः परमपुरुषप्राणत्वेन ध्येयतया परिकल्पितः । उद्गीथविद्यायां पुनरुद्गीथादिषु प्राणदृष्टिरूपत्वेन प्राणप्रसङ्गः कृतः । इतः पूर्वस्मिन्नधिकरणे साक्षात् प्राण एव निरूपितः। अतोऽपि च पूर्वेषामधिकरणानां परस्परसाङ्गत्यम् । ज्यैष्ठ्यश्रैष्ठ्यादि गुणोपपादनान्तर्भावेन वसिष्ठत्वादीनामप्यनुसन्धेयत्वमुक्तम् । तत्प्रसङ्गात् ब्रह्मणस्सर्वविद्यावेद्यत्वात् तत्स्वरूपनिरूपकधर्माणामानन्दादीनां तत्स्वरूपनिरूपणान्तर्भावेन अनुसन्धेयत्वमुच्यते इति सङ्गतिः । भाष्ये च सङ्गतिस्स्पष्टा दृश्यते । अत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोऽस्ति नेति विचार्यते इति । तदर्थविचारस्तु किमानन्दादयो गुणास्सर्वासु विद्यासूपसंहार्याः, उत यत्र श्रूयन्ते तत्रैवेति । किमानन्दादीनामैश्वर्यादिवत् गुण्यपृथक्त्वमात्रमेव, उत ब्रह्मस्वरूपवत् स्वरूपप्रतीत्यनुबन्धित्वम् अस्तीति । पूर्वपक्षाभिप्रायेण सङ्गतिं प्रदर्शयन् पूर्वपक्षं तावदाह नानाशब्देति । अयमर्थः पूर्वं गुणभेदाद्विद्याभेद इति भवतैवोक्तम्। तेन तत्र तत्र श्रुतानामन्येषां गुणानां व्यवस्थितिस्सिद्धा । तद्वदेव सत्यत्वादीनामपि धर्माणां ब्रह्मस्वरूपव्यतिरिक्तानां विद्याभेदेन व्यवस्थितिरिति पूर्वपक्षिणोऽभिप्रायः । उत्तरत्र सूत्रकारो नानाशब्दादिभेदात् इति गुणभेदाद् भिदुरां ब्रह्मविद्यां वक्ष्यति । तेन स्वप्रकरणपठितात् रूपादन्यत् विद्यान्तरस्य रूपम् अन्यत्र विद्यान्तरे न येज्यम्, उभयत्रापि पठितं चेत् उभयत्रापि योज्यमंस्तु नाम । इयमेव हि नीतिविदां मर्यादा । तस्मात् एवं न्यायमर्यादानिर्णीतत्वात् सत्यत्वपूर्वा गुणा अपि सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वान्यपि तदितरगुणवत् व्यवस्थापनीयास्स्युरिति पूर्वः पक्षः । तदिदमपाकरोति मैवमिति । अपाकरणप्रकारमेव विवृणोति - ब्रह्मेति । अयमर्थः - लोके हि वस्तूनां गुणा द्विविधाः, तत्र स्वरूपनिरूपकाः केचित्, निरूपितस्वरूपविशेषकाश्चापरे । यत् स्वरूपनिरूपकं तत् वस्तुस्वरूपप्रसङ्गे सर्वत्रान्वेति यथा घटप्रसङ्गे घटत्वम् । निरूपितस्वरूपविशेषकं तु रक्तत्वकृष्णत्वादिकं तत्र तत्र व्यवतिष्ठते । एवं स्वरूपनिरूपकत्वादानन्दादीनि सर्वत्रानुवर्तन्ते । परे पुनः प्रियशिरस्त्वादयस्तत्र तत्र व्यवतिष्ठन्ते इति सर्वविद्यासाधारण्यमेवानन्दादीनाम् । ब्रह्मस्वरूपेति । ब्रह्मस्वरूपाव-गतिर्यस्माद्भवति तत् स्वरूपवत् सर्वासु विद्यास्वपेक्षणीयमिति । अयमन्वारोहः । स्वरूपनिरूपकधर्मत्वात् स्वरूपप्रतिपत्त्यर्थमेवेति तत्त्वम् । (चिं.म.)

सत्यत्वं विश्वहेतौ बहुविधचिदचिद्विक्रियाजालहानेः
ज्ञानत्वं ज्ञातृभावात् स्वरबहुलतया स्वप्रकाशत्वतश्च ।
त्रिद्व्येकाभिस्तु सर्वं प्रमितमिह परिच्छित्तिभिर्ब्रह्मणोऽन्यत्
तस्यानन्त्यं वियोगात् तिसृभिरपि सदा निर्मलानन्दधाम्नः ।।

प्रसक्तं सत्यत्वादिकं स्वरूपेण विभज्य दर्शयति सत्यत्वमिति । सत्यत्वं विश्वहेतौ परस्मिन्ब्रह्मणि बहुविधचिदचिद्विक्रियाजालहानेर्भवति । ज्ञानत्वं ज्ञातृभावात् भवति । ज्ञानशब्दः कर्तर्यपि प्रयुज्यते । कृत्यल्युटो बहुलम् इति कर्तर्यपि ल्युट्प्रयोगसम्भवात् । नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः इति कर्तर्येव ल्युप्रयोगमाश्रित्य निर्वोढुं शक्यत्वात् । तद्गुणसारत्वात्तु तद्व्यपदेशः इति ज्ञानगुणसारे ज्ञानशब्दस्य प्रयोक्तुमपि शक्यत्वात् । स्वरूपस्य स्वप्रकाशत्वेन स्वप्रकाशस्वरूपवाचिनो ज्ञानशब्दस्य तत्रैव समन्वयाच्च । नन्वत्र कर्तृत्वेन भावत्वेन प्रत्ययभेदेनापि बहुधा निर्वाहे सति अर्थभेदात् स्वरभेदस्स्यादित्याशङ्कच तत्राप्युत्तरमाह - स्वरबहुलतयेति । स्वरस्य वैकल्पिकत्वात् इत्यर्थः । यत्र स्वरानुपपत्तिर्न विद्यते तत्र तथैव स्वीकार्यम् । यत्र पुनस्स्वरभेदोऽङ्गीकार्यः, तत्र बहुलं छन्दसि इति स्वरादीनां बहुलत्वेन न सङ्कटं किञ्चित् । अन्यथा कथं उणादयो बहुलम् इत्यादिव्यपदेशो भगवतः पाणिनेरपि । त्रिविधपरिच्छदाभावरूपं ब्रह्मणोऽनन्तत्वं वक्तुं परिच्छेदप्रकारमाह - त्रिद्व्येकाभिरिति । त्रिपरिच्छिन्ना घटादयः देशतः कालतो वस्तुतश्च परिच्छिन्नत्वात् । द्विपरिच्छिन्नः परमाणुः अणुत्वादनन्तर्यामित्वाच्च । एकपरिच्छिन्नः पुनः कालः विभुत्वे नित्यत्वे च सति केवलमनन्तर्यामित्वेन वस्तुपरिच्छिन्नत्वात् । ब्रह्मण आनन्त्यमप्याह - तस्येति । तिसृभिः परिच्छित्तिभिरयोगात् परब्रह्मणः आनन्त्यमिति । सदा निर्मलानन्दधाम्न इति वचनमानन्दस्य ब्रह्मगुणेषु प्राधान्यप्रख्यापनार्थम् । (चिं.म.)

उक्तं जन्मादिसूत्रे ननु निखिलजगद्धेतुता ब्रह्मलक्ष्म
स्यात्तेनैव स्वरूपावगतिरिह मुधा सत्यतादीति चेन्न ।
हेतोरीशस्य हेत्वन्तरगतविविधावद्यवर्गप्रसङ्गे
शङ्कारूढे क्रमेणेतरविभजनतस्तस्य साफल्यसिद्धेः ।। ३३६ ।।

ननु जन्मादिसूत्रे एव ब्रह्मणो लक्षणमुक्तम् । न च लक्षणं लक्षणत्वादेव समानासमानजातीयव्यावर्तकम्, अतस्तेनैव लक्षणेनालम्, किमर्थमिदं स्वरूपलक्षणमिति सत्यत्वादिकमुच्यते इत्याशङ्क्य प्रयोजनविशेषाभिधानेन परिहरति - उक्तमिति ।

अयमत्र शब्दान्वयः जन्मादिसूत्रे एव निखिलजगद्धेतुता ब्रह्मलक्ष्मेत्युक्तम् । नन्विति चोद्यं द्योतयति । तेनैव स्वरूपावगतिः स्यात् । सत्यत्वादिकमत्र निरर्थकमेव, सत्यादिशब्देन तदेव ब्रह्मोच्यते चेत् पौनरुक्त्यम् । अन्यच्चेत् तर्हि ब्रह्म न स्यात् । न हि ब्रह्मद्वितयमस्ति । लक्षणान्तरं चेत् कृतकरत्वादेव नैरर्थक्यम् । प्रयोजनविशेषोऽस्ति चेत् तत् किमिति विशदं प्रकाशयेति पराभिप्रायः । परिहरति नेति । तदेव विवृणोति हेतोरिति । ईश्वरस्य जगत्कारणत्वे प्रतिपन्ने कारणत्वाशङ्कितदोषपरिहारार्थं सत्यत्वादिकमभिधीयते इति भाष्यकारैरेव प्रागेवोक्तम् । अचित्संसृष्टजीवमुक्तनित्यानामनुक्रमेण व्यवच्छेदात् । तेन सर्वविलक्षणत्वेन प्रतिपन्नब्रह्मस्वरूपपरिशोधनार्थं सत्यादिवाक्यमपीति न नैरर्थक्यप्रसङ्गः। किञ्चास्मत्पक्षे ब्रह्मणि नानागुणोपादानमुपासनार्थम्, अथवा फलदशायामनुसन्धानार्थमिति सर्वसाफल्यसिद्धिः । (चिं.म.)

नन्वाध्यानं प्रियाद्यैरपि भवति शिरः पक्षपुच्छादिरूपैः
बाढं तत्र प्रियाद्यैस्तदवगतिरतस्ते तु सर्वानुवृत्ताः ।
पुच्छाद्यंशो निरंशे न भवति न च तद्दृष्टिरुत्कृष्टतत्त्वे
तस्माच्चित्याग्निरूपक्रमवदिह कृतं रूपणं ब्रह्मणि स्यात् ।। ३३७ ।।

ननु ब्रह्मध्यानार्थं सत्यत्वाद्यनुसन्धेयमित्युक्तं भवता, तर्हि ब्रह्मानुध्यानं प्रियशिरस्त्वाद्यनुसन्धानेनापि सिध्यतीत्याशङ्क्य वैषम्यं दर्शयति - नन्विति । अयमत्र शब्दार्थः - ब्रह्मानुध्यानं तस्य प्रियमेव शिरः इत्यादिभिरपि सिध्यतीति । प्रियशिरस्त्वादीनामपि ब्रह्मणि नियमेनानुसन्धानं स्यादित्याशङ्क्य तत्रार्धाङ्गीकारमाह - बाढमिति । अयमर्थः त्वदुक्ते किञ्चिदङ्गीक्रियते किञ्चित् च न, प्रियादीनां परमानन्दरूपब्रह्मान्तर्भावादङ्गीकारः । पक्षादीनां परिकल्पनामात्रत्वादनङ्गीकारश्च । तेन प्रियादीनामपि ब्रह्मस्वरूपावगतिहेतुत्वात् ते प्रियादयो गुणाः सर्वानुवृत्ताः । प्रियाद्यैस्तदवगतिः - प्रियमोदप्रमोदादिभिर्ब्रह्मस्वरूपावगतिरित्यर्थः । तर्हि पुच्छत्वादिकमपि ब्रह्मपुच्छं प्रतिष्ठा इत्यादिभिरधीतमनुसन्धेयं स्यादित्याशङ्क्यासम्भवान्नेत्याह - पुच्छाद्यंश इति । असम्भवमेवाह - निरंश इति । निरंशे ब्रह्मणि पुच्छाद्यंशो न भवतीत्यन्वयः । तर्हि ब्रह्मणि पुच्छत्वंदृष्टिस्स्यात्, दृष्टिविधौ ह्यविद्यमानस्य दर्शनं भूषणमेव स्यादित्याशङ्क्य परिहरति न चेति । अपकृष्टे ह्युत्कृष्टदृष्टिविधानं दृष्टिविधिः । यथा मनो ब्रह्मेत्युपासीत इत्यादौ । इह पुनर्ब्रह्मणि पुच्छत्वादिदृष्टिश्चेत् विपरीतमेव स्यात् । उत्कृष्टब्रह्मणि अपकृष्टपुच्छत्वादिदृष्टिविधेरयोगात् । तर्हि तस्य प्रियमेव शिरः इत्यादेः कथमिह परिकल्पनमित्याशङ्कायां तत्परिकल्पने

निर्वाहमाह तस्मादिति । एवं प्रियशिरस्त्वादीनां बुद्ध्यारोहार्थत्वोपपादनात् उत्तरत्राभिधीयमानचित्याग्निरूपक्रमवदिह परस्मिन् ब्रह्मणि शिरःप्रभृतिपरिकल्पनं समुचितमेव। (चिं.म.)

आनन्दत्वप्रधानं कतिचिदिह विदुस्सौत्रमानन्दशब्दं
धर्मानन्दाभिधानं तदुभयवचनं वेति पश्यन्ति केचित् ।
ज्ञानोक्तौ चैतदेवं तदितरसमता यावता स्यान्न शङ्क्या
तावद्धर्मानुवृत्तिर्बहुभजनपदे ब्रह्मणि स्थाप्यतेऽत्र ।। ३३८ ।।

अत्रानन्दादिशब्दानामर्थभेदं पक्षभेदेनोक्त्वा भाष्यकाराभिमतप्रकारेण स्वीयमर्थं निगमयति आनन्दत्वेति । केचिदत्र सौत्रमानन्दशब्दं स्वरूपस्य आनन्दरूपत्वप्रधानं वर्णयन्ति । अपरे पुनः धर्मानन्दाभिधानमाहुः । तद्गुणसारत्वादिति न्यायेनानन्दित्वमेवानन्दशब्दः प्राहेति । तथा तृतीयं पक्षमाह - तदुभयवचनमिति । आनन्दित्वमानन्दत्वञ्चोभयमपि आनन्दशब्दः कथयतीति । अत्र पक्षद्वयमपि विकल्पेनैककोटित्वेनोपात्तम् । अयमर्थः आनन्दत्वमेवोच्यते इत्येके । अपरे आनन्दित्वमेव यद्वा उभयमपीत्याहुः । यद्वा केचिच्छब्दावृत्त्या पक्षत्रयमपि त्रयाणां पक्ष इति पृथक् पृथक् पक्षत्वेन वाच्यम् । अत्रानन्दशब्दोक्तमर्यादां ज्ञानशब्देऽप्यतिदिशति ज्ञानोक्ताविति । ज्ञानत्वं ज्ञानित्वं तदुभयं वा ज्ञानशब्देनोच्यत इति । एवं पक्षभेदानुक्त्वा भाष्यकाराभिप्रेतं पक्षं वैशद्याय दर्शयति तदितरसमतेति । अयमर्थः ब्रह्मस्वरूपप्रतिपत्तिवेलायां ब्रह्मव्यतिरिक्तार्थसाम्यशङ्का यावता विशेषणेन न स्यात् तावद्धर्मानुवत्तिः तावद्विशेषणानि बहुभजनपदे सर्वब्रह्मविद्यावेद्ये परस्मिन् ब्रह्मणि अनुसन्धेयानीत्यत्र स्थाप्यते । तानि च सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वान्यनुक्रमेणोपयुक्ततया भाष्ये एव स्थापितानीति तत्रैव विस्तरेण द्रष्टव्यम् । (चिं.म.)

**नयमयूखमालिकायाम् - आनन्दाद्यधिकरणम् ।**

यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां कौषीतकिप्राणविद्यायां प्राप्तिस्तथा ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना न सिध्यति ते ब्रह्मविद्यासु सर्वास्वनुसन्धेया इत्यर्थः प्रतिपाद्यते । किमानन्दादयो गुणा यासु विद्यासु श्रूयन्ते तास्वेव प्रियशिरस्त्वैश्वर्यादिवद्व्यवतिष्ठन्ते उत सर्वासु विद्यासु उपसंहर्तव्या इति पूर्वः पक्षः । व्यवतिष्ठन्ते एव । उपसंहारे प्रमाणाभावात् ।

ब्रह्मगुणत्वेनोपसंहारे प्रियशिरस्त्वादीनामैश्वर्यौदार्यकारुण्यादिगुणानां चोपसंहार्यत्व-प्रसङ्गादिति। सिद्धान्तस्तु आनन्दादयस्सर्वासु विद्यासूपसंहर्तव्याः । सत्यत्वज्ञानत्वानन्दत्वा मलत्वानन्तत्वानां, सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि श्रुतिषु ब्रह्मस्वरूपधर्मत्वेन प्रतिपादितानां तत्प्रतीत्यनुबन्धित्वात् । न चैषां सर्वविद्यासु प्राप्तावुच्यमानायां प्रियशिरस्त्वादीनां प्राप्तिर्भवति । तेषां ब्रह्मगुणत्वाभावात् । अन्यथा ब्रह्मण आनन्दादिरूपत्ववत् प्रियशिरस्त्वादीनां प्राप्तिर्भवति । तेषां ब्रह्मगुणत्वाभावात् । अन्यथा ब्रह्मण आनन्दादिरूपत्ववत् प्रियादिरूपत्वस्याङ्गीकारे कालभेदेन वृद्धिह्रासभाजां प्रियादीनामनित्यत्वेन तस्याप्यनित्यत्वप्रसङ्गात् । ऐश्वर्यौदार्यादयो यद्यपि ब्रह्मगुणाः तदपृथक्सिद्धा भवन्ति तथाऽपि तं प्रतीत्यनुबन्धित्वाभावाद्ये यत्र श्रुतास्ते तत्रैव व्यवतिष्ठन्ते । प्रियादीनां ब्रह्मगुणत्वाभावेऽपि निरतिशयानन्दरूपतया ब्रह्मस्वरूपस्योपासनोपयोगि-बुध्यारोहार्थमानन्दमयशब्देन निरतिशयानन्दरूपतया प्रतिपन्नस्य तस्य लोकप्रसिद्धाः प्रियाद्यानन्दास्तदेकदेशत्वज्ञापनाय शिरस्त्वादिना रूपिताः । आनन्दमयश्च परमेव ब्रह्म नत्वन्नमयादिवदब्रह्मेत्येवमादिकं सर्वमानन्दमयाधिकरणे एव प्रपञ्चितमिह सूत्रभाष्यादिषु स्मारितम् ।।

**श्रीभाष्यप्रकाशिकायाम् - आनन्दाद्यधिकरणम् ।**

आनन्दादयः प्रधानस्येत्यत्र आनन्दत्वसत्यत्वज्ञानत्वानन्तत्वरूपगुणाः किं सर्वासु ब्रह्मविद्यासूपसंहार्याः ? किं वा यासु श्रुतास्तास्वेव? इति संशये क्वचिच्छ्रुतानां प्रमाणमन्तरेणान्यत्र यत्र क्वापि सर्वत्र वोपसंहारे तार्तीयन्यायमात्रोच्छेदप्रसङ्गात् आनन्दत्वादीनां विद्याविशेषसन्निहितानां सर्वविद्यार्थत्वग्राहकश्रुत्यादेरभावात् सन्निधेश्च तेषामानन्दवल्ल्यादिविद्याविशेषनियतत्वात् विद्यानां प्रकृतिविकृतिभावेनातिदेशाख्य-प्रमाणाभावाच्च सन्निहितविद्यामात्रशेषतया तत्रैवोपसंहारो न सर्वत्रेति प्राप्ते - प्रधानस्य गुणिनो ब्रह्मणस्सर्वविद्यानुयायित्वेन गुणानां प्रधानानुवर्तनशीलतया आनन्दत्वादिगुणानां सर्वविद्यानुयायित्वं सिध्यते ।

न चैवं प्रियशिरस्स्वादीनामपि तथात्वं स्यादिति वाच्यम् ? तेषामानन्दत्वादिवत् स्वरूपनिष्ठत्वाभावात् तेषां स्वरूपनिष्ठत्वे मूलमध्याग्रभेदभिन्नपरिमाणरूपस्थूलत्वादेर-स्थूलत्वादिश्रुतिविरुद्धस्य ब्रह्मणि प्रसङ्गात् ।

न च तर्हि शास्त्रे प्रियशिरस्त्वाद्याम्नानं व्यर्थं स्यादिति वाच्यम् । प्रयोजनान्तराभावात् ध्याननिर्वर्तनाय शास्त्रश्रवणदशायामपरिच्छिन्नस्य ब्रह्मणः प्रतीतिविषयत्वसम्पादनाय तथा परिच्छिद्योक्तेरर्थवत्त्वात् ।

न चैवमपि वात्सल्यादिगुणानामपि सर्वविद्यानुयायित्वं स्यात् गुण-प्रधानन्यायतौल्यादिति वाच्यम् । आनन्दत्वादिवत् वात्सल्यादीनामपि स्वरूपापृथक्सिद्धत्वाविशेषेऽपि तद्वत्स्वरूपनिरूपकत्वाभावेन सर्वविद्यान्वयाप्रसक्तेः । स्वरूपनिरूपकत्वं नामार्थसमानत्वमर्थप्रतीत्यनुबन्धित्वमर्थप्रतीतिकाले प्रतीयमानत्वनियमरूपम् ।

न चानन्दत्वादेरप्युक्तं स्वरूपनिरूपकत्वमसम्भवि । सत्यादिप्रत्येकप्रतीतौ मानाभावादिति वाच्यम् । तथाप्युपास्यस्वरूपप्रतीत्यनुबन्धित्वरूपं तन्निरूपकत्वमस्त्येव । कारणं तु ध्येयः इति तुशब्दाभिप्रेतकारणत्वशङ्कितदोषव्यावृत्तकारणीभूतब्रह्मस्वरूप मुपास्यमिति प्रतीयते । कारणत्वप्रसञ्जितदोषाश्च परिणामित्वरूपानृतत्वपरप्रकाशैक स्वभावत्वरूपजडत्वनियतदेशकालसम्बन्धित्वरूपपरिच्छिन्नत्वसापेक्षत्वरूपापरिपूर्णत्वात्मकाः तद्व्यावृत्तिरूपाः तदभावात्मकाः सत्यत्वादय इति अक्षरधियाम् (ब्र.सू.३-३-३३) इत्यत्रोपपादयिष्यते । सत्यत्वादीनाञ्च तादृशव्यावृत्तिरूपतया तद्विशिष्टोपास्यस्वरूपप्रतीतिकाले प्रतीतिनियमोऽस्ति । प्रत्येकं तत्तद्विशिष्टप्रतीतिकाले प्रतीयमानत्वाभावे तादृशयत्किञ्चिद्धर्म - विशिष्टस्वरूपाविषयकप्रतीत्यविषयत्वलक्षणप्रतीत्यनुबन्धित्व- रूपोपास्यनिरूपकत्वं सत्यत्वादीनां तु वात्सल्यादीनामित्यक्षरधियामित्यत्र निरूपयिष्यते । तस्मात् आनन्दादयस्सर्वविद्यानुयायिन इति सिद्धान्तितम् ।। इति ।

* * *

# ५. श्रीभाष्योद्धृत उपनिषन्मन्त्रसूचनी

| मन्त्राः | अधिकरणम् | संख्या |
|---|---|---|
| अग्नेरापः | तेजोऽधिकरणम् | २-३-२ |
| अथ तस्य भयं भवति | जिज्ञासाधिकरणम् | १-१-१ |
| अथर्वाङ्गिरस पुच्छम् | आनन्दमयाधिकरणम् | १-१-६ |
| अन्नं ब्रह्मेति व्यजानात् | आनन्दमयाधिकरणम् | १-१-६ |
| अन्नाद्वै प्रजाः प्रजायन्ते | आनन्दमयाधिकरणम् | १-१-६ |
| अन्योऽन्तर आत्मा आनन्दमयः | आनन्दमयाधिकरणम् | १-१-६ |
| अन्योऽन्तर आत्मा आनन्दमयः | कार्याख्यानाधिकरणम् | ३-३-५ |
| अन्योऽन्तर आत्मा प्राणमयः | कार्याख्यानाधिकरणम् | ३-३-५ |
| अन्योऽन्तर आत्मा विज्ञानमयः | आनन्दमयाधिकरणम् | १-१-६ |
| असद्वा इदमग्र आसीत् | कारणत्वाधिकरणम् | १-४-४ |
| असद्वा इदमग्र आसीत् | पूर्वविकल्पाधिकरणम् | ३-३-२० |
| असन्नेव स भवति | जिज्ञासाधिकरणम् | १-१-१ |
| असन्नेव स भवति | आनन्दमयाधिकरणम् | १-१-६ |
| आनन्दं ब्रह्मणो विद्वान् | जिज्ञासाधिकरणम् | १-१-१ |
| आनन्दं ब्रह्मणो विद्वान् | आनन्दमयाधिकरणम् | १-१-६ |
| आनन्दं ब्रह्मणो विद्वान् | ज्ञाधिकरणम् | २-३-४ |
| आनन्दमयमात्मानम् | आनन्दमयाधिकरणम् | १-१-६ |
| आनन्दो ब्रह्म | समन्वयाधिकरणम् | १-१-४ |
| आनन्दो ब्रह्म | इन्द्रप्राणाधिकरणम् | १-१-११ |
| आनन्दो ब्रह्म | प्रकृत्यधिकरणम् | १-४-७ |
| आनन्दो ब्रह्मेति व्यजानात् | आनन्दमयाधिकरणम् | १-१-६ |
| आनन्दो ब्रह्मेति व्यजानात् | ज्ञाधिकरणम् | २-३-५ |
| इदं पुच्छं प्रतिष्ठा | आनन्दमयाधिकरणम् | १-१-६ |
| इमान् लोकान् कामान्नी | जगद्व्यापारवर्जाधिकरणम् | ४-४-६ |

* * *

## ६. भगवन्नामानि

| | वल्ली | अनु.मं | | वल्ली | अनु.मं |
|---|---|---|---|---|---|
| विष्णुरुरुक्रमः | शिक्षा | १-१ | सुकृतम् | आनन्द | ७-१ |
| विश्वम् | शिक्षा | ४-१ | रसः | आनन्द | ७-१ |
| अमृतम् | शिक्षा | ४-१ | आकाश आनन्दः | आनन्द | ७-१ |
| ब्रह्म | शिक्षा | ४-१ | अदृश्यः | आनन्द | ७-२ |
| मनोमयः | शिक्षा | ६-१ | अनात्म्यः | आनन्द | ७-२ |
| पुरुषः | शिक्षा | ६-१ | अनिरुक्तः | आनन्द | ७-२ |
| अमृतः | शिक्षा | ६-१ | अनिलयनः | आनन्द | ७-२ |
| हिरण्मयः | शिक्षा | ६-१ | पुरुषादित्यवर्ती | आनन्द | ८-५ |
| इन्द्रः | शिक्षा | ६-१ | अन्नमयात्मा | आनन्द | ८-५ |
| सत्यात्मप्राणाः | शिक्षा | ६-१ | प्राणमयात्मा | आनन्द | ८-५ |
| सत्यम् | आनन्द | १-१ | मनोमयात्मा | आनन्द | ८-५ |
| ज्ञानम् | आनन्द | १-१ | विज्ञानमयात्मा | आनन्द | ८-५ |
| अनन्तम् | आनन्द | १-१ | सर्वभूतजनिजीवन | भृगु | १-१ |
| ब्रह्म | शिक्षा | १-१ | परमव्योम | भृगु | ६-१ |
| विपश्चित् | आनन्द | १-१ | आनन्दः | भृगु | ६-१ |
| आत्मा | आनन्द | ५-२ | अन्नम् | भृगु | ७-१ |
| आनन्दमयः | शिक्षा | ५-२ | अन्नादः | भृगु | ७-१ |
| शारीरः | आनन्द | ४-१ | प्रथमजाः | भृगु | १०-६ |
| असत् | आनन्द | ७-१ | अमृतस्य नाभिः | भृगु | १०-६ |
| सत् | आनन्द | ७-१ | | | |

## ७. ऋषिनामानि

| | |
|---|---|
| त्रिशङ्कुः | भृगुः वारुणिः |
| नाको मौद्गल्यः | माहाचमस्यः |
| पौरुशिष्टिः | राथीतरः |
| प्राचीनयोग्यः | वरुणः |

## ८. विशेषशब्दार्थाः

**अकामहतः** - समस्तसांसारिकभोगानुपहतः । (प्र.)

**अक्षितः** - अक्षयः । षड्भावविकारशून्यः । (प्र.) अनपक्षयः (कू.भा.)

**अग्नयः** आहवनीयादयः । (कू.भा.)

**अध्यायिकः** अध्ययनवान् । अध्यापकः । (प्र.)

**अनन्तम्** - देशकालवस्तुपरिच्छेदरहितम् । (प्र.)

**अनिरुक्तम्** जातिगुणादिशून्यं चेतनजातम् । (प्र.)

कल्पनापञ्चकप्रत्यनीकं चिद्वस्तु । (कू.भा.)

**अनिलयनम्** आश्रितमचेतनजातम् । (प्र.)

**अनुप्रवेशः** गोजठरगतवत्से गोत्वादिवत् सर्वव्याप्तस्य ब्रह्मणः प्रत्येकं सर्ववस्तुषु पुष्कलप्रतीत्यर्हस्थितिविशेषः । (प्र.)

अनुवृत्ततया प्रवेशः । सर्वानुकूलतया प्रवेशो वा । तत्तत्स्वरूपस्थिति-प्रवृत्तिबुद्धीनामानुगुण्याय अस्य प्रवेशः, प्रतिवस्तुप्रवेशो वा, तत्तत्कर्मेच्छानुगुण्येन प्रवेशो वा । (कू.भा.)

**अमृतः** - असंसारी । कमनीयविग्रहयुक्तः परमात्मा । मरणशून्यः (प्र.)

जननमरणादिधर्मरहितः । (कू.भा.)

**अर्यमा** आदित्यविशेष । इयर्ति - अस्ताचलं गच्छतीति - अर्यमा । (कू.भा.)

**अलूक्षाः** अरूक्षा......क्रोधलोभादिरहिताः । अरूक्षाः अक्रूरमतयः, अलुब्धाः अपरुषवक्तारो वा । (कू.भा.)

रूक्षप्रकृतिभिन्ना विगतक्रोधादयः । (आ.भा.)

**अविज्ञानम्** जडस्वरूपम् ।

**अहर्जरः** वृद्धः । अहोभिर्जरा यस्य सः पुरुषः अहर्जरः । यस्य कालेन जरा भवति, न व्याध्यादिना, सोऽहर्जरः । यद्वा अहानि जीर्यन्ति यत्रेति अहर्जरः संवत्सरः, सूर्यो वा । (प्र.)

अहानि जरयतीत्यहर्जरः संवत्सरः । (कू.भा.)

**आजानजाः** आजाने देवलोके जाताः । स्मार्तकर्मविशेषतो देवस्थानेषु जाताः । (प्र.)

**आदेशः** - शासनम् । इदं कुरु, इदं माकार्षीरिति विधिनिषेधरूपं रहसि अनुशासनम् । (प्र.)

वेददेवाज्ञाविधिः । (कू.भा.)

**आनन्दः** सुखातिशयः । (प्र. )
भोगसुखातिशयनिर्वृत्तिः । (कू.भा.)
**आयुक्ताः** - आसमन्तात् युक्ताः । लौकिकेष्वपि कुशलाः । (प्र.)
लौकिकार्थेष्वपि परिपक्कबुद्धयः । (आ.भा.)
**आशिष्ठः** - आशुतरक्रियः यद्वा अशनक्षमः, अरोग इत्यर्थः । यद्वा आशीर्वाद-विषयभूतः ।
सर्वानुरञ्जक इत्यर्थः । (प्र.)
पृथुकीर्तिः । आशितॄणामत्यन्तसमर्थः । यद्वा आशिष्ठः आशुतमः । (कू.भा.)
**इन्द्रः** - परमैश्वर्यशाली प्रणवः । (प्र.)
वर्षादिप्रदानेनाढ्येतॄणां पोषकः । (कू.भा.)
**उपदेशः** पित्रादिहितैषिवचनम् । (प्र.)
पुत्रादिभ्यः पित्रादीनां वचनम् । (कू.भा.)
**ऋतम्** सूनृता वाणी । (प्र.)
**ऋतत्वम्** - अपभ्रंशराहित्यलक्षणं शब्दसत्यत्वम् । (प्र.)
**कर्मदेवाः** - अग्निहोत्रादिकर्मणा अग्नीन्द्रादिसायुज्यं प्राप्ताः । (प्र.)
**कुशलम्** देवार्चनादिमङ्गलाचरणम् । (प्र.)
**चिरलोकः** चिरस्थायी लोकः । (प्र.)
**ज्ञानम्** - नित्यासङ्कुचितज्ञानैकाकारम् । (प्र.)
**तपः** - कायशोषणम् । (प्र.)
कृच्छ्रादिविहितकर्मानुष्ठानं, यद्वा कामत्यागस्तपस्स्मृतं इति श्रीभागवते । (कू.भा.)
**तपः** - कायशोषणलक्षणं कृच्छ्रचान्द्रायणादिकम् । (आ.भा.)
**त्यत्** - त्यजति सदा पूर्वपूर्वाकारमिति सततविकारास्पदमचिद्वस्तु । (कू.भा.)
**दमः** - बाह्येन्द्रियजयः । (प्र.)
शम हृन्निष्ठताबुद्धिः दम इन्द्रियसंयमः इति श्रीभागवते । (कू.भा.)
**देवगन्धर्वाः** - अन्तरिक्षलोकवासिनः । (प्र.)
**द्रढिष्ठः** - दृढतरः । व्यवस्थितस्वभावः । (प्र.)
**धर्मकामाः** - अकामहताः अदाम्भिकाः । (कू.भा.)
**निरुक्तम्** - जातिगुणक्रियावत्तया जातिगुणाद्यभिधायिशब्दवाच्यमचेतनम् ।
जातिगुणक्रियावयवमुखतश्शब्दवाच्यमचिद्वस्तु । (कू.भा.)

| | | |
|---|---|---|
| **निलयनम्** | - | अचेतनवर्गाधारभूतं चेतनजातम् । (प्र.)<br>जडस्याश्रयभूतं चिद्वस्तु । (कू.भा.) |
| **परिमरः** | - | विरोधिविनाशकः । (कू.भा.) परितो म्रियन्ते अस्मिन् । |
| **पुरुषः** | | देहः । (प्र.) |
| **प्रजननः** | - | प्रजननम् । ऋतुकालाभिगमनम् । (प्र.)<br>प्रजननं - भूयो भूयो जननं, पौत्रश्चोत्पाद्यः इति पौत्रेणानन्त्यमश्नुते इत्यादिश्रुतिसिद्धम्। (कू.भा.) |
| **प्रमोदः** | | लब्धस्योपयोगजन्यं सुखम् । (प्र.)<br>लब्धस्याप्रतिहतसुरक्षिततत्वतृप्तिः । दर्शनजन्यः सुखविशेष । (कू.भा.) |
| **प्रवचनम्** | | अध्यापनम् । (प्र.)<br>ब्रह्मयज्ञो वा । (कू.भा.) |
| **प्राणः** | - | मुखनासिकानिष्क्रमणो वायुः । (कू.भा.) |
| **प्रियम्** | - | शब्दवस्तुदर्शनजन्यं सुखम् । (प्र.)<br>दर्शनमात्रेण हर्षकरसुन्दरतरसन्निवेशविशेषवैचित्र्यसाक्षात्कार-सुखम् । (कू.भा.) |
| **बलिष्ठः** | | मनोबलवान् । शरीरमानससर्वविधबलवान् । (प्र.)<br>बलवत्तमः । सर्वशत्रुनिबर्हणश्च । (कू.भा.) |
| **मज्ञा** | | अस्थ्यन्तरस्थितं जलम् । (कू.भा.) |
| **मनुष्यगन्धर्वाः** | | ये मनुष्या एव सन्तः कर्मविशेषेण विद्याविशेषेण वा अन्तर्धानादि-शक्त्युपेततया गन्धर्वत्वं प्राप्ताः । (प्र.) |
| **मानुषम्** | | मृतमनुष्योद्देशेनानुष्ठीयमानं श्राद्धादिकम् ; भगवदाराधनम् । नृणामयं परो धर्मः सर्वेषां समुदाहृतः । त्रिंशल्लक्षणवान् साक्षात् सर्वात्मा येन तुष्यति' ।। इति स्मरणात् । मनुष्यव्यापारसाध्यं भगवत्प्रणाम - स्तवन-यजन-भजन-कीर्तनादिकं लौकिकास्संव्यवहाराश्च तच्च यथा-प्राप्तमनुष्ठेयम् । (कू.भा.) |
| **मित्रः** | - | प्राणवृत्तिरह्नश्चाभिमानी देवः सूर्यः । (आ.भा.) |
| **मोदः** | | इष्टवस्तुलाभजन्यं सुखम् । (प्र.)<br>साक्षात्कृतस्य लब्ध्यपेक्षयान्तरवाप्तिजनिताह्लादो मोदः । (कू.भा.) |

**युक्ताः** वेदशास्त्रेषु अभिरताः । (प्र.)
अभियुक्ताः । (कू.भा.)
श्रुतिस्मृतिष्वभियोगवन्तः श्रुतिस्मृत्यर्थपरिभावनपराः । (आ.भा.)

**वरुणः** - रात्रेरपानवृत्तेश्चाभिमानी देवः । (आ.भा.)

**वाजिनी** - नित्यविभूतिः । (कू.भा.)

**विज्ञानम्** अजडस्वरूपम् । (प्र.)

**विज्ञानपतिः** - स्वसङ्कल्पनिष्पाद्यसर्वेन्द्रियः - करणनिरपेक्षज्ञान इति वा । (प्र.)
करतलामलकवत् सदा स्वज्ञानेन सर्वमनुसन्दधाति । (कू.भा.)

**विपश्चित्त्वम्** - निरुपाधिकानन्याधीनासङ्कुचितसर्वविषयकज्ञानवत्त्वम् । (प्र.)
विविधं पश्यच्चित्वं हि विपश्चित्वम् । (कू.भा.)

**विश्वरूपः** विश्वं शब्दजातं अनेन रूप्यते विस्तीर्यते इति । (कू.भा.)

**वृत्तम्** - शिष्टाचारमात्रप्रमाणकं होलाकादि । (प्र.)

**वेदोपनिषत्** - वेदानां रहस्योपदेशः । (प्र.)
वेदरहस्यं वेदार्थ इति यावत् । (कू.भा.)

**शमः** - अन्तरिन्द्रियजयः । (प्र.)

**शान्तिसमृद्धम्** - ऐश्वर्यादिनिमित्तोद्धर्षाभावः शान्तिः तया समृद्धम् । यद्वा शान्तिः उपशमः, शान्तिश्चासौ समृद्धं च शान्तिसमृद्धम्, शान्त्या वा समृद्धवत् तदुपलक्ष्यते इति शान्तिंसमृद्धम् । (कू.भा.)

**शारीरः** - शरीरप्रतिसंबन्धी आत्मा । शरीरसंबन्धी । (कू.भा.)

**शिक्षा** - शिक्ष्यन्ते - ज्ञानेन निश्चीयन्ते, वर्णादयः अनेयेति शिक्षा । (कू.भा.)
शिक्ष्यते स्वरवर्णाद्युच्चारणपद्धतिर्ज्ञायतेऽनया सा शिक्षा । वेदस्य षडङ्गान्तर्गतं शिक्षाख्यमेकमङ्गभूतं शास्त्रम् । (आ.भा.)

**श्रीः** - मुखशोभा । (प्र.)

**श्रोत्रियः** - ब्रह्मनिष्ठः । (प्र.)

**श्लोककृत्** - श्लाघनीयजगद्रक्षणादिकृत् । (प्र.)

**संमर्शिनः** - विचारकुशलाः । (प्र.)

**संवित्** सङ्कल्पः । (प्र.)

**सत्** - क्षयादिविकाररहिततया सदास्तीति प्रतीत्यर्हं चिद्वस्तु । (कू.भा.)

**सत्यत्वम्** यथावस्थितार्थकथनरूपमर्थ सत्यत्वम् । (प्र.)

**सत्यम्** - निरुपाधिकसत्तायोगि । (प्र.)

**सत्यम्** - समदर्शनम् । ऋतं तु सूनृतावाणी सत्यं तु समदर्शनम्' इत्युक्तेः । (प्र.)

सत्यवदनम् । (कू.भा.)

**सन्तानः** संहिता । अथ चतस्त्रः संहिताः । पदसंहिता, अक्षरसंहिता, वर्णसंहिता, अङ्गसंहिता चेति । (कू.भा.)

**स्नावा** बन्धनी सिरा । (कू.भा.)

**स्वाध्यायः** - वेदाध्ययनम्। (प्र.)

**स्वाराज्यम्** अकर्मवश्यत्वम् । (प्र.)

अकर्मवश्यत्वं-भगवत्कैङ्कर्यप्रतिबन्धकनिवृत्तिरूपम् । (कू.भा.)

* * *

## ९. भाष्यकर्तॄणां चारित्रम्

**भारद्वाजरामानुजार्यः -**

अयम् आन्ध्रप्रदेशे विजयवाडाप्रान्तवर्तिमङ्गलगिरिनामकक्षेत्रे वसन् श्रीवैष्णवसम्प्रदायप्रवर्तकः आसीत् । नियोगिब्राह्मणाः एतद्वंशीयाः वैष्णवेष्टिसंस्कारेण भगवद्रामानुजसम्प्रदायान्तःपातिनः संवृत्ताः इति प्रसिद्धिः । पूर्वं तुर्लपाटि इति वंशनाम्ना प्रसिद्धानां एतदीयानां अनन्तरं श्रीरामानुजसिद्धान्तानुवृत्तिवशात् श्रीभाष्यम् इति वंशनामप्राप्तिरिति ज्ञायते । एवं एषः श्रीभाष्यंरामानुजार्यः इति च प्रसिद्ध्यति । जगन्नाथार्यस्य पुत्रोऽयं स्ववंशीयादेव श्रीभाष्यं नृसिह्मार्यात् विद्यामध्यगीष्ट । स्वकुलगुरोः श्रीवत्सगोत्रोद्भवात् नल्लान् चक्रवर्ति श्रीनिवासाचार्यवर्यात् पञ्चसंस्कारानविन्दत । दशोपनिषदामपि प्राचीनविशिष्टाद्धैतभाष्यानुसारेण प्रतिपदार्थदीपिकाख्यां सङ्ग्रहटीकां विरचितवानसौ औपनिषदर्थजिघृक्षूणां बालानां मार्गप्रदर्शको भवतीति अभिनन्द्यमिदम् । एतत्कर्तृकाः ग्रन्थाः स्वेनैव ईशावास्यटीकादौ एवं निर्दिष्टाः १) परमवैदिकसिद्धान्त रत्नाकरः । २) सर्ववेदान्तसारार्थः ३) शिष्टाद्वैतिजनाचारः ४) विशिष्टश्रीवैष्णवाचारः ५) सीताकल्याणसर्गव्याख्यानम् ६) श्रीरामजननश्लोकव्याख्या ७) श्रीकृष्णजननश्लोकव्याख्या ८) विष्णुपुराणप्रथमश्लोकव्याख्या ९) भावार्थविधिः (ज्यौतिषः) १०) आन्ध्र-देशीयविप्रचरित्रम् ११) उपमावादः १२) दशोपनिषद्व्याख्या १३) पञ्चमोपायबोधिका (आदर्शः) प्रायः सर्वे ते ग्रन्थाः मुद्रिताः । परमवैदिकसिद्धान्तरत्नाकराख्यग्रन्थस्तु श्रीवैष्णवसम्प्रदायाचारादिप्रबोधकः प्रामाणिकः प्रथते । अस्य जीवनकालस्तु क्रिस्त (१७९०) प्रभृति (१८८०) पर्यन्तमिति ज्ञायते ।।

**कूरनारायणमुनिः -**

श्रीमति अहोबिलमठे तत्पीठस्थानम् अलङ्कुर्वाणौ द्वौ आचार्यौ श्रीवत्साङ्कनारायण-मुनिशब्देन व्यपदिष्टौ विराजेते । तत्रैकः आचार्यः (क्रिस्त) १७ शताब्द्याम् अवर्तत । अपरस्तु १८ शताब्द्याम् अवर्तत । द्वावपि श्रीवत्सगोत्रोद्भवौ । विविधग्रन्थनिर्माणचणौ च । नाम्नः आदौ श्रीवत्साङ्कः इति निर्देशात् श्रीवत्सचिह्नमिश्रगुरुवरवंशसम्भवत्वभ्रमेण कूरनारायणमुनित्वेन व्यपदिष्टौ इमौ इति सम्भाव्यते ।

श्रीसुदर्शनशतककर्ता कूरनारायणमुनिस्तु अन्य एव श्रीवेदान्तदेशिकगुरोरपि प्राचीनः । न तु सः ईशावास्येत्यादिउपनिषद्भाष्यकर्ता प्रकृतः । यतः श्रीदेशिकभाष्यमनुसृत्य बालानामपि सुबोधार्थं मयेयं ईशावास्यव्याख्या लिख्यते इति ईशावास्यभाष्ये आदौ उल्लिखितम् ।

अतः पूर्वोक्तयोः श्रीवत्साङ्कमुन्योः अन्यतरेण एतद्भाष्यं प्राणायीति विमर्शकनिर्णयः । एवं एतद्भाष्यकर्त्रैव ईशामाण्डूक्ययोरपि भाष्यं व्यरचि । मुद्रितपूर्वं प्रसिद्धं च तदपि । प्रसन्ना अस्य शैली मनोहरा सिद्धान्तग्रन्थिविमोचनक्षमा च पाठकानां विशिष्टाद्वैतवेदान्तार्थ-निरूपणपटीयसी ।।

**श्रीरङ्गरामानुजमुनिः -**

चतुष्षष्ठिप्रबन्धनिर्माता दशोपनिषद्भाष्यकारः इति अस्य महती प्रशस्तिः । विशिष्टाद्वैतमतरीत्या उपनिषदां भाष्यमनेन विरचितम् इति अस्य वैभवं निरतिशयम् । जन्मस्थानं तिरुपतिः, लक्ष्मीपुरंशाखीय नल्लान् वंश्यः, छन्दोगः, श्रीवत्सगोत्रोद्भवः अयम् । विद्यागुरुः वात्स्य अनन्ताचार्यः, परमगुरुस्तावत् ताताचार्यः । सन्न्यासदीक्षागुरुस्तावत् श्रीज्ञानाब्धिब्रह्मतन्त्रपरकालमुनिः । पूर्वाश्रमस्य नाम तावत् वरदविष्ण्वाचार्यः । सोऽयं आचार्यः केवलं भिक्षाकाले श्रीदेवाधिराजदिव्यालयसन्निधिवीथीं प्रति गच्छन् अन्यदा श्रीदेशिक-दीपप्रकाशमन्दिरसमीपे आश्रमे वसन् विरचितवेदान्तग्रन्थनिवहः महाविरक्त इति वदन्ति । अस्य जीवनकालस्तु (१६७०-१७५०) इति ज्ञायते । अस्य ग्रन्थेषु अप्पय्यदीक्षितः, दोड्डयाचार्यश्च उल्लेखितौ । दीपप्रकाशसन्निधौ ग्रन्थरचनानिर्माणकाले कदाचित् महाचार्यः एतस्य सविधमेत्य अहो मकरन्दास्वादमहिमा इति शश्लाघ इति, तच्छ्रुत्वा श्रीमद्भिः मक्षिकासु भर्त्सितासु मकरन्दास्वादे कोऽन्तराय इत्यनेन प्रयुक्तमिति किंवदन्ती एतान् श्लाघितवन्तः दोड्डयाचार्याः न, किन्तु सुरपुरं वेङ्कटाचार्याः इति केचिद्वदन्ति ।

अस्य सम्प्रत्युपलभ्यमानाः कृतयस्तावत्

१) केन २) कठ ३) प्रश्न ४) मुण्डक ५) माण्डूक्य ६) तैत्तिरीय ७) ऐतरेय ८) छान्दोग्य ९) बृहदारण्यक १०) मन्त्रिका ११) कौषीतकी १३) श्वेताश्वतर १४) अग्निरहस्यानां भाष्याणि १५) श्रीभाष्यव्याख्या मूलभावप्रकाशिका १६) श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका १७) विषयवाक्यदीपिका १८) शारीरकशास्त्रार्थदीपिका १९) न्यायसिद्धाञ्जनटीका २०) तिरुप्पल्लाण्डु २१) तिरुप्पावै २२) तिरुवाय्मोळि इति द्रमिडप्रबन्धानां संस्कृतानुवादश्च । इमाः मुद्रिताः ।

अमुद्रिताः कृतयः

१) कण्णिनुण्शिरुत्ताम्बुव्याख्या २) रामानुजसिद्धान्तसारसङ्ग्रहः ३) पुरुषसूक्त-भाष्यम् ४) तत्त्वनिष्कर्षः ५) महोपनिषद्भाष्यम् ६) रहस्यत्रयव्याख्या तात्पर्यकौमुदी ७) प्रतितन्त्रपरिष्क्रिया ८) ईशावास्यव्याख्या-भावदीपिका । अन्यास्तु कृतयः काः इत्येतदेषणीयम्[१] ।।

**श्रीरामानन्दमुनिः -**

ग्रन्थेऽत्र मुद्रितस्य आनन्दभाष्यस्य सरससरलशैलीसम्पन्नस्य लेखकोऽयमाचार्यः प्रयागक्षेत्रे लब्धजन्मा, काश्यामासीत् अध्यात्मतत्त्वप्रवचनं कुर्वाणः, इति ज्ञायते । क्रिस्तशताब्देषु १३००-१५०० मध्यकाले अस्य स्थितिरिति सम्भाव्यते । श्रीरामचन्द्रस्य अपरावतार इति शिष्यैः सम्भावितवैभवोऽयं गुरुवरः बोधायनश्रीवैष्णवसम्प्रदायानुसारीति प्रसिद्धः । विद्यागुरुः सन्न्यासाश्रमप्रदश्च अस्य श्रीराघवानन्दयतिवरः । एतत्सम्प्रदायानिष्ठाः श्रीराममेव परं दैवं मन्यमाना आराधयन्ति । वादीभपञ्चानन इति, वैराग्यवारिधिरिति च अयं विपुलां प्रशस्तिमविन्दत ।

प्रसिद्धाः गोस्वामितुलसीदासः, मीराबाई इत्याद्याः बहवोऽस्य भक्ताग्रगण्याः शिष्याः । सर्वं भारतवर्षं अटाट्यमानोऽसौ श्रीवैष्णवसंप्रदायप्रचारं भूयसा अवर्धयत । दशोपनिषदामपि भाष्यं प्रणीतवानेषः ब्रह्मसूत्राणां भगवद्गीतायाश्च भाष्यमरचयत् यदद्य तत्सम्प्रदायस्थैः परमप्रमाणतया अधीयते ।।

**श्रीगोपालानन्दयोगी -**

इडारदेशे टोरडाग्रामे शुक्लयजुर्वेदीयमाध्यन्दिनशाखायां ब्राह्मणकुले अस्य महामुनेः योगिराजस्य जन्म आसीत् । पूर्वाश्रमस्य नाम खुशालभट्टः इति । कुशलाम्बामुक्तारामौ अस्य पितरौ । सकलशास्त्रपारङ्गतः प्राज्ञोऽयम्; स्वामिसहजानन्दसकाशात् लब्धसन्न्यासदीक्षः । स्वामिनारायणसेवाहेवाकस्सन् वडतालक्षेत्रे समाधिम् अविन्दत । निसर्गत एव विरक्तोऽयम् ।

---

१. आधारग्रन्थाः - १) केनाद्युपनिषद्भाष्यम् - उत्तमूर वीरराघवाचार्यसम्पादितम्, उभयवेदान्तग्रन्थमाला २५ नाथमुनि वीथि, ति. नगर मद्रास् १९७२। २) शारीरकशास्त्रार्थदीपिका - व.न. कृष्णमाचार्यसम्पादिता, कुम्भघोण १९१५ ।

